॥ श्रीः ॥

शिवाभ्यां नमः ।

# श्री मृगेन्द्रम् ।

## कामिकोपागमम् ।

---

विद्यायोगपादद्वयमिलितं
श्रीभट्टनारायणकण्ठविरचितया वृत्त्या
तद्व्याख्ययाऽघोरशिवाचार्यविरचितया
दीपिकया चालङ्कृतम् ।

एतच्च
कृष्णतटाकाभिजनानां शास्त्ररत्नाकरादिबिरुदाङ्कितानां
श्रीकृष्णशास्त्रिणामन्तेवासिना
शिवागमसिद्धान्तपरिपालनसंघविदुषा
ना. कृष्णशास्त्रिणा
व्याकरणशिरोमणि—के. एम्. सुब्रह्मण्यशास्त्रिणा च
यथामति संशोध्य

देवकोट्टै शिवागमसिद्धान्तपरिपालनसंघाध्यक्षैः
अनन्तशयनस्थ "भास्कर"मुद्रणालये
मुद्रितं सान्द्रजयतेतराम् ।

1928.

---

சிவாகமசித்தாந்தபரிபாலனசங்க வெளியீடு எண் 12.

உ

சிவமயம்.

# ஸ்ரீமிருகேந்திர ஆகமம்.

இது

## ஸ்ரீ காமிக ஆகமத்தின் உபாகமம்.

வித்தியாபாதம் யோகபாதங்களுடன் கூடியது.

ஸ்ரீபட்டநாராயணகண்டர் இயற்றிய விருத்தியுடனும்

ஸ்ரீ அகோரசிவாசாரியரியற்றிய தீபிகையுடனும் கூடியது.

இவை,

மயிலாப்பூர் சம்ஸ்கிருத கலாசாலை பிரின்ஸிபால்

கருங்குளம் பிரம்மஸ்ரீ கிருஷ்ணசாஸ்திரிகளின்

மாணக்கரும்

சிவாகம சித்தாந்த பரிபாலனசங்க வித்வானுமாகிய

நா. கிருஷ்ணசாஸ்திரிகளாலும்

வியாகரணசிரோமணி K. M. சுப்ரமணிய சாஸ்திரிகளாலும்

கூடியவாறு பரிசோதித்து

தேவகோட்டை சிவாகமசித்தாந்த பரிபாலன சங்கத்தாரால்

திருவனந்தபுரம் 'பாஸ்கர' பிரஸில்

அச்சிடப்பெற்றன.

விலை.] 1928. [ரூ 5.

॥ श्रीः ॥

शिवाभ्यां नमः.

# विज्ञप्तिः ।

श्रीमान् श्रीकण्ठनाथस्सकलतनुभृतस्तारयन् दुर्भवाब्धेः
देवाधीशाय वृत्रप्रशमनजनितब्रह्महत्याघशान्त्यै ।
कृत्वा यस्सिंहरूपं नियममुपजुषे कामिकं ज्ञानरूपं
दत्त्वा भाति प्रभूयात् स नमितशिरसां भूयसे मङ्गलाय ॥

भो भोः पण्डितमणय-
स्सादरं वीतमत्सराः ।
शैवागमविधानज्ञा-
श्शिवाराधनतत्पराः ॥

अस्मदभ्यर्थनां काञ्चित्
कर्णे कुरुत सादरम् ।
दोषजालसमाच्छन्नं
गुणं नीहारसंवृतम् ॥

आत्मानमिव संवेद्य
नन्दन्तु विबुधा यतः ॥

भवतां विदितं लोके पुरुषार्थचतुष्टयम् ।
धर्मार्थकाममोक्षाख्यं तेषु मोक्षः परस्स्मृतः ॥
श्रुत्यागमाभ्यामन्येषामनित्यत्वं प्रसाधितम् ।
अक्षय्यमिति वेदोऽपि तेषां नित्यत्वबोधकः ।
तथाप्यनुभवाक्रान्तानित्यत्वश्रुतिबाधितः ।

श्रुत्यागमाभ्यां नित्यत्वं मोक्षस्यैवेति निश्चितम् ।
सिद्धान्ते शिवतादात्म्यव्यक्तिरेव स च स्मृतः ॥
मतभेदेन भिन्नानामन्येषां च परोऽप्यसौ ।
न प्रत्यक्षान्नानुमानाच्छब्दादेवाधिगम्यते ।
आप्तेनोच्चरितस्यैव प्रामाण्यं नेतरस्य तु ।
आप्तः परशिवो नान्य इत्यागमविजृम्भितम् ।
रत्नत्रयं च नौतीशं शिव एवाप्तिमानिति ।
तदुक्ता आगमाह्येते मोक्षार्थप्रतिबोधकाः ।
"आप्तोक्तिरागमस्सोपी"त्येवं पौष्करसंहिता ।
नादरूपतया पूर्वं शिवेनाविष्कृतः पुनः ।
सदाशिवादिरूपेण तेनैवासौ पृथक् पृथक् ॥
कामिकादिप्रभेदेन शिष्येभ्यस्सम्प्रकाशितः ।
अष्टाविंशतिसंख्योऽसौ सिद्धान्त इति संज्ञितः ।
शैवरौद्रप्रभिन्नोसौ शैवो हि दशधास्मृतः ।
कामिकं योगजं वाथ तथा चिन्त्यश्च कारणम् ।
अजितं दीप्तसूक्ष्मौ च सहस्रश्च तथांशुमान् ।
सुप्रभेदस्तथाह्येते शैवास्सम्परिकीर्तिताः ।
प्रणवादिदशभ्यश्च शिवेभ्यः परिकीर्तिताः ।
विजयाद्या वातुळान्ता रौद्रा अष्टादशस्मृताः ।
अनादिरुद्रप्रमुखरुद्रेभ्यः परिकीर्तिताः ।
सप्ताधिकं च द्विशतं एतेषामुपभेदकम् ।
कामिकस्य प्रधानस्य ह्युपभेदास्त्रयस्स्मृताः ॥
नारसिंहं च वक्रारं भैरवोत्तरमेव च ।
नारसिंहाख्यमेवैतन्मृगेन्द्रामिति कथ्यते ।

वृत्रहत्याघसंस्पर्शदुःखार्तस्सुरनायकः ।
अस्तौषीत् श्रीपतिं नाम्नां सहस्रेण दयानिधिम् ।
नारसिंहं च कवचं विष्णुः प्रीतस्तदा ददौ ।
एतत्सन्नद्धदेहस्त्वं कुरुष्व तप उत्तमम् ।
सहस्रवत्सरान्ते ते साम्बोऽभीष्टं प्रदास्यति ।
इत्युक्त्वान्तर्दधे विष्णुः इन्द्रेण च तथाकृतम् ।
ततः प्रसन्नो भगवानुमया सह शङ्करः ।
श्रीमत्कामिकसंज्ञं च ज्ञानं तस्मै ह्युपादिशत् ।
मृगेन्द्ररूपिणेन्द्रेण श्रुतत्वात्तदभिख्यकम् ।
भरद्वाजोऽपि देवेशादिदं ज्ञानं उपागमत् ।
हारीतनामा तच्छिष्यस्तस्मात्प्राप महामुनिः ।
स च स्वशिष्यवर्गाय प्राहेति गुरुसन्ततिः ।

एतादृशं चैतन्मृगेन्द्रसंज्ञकं ग्रन्थरत्नं ज्ञानक्रियायोगचर्याख्य-पादचतुष्टयसंयुक्तं विराजतेतराम् । सूत्रवद्गूढार्थकस्यैतस्य वृत्तिकृतः श्रीमन्तो भट्टनारायणकण्ठाचार्याः । एते चाचार्यवर्याः सहस्रवत्सरात्पूर्वं काश्मीरदेशमलंकृतवन्त इति प्रतिभाति । एतेषां चारित्रं स्थितिकालश्चास्माभिर्न सम्यक्तया निश्चेतुं पार्यते । यदि कालविमर्शकास्सम्यक्तया निश्चित्य निवेदयेयुरवश्यं अत्यादरेण मुद्रयित्वा प्रकाशयिष्यामः । एतेषां पिता विद्याकण्ठः पितामहश्शङ्करकण्ठः गुरुरप्येषां पितैवेति च "शाङ्करकण्ठश्श्रीमद्विद्याकण्ठादनुग्रहं लब्ध्वा। नारायणकण्ठ इमां तत्पुत्रो व्यरचयद्वृत्तिम्" इत्येतद्ग्रन्थविद्यापादवृत्तावान्तिमश्लोकेनैव जानीमः । एतेषां पुत्रः मतङ्गवृत्त्यादिकर्ता श्रीभट्टरामकण्ठः । अनेनाप्यष्टमप्रकरणान्तर्गता नादकारिका तथा तदन्तर्गतयोरेव मोक्षकारिकापरमोक्षनिरासकारि-

कयोः व्याख्ये च कृताः। मृगेन्द्रवृत्तिव्याख्याया दीपिकाया निर्माता श्रीमदघोरशिवाचार्यः । यद्वक्तव्यमेतस्य तत्सर्वं अष्टप्रकरणप्रथम-सम्पुटभूमिकायां विस्तरेण विलिखितं तद्विरम्यते ।

अस्मिंश्च ग्रन्थरत्ने विद्यापादे त्रयोदशप्रकरणानि सन्ति । तानि च उपोद्घातपरमोक्षनिरासपतिलक्षणपरीक्षापतिस्वरूपनि-रूपणपञ्चकृत्यपशुलक्षणपाशलक्षणकर्मविचारमायाकलादिप्रत्ययादि इद्रियाद्यध्वसंज्ञानि प्रकरणानि । योगपादे तु नास्ति प्रकरणभेदः। प्रतिप्रकरणं सौत्रपादार्थिकप्राकरणिकासम्बन्धाः वृत्तिकारेण तत्त-त्प्रकरणारम्भे सुस्पष्टं विवेचिताः ।

योगपादे प्राणायामाद्यङ्गानि सगर्भनिर्गर्भप्राणायामादिकं च सदृष्टान्तं शिशुभ्योऽपि सुबोधं प्रतिपादितम् । ग्रन्थान्तरदुरवबोधा अपूर्वा बहवो विषया एतद्ग्रन्थसन्दर्भादेव सुबोधा इत्येतत् एतदी-यविषयसूचिनीसन्द्रष्टृणां सुप्रकाशं भवतीति ।

दीपिकायां क्वचित्क्वचित् अत्यशुद्धतया बहुमातृकाऽभावेन चानन्वितान्यप्रकृतानि च कानिचिद्वाक्यानि (   ) एतत्कुण्ड-लरेखान्तस्संयोजितानि तान्यपि पण्डितमणिभिः यदि परिशोध्य प्रेषितानि तर्ह्यविलम्बितमेव पृथक्तया संमुद्र्य संयोजयामः ।

अन्यच्च दीपिका तावत् विद्यापादावधिकैव लब्धा । यदीतः परमपि येषु केषुचित्पण्डितमणिषु विद्येत तर्ह्यवश्यं निवेदनीयेत्य-भ्यर्थयामः ।

नारायणकण्ठकृता वृत्तिस्तावत् पादचतुष्टयस्यापि वर्तते । तथाऽपि योगपादपर्यन्तमेवास्माभिर्महता प्रयत्नेन समासादिता ।

तत्पर्यन्तमेवाद्यमुद्रिता च। श्रीमद्भिर्ग्रन्थकरणेनैव स्वजन्मसाफल्य-मावहद्भिः प्राचीनैराचार्यवर्यैः बहूनि तत्त्वोपदर्शकानि ग्रन्थरत्नानि विनिर्मितानीति एतदादिग्रन्थेभ्य एव प्रमाणत्वेन संगृहीतत्वात् सुस्पष्टं परिज्ञायते। तत्रैषां निकटे यानि कानिचित् शैवसम्ब-न्धीनि पुस्तकानि यदि स्युरवश्यं निवेदयन्तु तानि कृतधियश्श्री-मन्त इति सादरं विश्वसिमः।

एतद्ग्रन्थमुद्रणकाले संशोधनाधारभूतं मातृकाद्वयमेव। तत्रैका वृत्तिमात्रयुता। मायूरपुरीविराजमानाऽऽगमपाठशालाध्या-पकब्रह्मश्रीवैद्यनाथशिवाचार्यवर्यादधिगता तालपत्रात्मिका।

अन्या-कीवलूरग्रहारवास्तव्यस्य आगमग्रन्थकोशस्य ब्रह्मश्री कल्याणशिवाचार्यवर्यस्य सदनाल्लिखित्वाऽऽनीता दीपिकासहिता मृगेन्द्रवृत्तिः। दीपिकातावदतीवाशुद्धा। अतो मातृकान्तरगवे-षणकाले महीसुरपुरी (मैसूर्) राजकीयसरस्वतीशालातः काचन मातृका पटलषट्कपरिमितैव लब्धा। लब्धाप्यपरिपूर्णा लेखक-प्रमादयुता च सा न मनोमोदावहाभूत्। तथाऽपि ग्रन्थलोपमा-शङ्कमानैः अस्माभिर्यथामति संशोध्य समुद्रणपदवीं समारूढा मृगे-न्द्रवृत्तिदीपिका।

चत्वारिंशत्समधिकशतपुटावधि मुद्रणानन्तरं इतः परं दीपिकां विना वृत्तिमात्रं मुद्रणीयं किङ्कुर्मो वयं इति चिन्ताकुलचेतोभिरस्मा-भिराणवादिपाशजालसमाविष्टस्य खिन्नमानसस्य गुरुगवेषणतत्पर-स्यान्तेवासिनः गुरुमधिष्ठायानुग्रहार्थं प्रवृत्तः परमेश्वरइव यदृच्छया-ऽऽगतका श्रीवासिब्रह्मश्रीपुण्यकोटिसोमसुन्दरशिवाचार्यवर्यादधिग-ता योगपादसहिता मृगेन्द्रवृत्तिदीपिका काचन प्रायश्शुद्धा मातृका।

तदनुसारेण संशोध्यानन्तरं मुद्रिता । चत्वारिंशत्समधिकशत-
पुटात् प्राक् तदनुसारेण पाठभेदो यस्स पृथक् संमुद्र्य मिलितः ।
पूर्वोक्तपुटपर्यन्तमशुद्धमप्यधिकं स्यादिति मन्महे । तदपि गुणग्रह-
णैकचतुराः साधुशीलाः परनिन्दामसहमाना महान्तः क्षान्त्यलं-
कृताः परिशोध्य यदि निवेदयेयुः द्वितीयसंस्करणकाले तथा मुद्रा-
पयामः ।

एतद्ग्रन्थपरिशोधनमुद्रणधर्मकार्यार्थं मातृकादातॄणां कीवलूर-
ग्रहारवास्तव्यानां श्री अक्षयलिङ्गाराधकप्रधानस्थानिकपदवीमारू-
ढानां आगमग्रन्थरत्नाकराणां ब्रह्मश्री कल्याणसुन्दरशिवाचार्याणां,

तथा मायूरपुरीविराजमानाऽऽगमपाठशालाध्यापकानां पण्डि-
तवर्याणां ब्रह्मश्री वैद्यनाथशिवाचार्याणां,

तथा काञ्चीपुराभिजनविद्वन्मणिपुण्यकोटिसोमसुन्दरशिवा-
चार्याणां,

तथा महीसुरपुरी (मैसूर्) सरस्वतीशालाध्यक्षाणां च प्रत्यु-
पकारविषये अनन्तानि नमांसि समर्पयामो वयमिति शम् ।

इत्थं

शिवागमसिद्धान्तपरिपालनसङ्घाध्यक्षाः ।

॥ श्रीः ॥

# श्रीमन्मृगेन्द्रवृत्तिदीपिकाविद्यापादस्य

# विषयसूचिका ।

---

## उपोद्घातप्रकरणम् ।

---


| विषयाः | पृष्ठम्. |
|---|---|
| दीपिकामङ्गळाचरणम् । | १ |
| प्रतिज्ञा । | १ |
| स्वविनयप्रतिपादनद्वारास्य ग्रन्थस्य ग्रन्थान्तरागतार्थतासूचनम् । | १ |
| वृत्तेर्मङ्गळाचरणम् । | २ |
| चन्द्रार्धेत्यादिवृत्तिकृन्मङ्गळस्याऽपाततः प्रतीयमानार्थविलक्षणत्वेन चन्द्रार्धशब्दस्य ज्ञानशक्तिपरत्वमभ्युपगम्य चरणशब्दस्य ज्ञानक्रियाशक्तिपरत्वमभ्युपगम्य च दुरूहदुरवगाहार्थप्रतिपादनपूर्वकं व्याख्याकरणम् । | २ |
| प्रकृतानुपयुक्तातिविस्तृतव्याख्यान्तराणां आक्षेपनिरूपणम् । | ३ |
| साधुव्याख्यालक्षणनिरूपणम् । | ४ |
| वृत्तिकर्तुर्वृत्तिकरणे स्वगुर्वनुज्ञैव कारणमिति ग्रन्थकरणप्रवृत्तिकारणकथनम् । | ४ |
| यद्यप्यथानादिमलापेत इति द्वितीयप्रकरणाऽऽदिमसूत्रमेव तन्त्रारम्भसूत्रं तथाऽपि परमेशं नमस्कृत्येत्याद्युपोद्घातप्रकणकथनं तन्त्रावतारक्रमनिदर्शनार्थकमिति सम्बन्धकथनम् । | ५ |
| पशुनिष्ठपाशहरणाद्धर इति हरार्थनिरूपणम् । | |
| हरशब्दस्य यौगिकस्यानन्तादिसाधारण्येऽपि इन्द्रशब्दसन्निधेरुमापतिरेव ग्राह्य इति सुविशदनिरूपणम् । | ७ |
| "ज्ञानं शृणुत" इति सूत्रस्थज्ञानशब्दस्य शास्त्रार्थकत्वकथनम् । | ७ |

परमेशशब्दार्थकथनं परमशब्दप्रयोजनकथनं च । ७
ऋषिशब्दार्थनिर्वचनम् । ८
ग्रन्थारम्भे सम्बन्धादिकथनस्यावश्यकतया तदर्थमिन्द्रस्य मृगेन्द्ररूपताप्त्यादिप्रतिपादकेतिहासनिरूपणम् । ८
मृगेन्द्रसंज्ञाप्रसिद्धेः कारणकथनम् । ९
परमेश्वरादारभ्य हारीतशिष्यपर्यन्तमस्य तन्त्रस्य गुरुसम्प्रदायागतत्वनिरूपणम् । ९
अभिधेयप्रयोजनादिकथनम् । ९
आप्तवाक्यस्यैव प्रामाण्यम् । आप्तश्च परमेश्वर एव । तादृशपरमेश्वरप्रोक्तत्वेनास्य प्रामाण्यमिति प्रामाण्यव्यवस्थापनम् । १०
आगमस्य तु ईश्वर एव कर्ता आगम एवेश्वरं ज्ञापयति इतिरीत्याऽऽगमः कर्तृत्वेनेश्वरापेक्षः ईश्वरो ज्ञापकत्वेनाऽऽगमापेक्षः तथाचान्योन्याश्रयदोषो न इति समाधाननिरूपणम् । १०
उपोद्घातसङ्गतेः प्रामाणिककारिकाप्रदर्शनद्वाराऽर्थकथनम् । १०
अदीक्षितानां सिद्धान्तश्रवणानधिकारकथनम् । ११
तन्त्राधिकारिनिरूपणम् । ११
मनसाऽपि वर्णाश्रमाचारलङ्घननिराकरणम् । ११
निखिलदुःखान्तशब्दस्य मलनाशपरतयार्थविवरणम् । १२
परादिसम्बन्धषट्कसंज्ञानिरूपणम् । १२
सिद्धान्तागमानां पञ्चस्रोतोरूपत्वे कारणकथनम् । १२
वामाद्यागमानामपि क्वचिच्छैवत्वेन प्रसिद्धेश्शिवाधिष्ठिताऽऽत्मान्तरप्रणीतत्वमेव कारणमिति तत्प्रसिद्धेरौपाचारिकत्वकथनम् । १२
अशरीरस्य शिवस्योपदेशानर्हत्वमाशंक्यसमाधिकथनम् । १२
विद्येश्वराणामुपदेशानन्तरमेव प्रणवादीनां उपदेशकथनम् । १२

परमशिवानन्तप्रभृति हारिततच्छिष्यपर्यन्तं परादिसम्बन्धषट्कनिरूपणम् । १२

इन्द्रक्रमायातत्वप्रदर्शनम् । १३

"भरद्वाजादयो द्विजा" इत्यत्र द्विजशब्दस्य वागीश्वरीगर्भसञ्जननात् कृतदीक्षत्वेन द्विजत्वम् । न तु स्मार्तवदुपनयनेनेति अर्थनिरूपणपूर्वकं स्मार्तद्विजशब्दस्य देवलसूत्रं प्रदर्श्यार्थकथनम् । १४

द्विजशब्दस्यान्यप्रकारेणापि अर्थकथनम् । १४

चोदनाशब्दार्थनिरूपणम् । १६

श्रुतिस्मृत्युदितधर्मानुष्ठातुः फलकथनम् । तदननुष्ठातुः प्रायश्चित्तकथनं च । १६

लिङादेः प्रत्ययमात्रस्यैव विध्यर्थकत्वेन प्रवर्तकत्वात् कथं चोदनेति क्रियायाः प्रवर्तकं वचनं इत्युक्तमित्याक्षिप्य समाधानकथनम् । १७

अनुष्ठानरूपस्य धर्मस्य प्रत्यक्षत्वेऽपि तज्जन्यस्यापूर्वाख्यफलस्याप्रत्यक्षत्वात्–चोदनैव धर्मे प्रमाणं इत्युक्तमित्युपन्यासः । १७

क्वचित्पुत्रेष्ट्यादौ फलविसंवादमाशंक्यकृष्यादिदृष्टान्तेन समाधानकथनम् । १७

चोदनानामेत्यादिना चोदनार्थकथनम् । १८

चोदनार्थस्य श्रौतस्मार्तभेदेन द्वैविध्यकथनम् । १८

प्रसङ्गाल्लिङ्गार्चनश्रैष्ठ्यवर्णनम् । १९

ऋग्यजुस्सामाथर्वणेषु चतुर्ष्वपि वेदेषु रौद्रसंहिताघटकत्वप्रदर्शनम् । २०

वेदाङ्गत्वेन प्रसिद्धकल्पेऽपि षड्भिर्मासैः परमशिवसाक्षात्कारोपायनिरूपणम् । २०

मृगेन्द्ररूपिणेन्द्रेण ऋषीणां भक्तिप्रकर्षजिज्ञासया देवतानां शब्द-
मात्रत्वसाधनम् । २१
तद्विषये श्रुतिप्रमाणप्रदर्शनम् । २२
शब्दव्यतिरिक्तदेवताभ्युपगमे दोषनिरूपणम् । २३
शब्दव्यतिरिक्तेश्वरसत्तासाधकप्रमाणाभावनिरूपणम् । २४
ईश्वरस्य प्रत्यक्षप्रमाणाविषयत्वकथनम् । २४
ईश्वरास्तित्वसाधकानुमानप्रमाणप्रदर्शनाय प्रथमं जगत्कार्यत्वानु-
माननिरूपणम् । २५
ईश्वरसाधकसकर्तृत्वानुमाननिरूपणम् २६
कार्यत्वानुमाने भागासिद्धिदोषोद्भावनम् । २६
वळभिप्राकारादिदृष्टान्ते वैषम्यप्रतिपादनम् । २६
वळभ्यादीनां पक्षान्तर्भावात् दृष्टान्ततानुपपत्तिकथनम् । २७
पक्षानन्तर्भावे दोषकथनं । २७
अनुमानेन कर्तृसिद्धावपि तस्य शरीरवत्त्वाशरीरवत्त्वाभ्यां
दोषप्रदर्शनम् । २७
ईश्वरास्तित्वे वाक्यं प्रमाणयति । २९
महाभारतश्रीरुद्रेषु ईश्वराराधनवाक्यानां निरूपणम् २९
विषं भक्षय मापरगृहेषु भुङ्क्था इत्यादिदृष्टान्तप्रदर्शनेन वाक्याना
मन्यथापरत्वप्रतिपादनम् । २९
ईश्वरास्तित्वे लोकप्रसिद्धेः प्रामाण्यमाशंक्य निराकरणम् । ३०
प्रत्ययितपुरुषप्रवादस्य प्रामाण्यमाशंक्य समाधाननिरूपणम् । ३१
ईश्वरनिराकरणवचनश्रवणेप्येषां अति भ्रमाभावनिरूपणम् । ३२
देवेन्द्रं प्रत्येषां समाधानकथनम् । ३२
देवतामूर्तेः युगपदनेकदेशसन्निधिसम्भवनिरूपणम् । ३३
मूर्च्छिताणुत्राणाद्धिमूर्तत्वमिति व्युत्पत्त्या देवतामूर्तेरस्मदादि-
मूर्तिवैलक्षण्यनिरूपणम् । ३३

शब्देतरदेवताभ्युपगमे सिद्धान्तवादिनामभिप्रायविवरणम्। ३४
प्राकाम्यशक्त्या योगिविहारकथनम्। ३९
योगिनोऽसिद्धत्वमाशंक्य समाधाननिरूपणम्। ३५
शब्दव्यतिरिक्तदेवतानभ्युपगमे वाचकव्यतिरिक्तस्य वाच्यार्थस्यासम्भवात् घटचन्द्रशब्दयोः लोकानुभवसिद्धजलदानप्रकाशनादिकं प्रसज्यत इति अनुभवविरोधरूपदोषनिरूपणम्। ३६
वाक्यं तदन्यथासिद्धमित्यनेन इन्द्रो वज्री हिरण्मय इत्यादीनामिन्द्रादिदेवताप्रतिपादकानां स्वरूपयाथार्थ्यं नास्तीति यत्पूर्वपक्षिणोक्तमनूद्य दूषणम्। ३७
यदुक्तं लोकप्रवादस्य मिथ्यात्वं तत्समाधिकथनम्। ३८
प्रसिद्धिं प्राप्तस्याऽऽगमस्यैव लोकत्वकथनम्। ३९
निर्मूलस्याऽपि प्रवादस्य नियमेन मिथ्यात्वाभ्युपगमे सर्वप्रवृत्तिव्याघातनिरूपणम्। ३९
समूलस्य लोकप्रवादस्य प्रामाण्यार्थं श्वेतोपमन्युमाहात्म्यप्रतिपादकमहाभारतादिवचनदर्शनम्। ४०
इष्टापूर्तशब्दार्थकथनम्। ४१
भरद्वाजादीनामिन्द्रस्वरूपसाक्षात्कारः। ४२
"स्वं रूपं दर्शयमासे"ति श्लोकस्यापूर्वार्थकथनम्। ४३
भरद्वाजादिभिरिन्द्रस्योपचारादिकरणकथनम्। ४४
ऋषिमध्याद्भरद्वाजस्य शिष्यरीत्या पृष्टृत्वकथनम्। ४५
भगवच्छब्दार्थे ऐश्वर्यादिषड्गुणसंज्ञाकथनम्। ४५
शिष्यस्य गुरुनिकटे प्रश्नप्रकारकथने मतङ्गसूत्रं प्रमाणयति। ४५
प्रश्नप्रकारकथनम्। ४६
अवबोधरूपशब्दरूपाभ्यां ज्ञानस्य द्वैरूप्यकथनम्। ४६
बहुभेदभिन्नज्ञानशास्त्रकरणे भगवतोऽभिप्रायप्रश्नः। ४६

ऋषिप्रश्नस्य दीपिकायां अभिप्रायविवरणम् । ४७

प्रतिवचननिरूपणम् । ४७

परमेश्वरस्य विद्येश्वरादीनामिव बैन्दवशरीराभ्युपगमनिरासः ४८

अनन्ताद्यष्टविद्येश्वराणां सप्तकोटिमन्त्राणां च सृष्टिकथनम् । ४८

विद्येश्वराणां मन्त्राणां च परमेश्वरात्ज्ञानक्रियाशक्त्योरुद्दीपनमात्रं न तु तेषां मुक्ताणुवन्निर्मलीकरणं अधिकारमलसम्बन्धादिति तेषां मुक्तेरपरमुक्तित्वनिरूपणम् । ४९

मन्त्रशब्दस्य "मननं सर्ववेदित्वं" इति नीत्या शिवशक्तितदनुगृहीतेषु वाचकत्वकथनम् । ४९

विद्येश्वराणामणुशक्तिशम्भुपक्षभेदभिन्नानां चतुर्विंशतित्वकथनं मन्त्रकोटीनामपि चतुर्विंशतिविधत्वकथनम् । ४९

मन्त्रमहेश्वरमन्त्रनिरूपणानन्तरं मन्त्रेश्वरनिरूपणम् । ५१

ईश्वरोऽनन्तादिविद्येश्वरेषु मन्त्रमहेश्वरेषु मण्डल्यादिषु च मन्त्रेश्वरेषु अभिव्यक्त एव ज्ञानं प्रकाशयति । अन्येष्वपि तत्तदधिकारानुसारेण कापिलपाञ्चरात्रादिज्ञानमपि प्रकाशयतीति निरूपणम् । ५२

शिवोद्गीर्णस्यैतत्ज्ञानस्य कामदत्वात् कामिकमिति अनन्तादिभिरुपदिष्टमिति कामिकनामकारणकथनम् । ५२

अनन्ताद्युपदिष्टेप्यस्मिन् विस्तरं हित्वा संक्षेपात्कथयामीति हारीतप्रतिज्ञानिरूपणम् । ५४

भरद्वाजवक्तृकाणामेषां कथं पारमेश्वरत्वमित्याशंक्य समाधानकथनम् । ५५

विद्यापादान्तर्गतोपोद्घातप्रकरणस्थानां विषयाणां
सूचिका समाप्ता ।

## परमोक्षनिरासप्रकरणविषयसूचिका ।

---

एतच्छास्त्रप्रतिपाद्यमानविषयाणां संक्षेपः । ५५
"अथानादि" इति प्रथमसूत्रार्थविवृतिः । ५६
अनादिमलापेतपदस्य त्रिविधव्युत्पत्त्या परमेश्वरमुक्ताणुविद्येश्वररूपत्रिविधपदार्थसूचननिरूपणम् । ५६
सर्वज्ञत्वसर्वकर्तृत्वादेः त्रिविधेषु साधारण्येऽपि परमेश्वरापेक्षया तदन्ययोर्द्वयोः पाशजालापोहनविषये वैलक्षण्यकथनम् । ५६
विज्ञानाकलप्रळयाकलसकलभेदभिन्नानामप्यणूनां प्रत्येकमवान्तरभेदनिरूपणम् । ५६
आदिमूलसूत्रस्य लक्षणकथनम् । ५७
अथ शब्दस्य सम्बन्धादि कथनानन्तर्यं आरम्भश्चार्थ इत्याक्षिप्य चिच्छक्तिसन्निरोधककर्त्रधिकारक्षयाभिमुखभावादानन्तर्यमर्थ इति दीपिकायामर्थोपन्यासपूर्वकं सम्बन्धादिकथनानन्तरमिति वृत्तिग्रन्थस्याशास्त्रज्ञप्रक्षिप्तत्वकथनम् । ५८
पशूनां स्वतः पाशविमोचने तथा पाशानां स्वतो विमोक्षे च अशक्तत्वं दृढयितुं अनुमानप्रयोगनिरूपणम् । ५८
आत्मज्ञानान्मोक्षवादिनो वेदान्तिन आक्षिप्य समाधानकथनम् । ५८
एकस्या एवेश्वरशक्तेः कथं पतिपदार्थे पाशपदार्थे च संग्रह इत्याक्षिप्य समाधानकथनम् । ५९
मलकर्ममायानां संक्षेपेण स्वरूपविभागकथनम् । ५९
परमेश्वरविद्येश्वरमन्त्रमन्त्रेश्वराणां सर्वज्ञत्वसाम्येऽपि सर्वकर्तृत्वांशे पूर्वपूर्वापेक्षयोत्तरोत्तरस्य कलया न्यूनतेति वैलक्षण्य निरूपणम् । ५९
एकेन सूत्रेण सङ्गृहीतस्य विषयस्य विस्तारकथनप्रतिज्ञा । ६०
तन्त्रशब्दार्थकथनम् । ६१

त्रिपदार्थानां पतिपशुपाशानां क्रमेणानुग्राहकानुग्राह्यापोह्यत्वादिभिः अत्रोपयोगप्रदर्शनम् । ६१
मूलसूत्रस्थसर्वज्ञसर्वकृदितिपदविवरणम् । ६१
जन्मस्थित्यादीनां संक्षेपेणार्थविवरणम् । ६२
मायाकर्मपुरुषाणां पञ्चकृत्यकर्तृत्वनिरसनपूर्वकं सर्वज्ञतादियुक्तस्येश्वरस्यैव पञ्चकृत्यकर्तृत्वव्यवस्थापनम् । ६२
साधारणरूपेण असाधारणरूपेण साधारणासाधारणरूपेण च भोगसाधनविभजनम् । ६३
विद्येश्वरपशुसञ्ज्ञापरमन्त्रेश्वराणां जन्मनि वैलक्षण्यकथनम् । ६३
शुद्धाशुद्धविषयस्य पञ्चकृत्यस्य क्रमेण साक्षात्परम्परया चेश्वरकर्तृत्वनिरूपणम् । ६४
विद्येश्वरादीनां संहारकालेऽधिकाराभावात् तदैव तेषां मोक्षानिरूपणम् । ६४
पशुपदार्थनिरूणम् । ६४
सर्वज्ञानक्रियात्मकस्य चैतन्यस्य सर्वदैवाऽऽत्मवृत्तित्वसाधनम् । ६५
संसारावस्थायां सर्वतोमुखस्य चैतन्यस्यानुपलम्भात् मुक्तावेवविद्यमानत्वश्रुतेस्तदैवोत्पाद्यत इत्याक्षिप्य समाधिकथनम् । ६५
संसारावस्थायां सदपि सर्वतोमुखं चैतन्यं केनचित्प्रतिबद्धं सत् न प्रकाशते तस्मादणोर्वश्यत्वसाधनम् । ६५
संसारमुक्त्यवस्थयोः शक्तिव्यक्तिरूपस्य कलादेरिव सर्वतोमुखचैतन्यस्य परिणाममाक्षिप्य दीपिकायां समाधानकथनम् । ६६
पाशपदार्थनिरूपणम् । ६६
पाशानां चतुर्विधत्वकथनम् । ६६
कर्मणोऽनादित्वस्य मायाशब्दार्थस्य च निरूपणम् । ६६
एतेषां पाशसादृश्यात्पाशसंज्ञाकथनम् । ६६
शुद्धाध्वनोऽपि बन्धत्वात् कथं पाशचतुष्टयत्वमित्याक्षिप्य समाधानकथनम् । ३८
अस्य च पदार्थत्रयस्य विद्यापादाभिहितस्य चर्यादिपादत्रये विनियोगकथनम् । ६८

विनियोगफलकथनम् । ६९
भुक्तिमुक्तिरूपं विनियोगफलं परापरतया बहुधा विभज्य तत्स्वरूपकथनम् । ६९
इतरदर्शनेभ्यः पारमेश्वरदर्शनस्य को विशेष इति मुनेः प्रश्ननिरूपणम् । ७०
मुनेः प्रश्ने विशेषजिज्ञासैव कारणं न तु सन्दिग्धत्वविपर्यस्तत्वे इति सयुक्तिकनिरूपणम् । ७१
प्रश्नस्य समाधाननिरूपणम् । ७१
दर्शनान्तरकर्तृणां सयुक्तिकं असर्वज्ञत्वनिरूपणम् । तत्प्रतिपाद्यमानानां साधनफलानां विविच्यानित्यत्वनिरूपणम् । शैवदर्शनप्रतिपाद्यमानानां उपेयोपायानां परत्वनिरूपणं च । ७२
वेदानां हिरण्यगर्भकर्तृकत्वविषये आचार्यसम्मतिप्रतिपादनम् । ७३
बौद्धादीनां मतानां बुद्धितत्वादिस्थितिरित्यत्राऽऽगमप्रमाणप्रदर्शनम् । ७४
अथ "किं तदन्यदर्शनानामस्फुटत्वम्" इत्याशंक्य प्रथमं वेदान्तमतस्यास्फुटत्वसाधनम् । ७४
वेदान्तिनां मतनिरूपणम् । ७४
एकस्यैवाऽऽत्मनस्सत्वरजस्तमोरूपत्रिगुणोपाधिवशात् शान्तो रागी मुग्ध इति व्यपदेशः । अन्यवस्तुप्रतिभासस्य भ्रान्तत्वमित्यस्मिन् विषये भर्तृहरिवाक्यस्य प्रामाण्यप्रदर्शनम् । ७५
दीपिकायां वेदान्तिमताभिप्रायविवरणम् । ७६
वेदान्तिमतप्रतिक्षेपः । ७६
तन्मते हेतुदृष्टान्ताभावकथनम् । ७७
व्यापकत्वस्य हेतुत्वमाशंक्य व्यापकत्वादेवव्याप्यस्य सिद्धेः अद्वैतकथनस्यासाङ्गत्यकथनम् । ७७
एकेन व्याप्तेऽन्यस्य व्याप्तिरसम्भवीत्यशंक्य गृहान्तर्व्यापकधूमशैत्यदृष्टान्तेन समाधिकथनम् । ७८

द्वैतज्ञानस्याविद्याहेतुकत्वमाक्षिप्य समाधिनिरूपणम् । अविद्याया असत्यत्वे दोषोद्भावनं च । ७८
यत्र प्रमाणप्रमेययोर्भावस्तत्र प्रमितिप्रमात्रोरप्यवश्यं सत्वमभ्युपगन्तव्यं–तथाचाद्वैतहानिः । अन्यथानिष्प्रमाणकता स्यादिति दोपनिरूपणम् । ७९
आत्मैकत्ववादिमते भोगसाम्याविमोक्षरूपदोषद्वयसाधनम् । ७९
कारणस्याऽऽत्मन अंशभेदेन चैतन्यमाशंक्य निरासकरणम् । ८१
परमात्मन उपादानत्वेऽचेतनत्वदोषकथनम् । ८१
वेदान्तवादिनां मतं निराकृत्यसांख्यमतानिराकरणम् । ८२
परमते परमकारणतया परिकल्पितायाः प्रकृतेरचैतन्ये सत्यनेकत्वं प्रदर्श्य तस्याः परमकारणतानिरासः । ८३
द्रष्टृदृश्ययोः संयोगस्य संसारहेतुत्वं तद्वियोगस्यापवर्गहेतुत्वं च सांख्याभ्युपगतमसम्भवात्प्रतिक्षिप्य तन्मतस्यान्यथाऽपि मिथ्यात्वसाधनम् । ८३
दीपिकायां संग्रहेण सांख्यमतनिरूपणम् । ८४
अयस्कान्तदृष्टान्तेनाचेतनस्याऽपि प्रधानस्य प्रवृत्तिकथनम् । ८४
एतद्विषये सांख्यकारिकाप्रदर्शनम् । ८४
भोक्तुः पुरुषस्याकर्तृत्वाभ्युपगमे तथा अचितोऽपि प्रधानस्य स्वातन्त्र्याभ्युपगमे च दोषं प्रदर्श्य प्रकृतिस्थानां मुक्तेरनुचितत्वनिरूपणम् । ८४
कर्तृत्वनिर्वचने कारिकाप्रदर्शनम् । ८५
क्रियावेशरूपं कर्तृत्वं पुरुषेऽभ्युपगतं यदि वाय्वादेरिव तस्य परिणामिताभवेदित्याशङ्क्य क्रियायां शक्तत्वरूपं कर्तृत्वमभ्युपगम्यायस्कान्तदृष्टान्तेन समाधानकथनम् । ८६
अचेतनस्याऽपि सांख्यकारिकया क्षीरगवादिदृष्टान्तप्रदर्शनेन कर्तृत्वमाशङ्क्य चेतनगवाधिष्ठितस्यैव क्षीरस्य प्रवृत्तिः नस्वतन्त्रजडस्येति समाधिकथनम् । ८६

सांख्यमतनिराकरणानन्तरं अनेकान्तवादिजैनमतनिराकरणार्थं तन्मतानुवादः । ८६
तन्मतसिद्धानां जीवाजीवास्रवसंवरनिर्झरबन्धमोक्षाणां सप्तपदार्थानां मध्ये जीवपदार्थस्य जीवास्तिकायसंज्ञस्य त्रैविध्यनिरूपणम् । तत्स्वरूपकथनं च । ८७
अजीवपदार्थस्य चतुर्भेदभिन्नत्वम् । तत्स्वरूपकथनम् । तत्राप्याकाशास्तिकायस्य द्वैविध्यकथनं च ।
आस्रवशब्दार्थनिरूपणम् । ८७
संवरशब्दार्थकथनम् । ८७
तप्तशिलारोहणनखकेशोल्लुंच्छनादितपस्समुच्चयस्य निर्झरसंज्ञत्वकथनम् । ८८
बन्धस्वरूपस्य लोहान्तर्गतालाबुकदृष्टान्तेन प्रसाधनम् । ८८
मोक्षस्वरूपनिरूपणम् । ८८
एतेषां सप्तपदार्थानां स्याद्वादाद्यनुगतत्वमुक्त्वा स्यादस्तीत्यादिसप्तभङ्गीन्यायनिरूपणम् । ८८
अनैकान्तवादिनोऽनैकान्तवादे नियमसत्त्वात्कथं सर्वत्र सप्तभङ्गी घटते इत्याशंक्य समाधिकथनम् । ८९
संक्षेपतो जैनमतप्रतिक्षेपः ८९
"स्यादस्ति स्यान्नास्ति" इत्यादिसप्तभङ्गीनयस्य अयुक्तत्वकथनम् । ९०
एकस्यैव घटस्य घटरूपेणास्तित्वं पटरूपेण नास्तित्वं चाक्षिप्य समाधाननिरूपणम् । ९०
अन्यथाऽपि सदसतोरेकाश्रयत्वमाशंक्य परिहारकथनम् । ९१
अपेक्षातोऽपि सदसतोरेकाश्रयत्वाभावनिरूपणम् । ९२
अपेक्षाया अवास्तवीत्वकथनम् । ९३
कर्मसाङ्कर्यसम्भवादात्मनोऽव्यापकत्वमितिपूर्वपक्षमुद्भाव्य समाधिनिरूपणम् । ९४

दीपिकायां कर्मसाङ्कर्यविवरणम् । ९४

आत्मनो अविभुत्वे शरीरावधिकत्वे च दोषकथनम् । ९५

आत्मनस्सङ्कोचाविकासाद्यभ्युपगमे दोषनिरूपणम् । ९६

पादार्थिकदर्शनोक्तमुक्तिस्वरूपप्रदर्शनपूर्वकं तन्निराकरणम् । ९७

दीपिकायामार्हतमतनिराकरणानन्तरं पादार्थिकमतनिराकरणे सम्बन्धकथनम् । ९७

पादार्थिकमतरीत्याऽऽत्मनो जडत्वं प्रसाध्य तन्निराकरणम् । ९७

सौगतमतनिराचिकीर्षया तन्मतानुवादः । ९८

साधनानामुपाधीनां क्षणिकत्वात्साध्यस्य ज्ञानस्याऽपि क्षणिकत्वसाधनम् । ९९

क्षणिकस्य ज्ञानस्यैवाऽऽत्मरूपत्वकथनम् । ९९

भगवतस्सुगतस्य नैरात्म्यभावनोपदेशप्रकारः । १००

अर्थक्रियाकरणाद्धेतोस्सर्वस्याऽपि भावस्य विस्तरेण क्षणिकत्वसाधनम् । १००

सौगतमते दोषनिरूपणम् । १०१

यत्सत् क्षणिकमित्यनुमानस्य प्रत्यक्षबाधादिदोषवर्गकथनम् । १०३

कर्मभोगातीतानुभवस्मरणाभ्यां हेतुभ्यां आत्मनः क्षणिकत्वनिराकरणम् । १०५

सौगतमते वस्तुस्वरूपनिरूपणस्यासम्यक्त्वं प्रदर्श्य तदुक्तमोक्षमपि दूषयितुं मोक्षं द्विधा विकल्प्योभयपक्षेऽपि दोषकथनम् । १०७

वेदान्तादिबौद्धान्तपञ्चमतनिरसनस्य तदितरपाञ्चरात्रादिमतनिरसनोपलक्षकत्वकथनम् । १०७

दर्शनान्तराणां केषाञ्चित् मुक्तिस्वरूपं संग्रहेण प्रदर्श्य मतङ्गपौष्करपारमेश्वरागमवाक्यप्रदर्शनेन मुक्तेरसम्यक्त्वस्य परमेश्वरप्रसादस्यैव मोक्षप्रापकत्वस्य च निरूपणम् । ११०

मतान्तरभुक्तिमुक्त्यपेक्षया शैवदर्शनोक्तयोर्भुक्तिमुक्त्योर्विशेषनिरूपणम् । ११०

मुक्त्यवस्थायां अभिव्यक्तसर्वज्ञत्वसर्वकर्तृत्वो मुक्तात्मा सदा परमेश्वरेणाप्रेरितस्सन् अकिञ्चित्करस्तिष्ठतीति शैवमुक्तेरुपसंहारः । १११

विद्यापादान्तर्गतपरमोक्षनिरासप्रकरणस्थानां विषयाणां सूचिका समाप्ता ।

---

## पतिलक्षणपरीक्षाप्रकरणम् ।

पूर्वप्रकरणेनास्य पतिलक्षणपरीक्षाप्रकरणस्य सम्बन्धकथनम् । ११२
पटलान्तरोपक्रमे पञ्चविधसम्बन्धकथनस्य प्रमाणतया पौष्करसूत्रस्य निरूपणम् । ११३
सम्बन्धपञ्चकस्वरूपनिरूपणम् । ११३
तनुकरणभुवनादीनां अनुमानेन सकर्तृकत्वनिरूपणम् । ११३
देहस्य कार्यत्वं नास्तीत्याशंक्य समाधानकथनम् । ११४
देहादिकं बुद्धिमत्कर्तृपूर्वकं कार्यत्वात् रथादिवत् व्यतिरेके अस्मवदिति सकर्तृत्वानुमानप्रयोगकथनम् । ११४
अत्र कार्यत्वहेतोः पूर्वपक्ष्युक्तदोषपुञ्जानाशंक्य समाधिकथनम् । ११५
दीपिकायां पञ्चविधसम्बन्धकथनस्य प्रयोजनकथनम् । ११८
परमाणूनां नित्यानां कार्यत्वं नास्तीत्याशंक्य अनुमानत्रयेण कार्यत्वसाधनम् । ११९
जगतोऽनेककर्तृकत्वं परिहृत्य एककर्तृकत्वस्थापनम् । १२०
कार्यानुसारेण कारणकल्पनकथनम् । १२०
जगत्कर्तुरीश्वरस्य नित्यव्यापकत्वउत्पादकशक्तियुक्तत्वकथनम् । १२१
अकरणिककृतेरसम्भवात् जगत्कर्तुरपि करणावश्यकत्वनिरूपणम् । १२२
चिच्छक्तेः करणस्वरूपत्वकथम् । १२३
एकस्या अपि शक्तेः ज्ञेयकृत्यादिभेदेन अनन्तत्वकथनम् । १२४

शरीरेन्द्रियरहितस्य कथं जगत्करणमित्याशंक्य दीपिकायां समाधानकथनम् । १२५

शक्त्याविनेश्वरस्य कर्तृत्वासम्भवात् शक्तेरेव कारणत्वमस्त्वित्याशंक्य समाधिकथनम् । १२५

सृष्टिस्थित्यादीनां कर्माण्येव कारणमितिजैमिनीयमतानुवादः । १२६

मायाप्रकृतीनां जगत्कारणत्वशङ्का । १२७

पुरुषस्यैव जगत्कारणत्वनिरूपणम् । १२७

एतेषां समाधनकथनम् । १२७

ईश्वरस्य जगत्सृष्ट्यादौ प्रवृत्तिः किमर्थेत्याशंक्य समाधानकथनम् । १२८

कर्मापेक्षित्वे ईश्वरस्य स्वातन्त्र्यहानिरित्याशंक्य भाण्डागारिकापेक्षराजदृष्टान्तेन समाधानकथनम् । १२८

अचेतनस्याप्ययस्कान्तादेः प्रवृत्तिमाशंक्य समाधाननिरूपणम् । १२९

जगत्कर्त्रनुमानस्य सम्बन्धाग्रहणात् बाधमाशंक्य सर्वानुमानस्याऽपि बाधप्रसङ्गस्स्यादिति प्रतिबन्ध्या समाधानकथनम् । १३१

कृत्यस्य शरीरिनिष्पाद्यत्वात् ईश्वरस्य शरीरयोगेऽस्मदादिवदसर्वज्ञत्वप्राप्तिमाशंक्य अस्मदादिशरीरविलक्षणपञ्चमन्त्रशरीरित्वनिरूपणम् । १३३

पञ्चकृत्योपयोगिपञ्चमन्त्रशरीरनिरूपणं वपुश्शब्दार्थकनमं च । १३५

ईशानमूर्धेति शब्दार्थकथनम् । १३६

तत्पुरुषवक्त्रशब्दार्थनिरूपणम् । १३७

अघोरहृदयार्थविवरणम् । १३७

शिवस्य घोररूपताप्रसिद्धिमाशंक्य समाधिनिरूपणम् । १३८

वामदेवगुह्यार्थकथनम् । १३८

सद्योजातमूर्तिशब्दार्थनिरूपणम् । १३९

ईशानादिशक्तीनां वामादिभेदभिन्नत्वस्यौपाधिकत्वकथनम् । १४०


विद्यापादान्तर्गतपतिलक्षणपरीक्षाप्रकरणस्थानां विषयाणां सूचिका समाप्ता ।

## पतिस्वरूपनिरूपणप्रकरणम् ।

चतुर्थस्य पतिस्वरूपनिरूपणप्रकरणस्य पूर्वप्रकरणेन सम्बन्धकथनम्। १४१
अष्टविद्येश्वरोत्पत्तिकथनम् । १४२
अनुमानेन निज्ञानकेवलसाधनम् । १४३
येनकेनचित्कृतस्य विद्येश्वराणामशरीरित्वानुमानस्य दोष-
निरूपणम् । १४४
अष्टविद्येश्वराणां सप्तकोटिमन्त्रेशितृत्वकथनं एतेषामीश्वरप्रेर्यत्व
कथनं च । १४४
सप्तकोटिमहामन्त्रेषु द्वितीयार्धप्रथमार्धयोर्व्यापारप्रदर्शनम् । १४६
मन्त्रनिरूपणानन्तरं मन्त्रेश्वरनिरूपणम् । १४८
अष्टादशाधिकशतमन्त्रेश्वराणां साक्षात्परमेश्वरानुगृहीतत्वात्
कथमनन्ताद्यभिव्यक्तेश्वरकर्तृकत्वमित्याशङ्कयसमाधिकथनम् । १४९
सकलत्वाद्भोक्तृत्वच्चैषां अस्मदादिसादृश्यमाशंक्य समाधानकथनम् । १५०
मण्डलिप्रभृतीनधिष्ठायेश्वरस्य ब्रह्मादिभुवनाधिपकरणकथनम् । १५०
भूतसर्गस्य चतुर्दशविधत्वनिरूपणम्। १५१
पशुशास्त्रप्रणेतॄणां अर्हन्कपिलप्रभृतीनां तदनुवर्तकानां कालाग्नि-
भुवनान्ताध्ववर्तिनां पशूनामपि परमेश्वरस्यैवकर्तृत्वनिरू-
पणम् । १५१
भोगापवर्गसिद्ध्यर्थमात्मनां चिच्छक्त्या संयोजनकथनम् । १५२
संहारनिरूपणम् । १५३
स्वापेऽपि परमेश्वरक्रियाशक्तीनां कार्यनिष्पादनोद्युक्तत्वनिरूपणम्। १५४
ईश्वरे लयभोगाधिकारभेदस्यौपचारिकत्वकथनम् । १५५
लोकसिद्धस्य सृष्टिस्थितिसंहाररूपस्य कृत्यत्रयस्योपसंहारः । १५६

इति श्रीमृगेन्द्रवृत्तिदीपिकायां विद्यापादे
पतिस्वरूपनिरूपणप्रकरणम् ।

## पञ्चकृत्यप्रकरणम् ।

पञ्चकृत्यप्रकरणस्य सौत्रादिसम्बन्धकथनं अवशिष्टकृत्यद्वयनिरूपणार्थकत्वकथनं च । १५६
सत्योरेवानन्तद्वक्रिययोरभिव्यक्तिरेवेतितयोरुत्पत्तिवादनिरासः । १५७
सर्गसंहारस्वापकालानुगृहीतानां मुक्तिविशेषकथनम् । १५८
स्थितिकालानुगृहीतानां मुक्तिविशेषनिरूपणम् । १५९
अपरमन्त्रेश्वराणां च्युतिसम्भवस्य विद्येश्वराणां च्युत्यसम्भवस्य च निरूपणम् । १६०
शक्तिनिपाते विशेषस्य अनुमानसिद्धत्वनिरूपणम् । १६१
उपकारापकारयोर्हर्षविषादाभावरूपकर्मसामान्येनैव कैवल्यसिद्धेः किं शक्तिनिपातनिश्चयेनेत्याशङ्क्य समाधानकथनम् । १६२
शक्तिपातचिह्नवैचित्र्योद्भवकालनिरूपणम् । १६४
स्वापकाले योग्यतात्रयमनपेक्ष्यैवेश्वरस्यानुग्रहकरणम् । १६५
महाप्रळयेऽनुगृहीतानां शिवसमत्वकथनम् । १६६
अणुलक्षणकथनम् । १६६
कर्मपरिपाकनिरूपणम् । १६७
अपक्वकर्मणः फलदानाशक्तत्वनिरूपणम् । १६८
ईश्वरादन्यस्य कर्मपरिपाकाशक्तत्वनिरूपणम् । १६९
सर्वकर्तृत्वादेवेश्वरस्य सर्वज्ञत्वावश्यकत्वकथनम् । १७०
ईश्वरज्ञानस्य व्यञ्जकानपेक्षत्वसंशयविपर्ययाद्यकलङ्कितत्वकथनम् १७१
ईश्वरज्ञानस्य प्रत्यक्षानुमानशब्दातिरिक्तत्वस्वप्रकाशत्वकथनम् । १७२
ईश्वरस्य ज्ञत्वकर्तृत्वयोः औपाधिकानन्त्यकथनम् । १७३
निर्वर्णितार्थोपसंहारः । १७४
दर्शनान्तरसिद्धेश्वरज्ञानिनां संसार्यनुग्रहाशक्तत्वप्रदर्शनाय दर्शनान्तरसिद्धेश्वरस्वरूपं निरूप्य विस्तरेण शिवोत्कर्षप्रतिपादनपुरस्सरं तत्समाधानकथनम् । १७६

विद्यापादान्तर्गतपञ्चकृत्यप्रकरणस्थानां
विषयाणां सूचिका समाप्ता ।

## पशुलक्षणप्रकरणम् ।

क्षित्यादिकार्याणां कर्त्रुपयोगित्वस्वोपयोगित्वान्योपयोगित्वानुपयोगित्वरूपाणां चतुर्णां पक्षाणां निरासः । १७९

क्रीडाब्रह्मवादचित्रब्रह्मवादशान्तब्रह्मवादानाशङ्क्य समाधाननिरूपणम् । १८०

क्षित्यादिकार्यस्य पारिशेष्यात् क्षेत्रज्ञार्थकत्वकथनम् । १८१

देहात्मवादिचार्वाकमतनिरूपणम् । १८१

अचैतन्याद्देहस्याऽपि परार्थत्वात् देहव्यतिरिक्त एव पर इति सिद्धान्तनिरूपणम् । १८१

कृशोऽहं स्थूलोऽहं इत्यादिप्रतीत्यनुसारेण देहस्यैवाऽऽत्मत्वमिति पूर्वपक्षाशङ्काकथनम् । १८२

विस्तरेण तत्समाधानकथनम् । १८३

जीवावस्थायां परिणामविशेषात् चैतन्यमुत्पद्यते गतासौ तदभावात्तदभाव इति पुनरपि चार्वाकमतमाशङ्क्य समाधानकथनम् । १८६

चार्वाकस्याऽपि अनुमानप्रमाणावश्यकत्वसाधनम् । १८८

परिणामस्येत्यादिश्लोकस्यान्यार्थकथनम् । १८९

आत्मन अव्यापकत्वक्षणिकत्वैकत्वजडस्वभावत्वाकर्तृत्वाभिन्नचिद्योगित्वादीनां निराकरणम् । १९१

विद्यापादान्तर्गतपशुलक्षणप्रकरणस्थानां
विषयाणां सूचिका समाप्ता ।

## पाशपदार्थविचारप्रकरणम् ।

आणवादीनां चतुर्णां पाशानां असाधारणस्वरूपनिरूपणम् । १९४

आत्मनामनुमानेन निर्मलत्वमाशङ्क्य समाधानकथनम् । १९५

आत्मनां पाशानभ्युपगमे दोषनिरूपणम् । १९६

प्रकृतिसम्बन्धिरागादीनां बद्धे सत्वात् मुक्तेऽभावात् बद्धमुक्त-
विशेष इत्याशङ्क्य विस्तरेण समाधिकथनम् । १९७
बद्धत्वमुक्तत्वयोरर्थनिरूपणम् । १९८
बद्धत्वस्य नित्यत्वमाशङ्क्य समाधिकथनम् । १९९
संसारमुक्त्यवस्थयोः पाशवशाम्भवबलान्वेषणादपि अस्य पारतन्त्र्य-
साधनम् । २००
मलस्य पशुशास्त्रप्रणेतृभिरज्ञाततत्वकथनं तस्य पर्यायनामवर्गकथनं च । २०१
मलस्य एकत्वानादिनिबिडत्वानेकशक्तियुक्तत्वादिनिरूपणम् । २०२
मलस्याऽऽत्मभिरनादिसम्बन्धानङ्गीकारे दोषनिरूपणम् । २०४
मलस्यानेकत्वे दोषं निरूप्य नित्यत्वव्यवस्थापनं तस्यानेकशक्ति
युक्तत्वकथनं च । २०४
तिरोधानशक्तेः पाशत्वोपचारकथनम् । २०६
तिरोधानशक्तेरनुग्रहकालकथनम् । २०७
तुल्यकालचिदचिदनुग्रहासम्भवात् सर्वानुग्राहिकात्वं शक्तेः कथम् ।
कथं चोपकारप्रवृत्तस्य जगदीशस्य दुःखदमाणवादिपाश-
जालानुग्रहणमिति मुनेः प्रश्ननिरूपणम् । २०७
प्रथमप्रश्नस्य समाधानकथनम् । २१०
वैद्यक्षारदृष्टान्तेन द्वितीयप्रश्नस्य समाधाननिरूपणम् । २११
अत्यन्तशुद्धस्वरूपस्य परमेश्वरस्य किमर्थं पाशबन्धनानुवर्तनं
इत्याशङ्क्य परिहारनिरूपणम् ॥ २१२
शक्तेरनुग्रहशब्दार्थकनम् । २१३
पश्वनुग्रहपाशानुग्रहयोस्स्वरूपकथनम् । २१४
चिदचिदनुग्रहस्य युगपत्सम्भवादिकमुक्त्वोपसंहारकथनम् । २१५

विद्यापादान्तर्गतपाशपदार्थविचारप्रकरणस्थानां
विषयाणां सूचिका समाप्ता ।

---

## अथ कर्मविचारप्रकरणम् ।

आत्मनो देहादिसम्बन्धे कारणावश्यकत्वकथनम् । २१६
सर्गारम्भे भाविनां शरीराणां कर्महेतुकत्वमाशंक्य समाधाननिरूपणम् । २१७
कार्यदहेन्द्रियादिवैलक्षण्यात् कारणस्य कर्मणोऽपि वैलक्षण्यनिरूपणम् । २१८
पुरुषस्य कर्मापेक्षित्वेऽस्वातन्त्र्यात् अकर्तृत्वमाशंक्य विस्तरेण समाधानकथनम् । २१९
कर्मणस्सहकारीति कर्मेति अदृष्टमिति च अभिधाने कारणनिरूपणम् । २२०
अनुष्ठानरूपस्य कर्मणः विनाशित्वेन कालान्तरभाविफलकारणत्वं कथमित्याशंक्य समाधानकथनम् । २२१
कर्माणि धर्माधर्मरूपतया विभज्य तेषामाध्यात्मिकाऽऽधिभौतिकऽऽधिदैविकसुखदुःखत्रयहेतुतानिरूपणम् । २२२
स्वापसृष्टिसंहारकालेषु कर्मणोऽनेकरीत्याऽवस्थानकथनं अभुक्तस्य तस्य लयाभावकथनं च । २२३
कर्मसाम्यस्यार्थविवेचनपुरस्सरं कर्मविचारप्रकरणोपसंहारकरणम् । २२५

विद्यापादान्तर्गतकर्मविचारप्रकरणस्थानां विषयाणां
सूचिका समाप्ता ।

## अथ मायाप्रकरणम् ।

मायास्वरूपनिरूपणप्रतिज्ञा । २२७
मायास्वरूपनिरूपणम् । २२८

मायायाश्शक्तियुक्तत्वं च शक्तिरूपकार्यवत्वमित्यर्थः । न तु कार्यजनकशक्तिमत्वमित्यत्र युक्तिकथनम् । स्वकार्यमात्रव्यापकत्वकथनं च । २२९

मायाया अभ्युपगमे युक्तिकथनम् । २३०

मायाया अचेतनत्वसाधनम् । २३०

मायाया अविनश्वरत्वव्यापकत्वयोस्साधनम् । २३१

मायाया एकत्वे युक्तिकथनम् । २३२

उपादानस्य मायायास्तन्त्वादिवदनेकत्वमास्तां को दोष इत्याशंक्य समाधाननिरूपणम् । २३३

चित्स्वभावात्परमात्मनः उपादानादचेतनस्योत्पत्तिरिति वदतां पक्षमाशंक्य समाधिकथनम् ।

परमाणुकारणवादिनां वैशेषिकनैयायिकादीनां मतमाशंक्य समाधानकथनम् । २३५

दीपिकायां सांख्याभ्युपगतप्रकृतेरेव जगदुपादानत्वमाशंक्य समाधिकथनम् । २३७

शरीराद्युत्पत्तिं प्रति मातापितृसम्बन्धिदेहेन्द्रियादीनामेव कारणत्व मस्तु किमदृष्टेनमायाख्येनेत्याशंक्य समाधिकथनम् । २३८

प्रळयास्तित्वे युक्तिनिरूपणम् । २३९

प्रळये कार्याणां मायायां शक्तिरूपतयाऽवस्थानकथनम् । २४१

सत्कार्यवादाक्षेपः । २४१

दीपिकायां सत्कार्यवादे पक्षचतुष्टयविवरणम् । २४२

सत्कार्यवादाक्षेपसमाधानकथनम् । २४३

कार्यजनिका शक्तिः कारणे वर्तते । न तु शक्त्यात्मना कार्यमित्याक्षिप्य समाधिकथनम् । २४५

घटस्य कुम्भकारव्यापारेणैवोपलम्भात् मृत्पिण्डे नास्ति यद्यस्ति कुम्भकारस्य व्यापारं विनैवोपलभ्येतेत्याशंक्य समाधानकथनम् । २४७

पटादेः कार्यस्य जननं तन्तुभ्योऽभिव्यक्तिरेवेति निरूपणम् । २४८
अभिव्यक्तिरप्यसती कार्या व्यंग्या वा इति संशय्य समाधिकथनम् । २४९
अभिव्यक्तेर्द्वैविध्यं निरूप्य तत्स्वरूपनिरूपणम् । २४९
कटादिच्छन्नस्य पटादेः यद्वदाच्छादनापनयनात् अभिव्यक्तिरेव उत्पत्तिः तद्वदुपसंहारे मायायां शक्त्यात्मना लीनं कलादिकमहर्मुखे उत्पद्यत इति मायाप्रकरणोपसंहारनिरूपणम् । २५०

विद्यापादान्तर्गतमायाप्रकरणस्थानां विषयाणां सूचिका समाप्ता ।

## अथ कलादिप्रकरणम् ।

संक्षेपात्कलादीनां त्रिंशत्तत्वानामुत्पत्तिक्रमकथनम् । २५२
मायातः कलातत्वोत्पत्तितत्प्रयोजनतत्स्वरूपाणां निरूपणम् । २५४
शिवशक्त्यैव कलाव्यापारनिर्वाहात् कलाऽऽनर्थक्यमाशंक्य दीपिकायां समाधानकथनम् । २५५
दृष्टान्तपुरस्सरं मायाविक्षोभार्थकथनम् । २५५
कलाशब्दस्य कलातत्ववाचकत्वेन नियतितत्ववाचकत्वेन चार्थविवरणम् । २५६
आत्मनः कलायाश्च कर्तृकारकताकथनम् । २५७
विद्यातत्वनिरूपणं तद्व्यापारतत्स्वरूपादिनिरूपणं च । २५८
रागतत्वनिरूपणम् । २६१
बुद्धिवासनादीनामेव रागतत्वरूपतामाशंक्य समाधाननिरूपणम् । २६२
कलाविद्यारागतत्वानां शुद्धाध्वनि उपकारनिरूपणम् । २६२
कालतत्वनिरूपणम् । २६३
मायोत्पन्नस्य कालतत्वस्य रागतत्वानन्तरं निरूपणे कारणप्रदर्शनम् । २६४

| | |
|---|---|
| कालतत्वस्य काल इति नाम्नि कारणनिरूपणम् । | २६५ |
| कालस्य नैयायिकाद्युक्तनित्यत्वविभुत्वानिराकरणम् । कालविषये ज्यौतिषिकसांख्यवेदन्तादिमतमाक्षिप्य तन्निराकरणम् । | २६६ |
| कालस्यानेकत्वादिसाधनम् । | २६७ |
| ईश्वरशक्तेः कालरूपतामाशंक्य समाधाननिरूपणम् । | २६८ |
| नियतितत्वावश्यकत्वे युक्तिकथनम् । | २६८ |
| कर्मणैव नियमनसिद्धेः नियतितत्वानर्थक्यमाशंक्य समाधान-निरूपणम् । | २६९ |
| पुंस्तत्त्वनिरूपणम् । | २७१ |
| कर्मानुसारेण प्रतिभुवनं चरतः पुंस्तत्वस्य व्यापकत्वात् पृथिवी-तत्त्व एव शोध्यत्वमाशंक्य समाधानकथनम् । | २७२ |
| अव्यक्ततत्वनिरूपणम् । | २७३ |
| गुणतत्वनिरूपणम् । | २७५ |
| सत्त्वरजस्तमसां गुणानां प्रत्येकं व्यापारनिरूपणम् । | २७६ |
| गुणानां त्रित्त्वेऽपि एकत्त्वकथनम् । | २७१ |
| बुद्धितत्त्वनिरूपणम् । | २७८ |
| अवबोधस्य अध्यवसायानध्यवसायरूपतया द्वैविध्यकथनम् । | २७९ |
| धर्मादिभावनिरूपणम् । | २८० |
| प्रत्ययनिरूपणं तद्विभागकथनं च । | २८१ |
| धर्मं यमनियमभेदेन द्विधा विभज्य यमस्य नियमस्य चानेकधा विभजनम् । | २८२ |
| मूलवृत्तिभ्यां उक्तानां सिध्यादीनां पञ्चाशत्प्रत्ययानां सांख्य-मतसिद्धत्त्वं प्रदर्श्य सिद्धान्तसिद्धानां प्रत्ययानां दीपि-कायां विस्तरेण प्रदर्शनम् । | २८२ |
| भावप्रत्ययभेदानां सिद्धान्तरीत्या शतत्रयसंख्याकत्वनिरूपणम् । | २८३ |
| तमोमोहादीनां विपर्ययाणां चतुष्षष्टिभेदभिन्नत्वकथनम् । | २८४ |
| सप्रत्ययानां भावानां सांसिद्धिकादिभेदेन त्रिविधत्वकथनम् । | २८५ |

सांसिद्धिकादीनां स्वरूपनिरूपणम् । २८६
वैनयिकप्राकृतसांसिद्धिकानां धर्मादीनां फलभेदानिरूपणम् । २८७

इति विद्यापादान्तर्गतकलादिकार्यप्रकरणस्थानां विषयाणां
सूचिका समाप्ता ।

---

## अथ प्रत्ययादिविचारप्रकरणम् ।

सिद्धितुष्ट्योस्स्वरूपनिरूपणम् । २९१
अशक्तिविपर्ययोस्स्वरूपनिरूपणम् । २९१
सिद्ध्यादीनां सत्वादिगुणयोगात् यथासम्भवं सात्विक्यादिकथनम् । २९३
भावप्रत्ययोपसंहारः २९५
बुद्ध्यवैराग्याभ्यामेव विद्यारागकार्यनिर्वाहात् तयोस्तत्त्वयोरा-
नर्थक्यमिति सांख्यानुसारेण मुनेः प्रश्नपूर्वकं तत्समा-
धानकथनम् । २९६
प्रकारान्तरेण विद्याया आनर्थक्यमाशंक्य समाधानकथनम् । २९९
विद्याबुद्ध्योरेकविनियोगित्वाभावकथनं अवैराग्यादीनां रागतत्वा-
त्मकताभावकथनं च । ३०१
कर्मण एवाभिलाषाहेतुत्वमाशंक्य समाधिकथनम् । ३०४
रागवत् द्वेषस्याऽपि तत्वान्तरत्त्वमाशंक्य समाधिकथनम् । ३०९
अहङ्कारतत्वव्यापारनिरूपणम् । ३०७
प्राणापानादीनां पञ्चवायूनां स्वरूपप्रदर्शनपूर्वकं तेषां व्यापार-
कथनम् । ३०८
दीपिकायां नागकूर्मादीनां फलकथनम् । ३१२

विद्यापादान्तर्गतप्रत्ययादिप्रकरणस्थानां विषयाणां
सूचिका समाप्ता ।

---

## अथ इन्द्रियादिप्रकरणम् ।


अहङ्कारस्य सत्वरजस्तमोबहुळस्य तैजसवैकृतभूतादिकभेदेन त्रैविध्यनिरूपणम् । तेभ्यश्च तन्मात्रेन्द्रियवर्गोत्पत्तिकथनम् । ३११

तन्मात्रेभ्यः पञ्चभूतोत्पत्तिकथनम् । ३१४

तन्मात्रास्वरूपनिरूपणम् । ३१७

पादपादीनामचेतनत्वनिराकरणम् । ३१९

मनसो ज्ञानेन्द्रियाणां च व्यापारनिरूपणम् । ३१९

कर्मेन्द्रियाणां व्यापारनिरूपणम् । इन्द्रियाणां तत्तदवच्छेदकस्थानान्यत्वकथनम् । ३२०

भ्रूलतोत्क्षेपदन्तच्छदनादीनां कर्मणां करणान्तराणि कल्पनीयानीत्याशंक्य समाधानकथनम् । ३२१

मनस आवश्यकत्वे युक्तिकथनम् । ३२२

मनसश्शीघ्रसञ्चारितादिवर्णनम् । ३२३

नियतार्थतयेन्द्रियाणां भौतिकत्ववादिनो वैशेषिकस्य मतनिरूपणम् । ३२४

इन्द्रियाणां अनियतार्थकत्वकथनपुरस्सरं सिद्धान्तप्रतिपादनम् । ३२५

युक्त्यगम्ये विषये आगमस्य प्रामाण्यकथनम् । ३२९

पञ्चभूतोत्पत्तितत्तद्गुणादिनिरूपणम् । ३३०

भूतपञ्चकव्यापरनिरूपणम् । ३३२

आकाशस्य प्रत्यक्षत्वविभुत्वनित्यत्वादिनिराकरणपूर्वं अप्रत्यक्षत्वाव्यापकत्वानित्यत्वादिसाधनम् । ३३२

शब्दस्याऽऽकाशैकगुणत्वमाक्षिप्य विस्तरेण समाधिकथनम् । ३३३

उपसंहारपूर्वं भूतचतुष्टयविशेषगुणकथनम् । ३३७

पञ्चभूतस्य शरीरसन्निविष्टत्वकथनम् । ३३९

कलादिक्षित्यन्तस्य तत्वजातस्य असाधारणत्वनिरूपणम् । ३४०

व्याख्यातार्थोपसंहारस्य प्रकरणान्तरोपक्रमस्य च प्रतिज्ञा-
निरूपणम् । ३४२
व्याख्येयस्याध्वप्रकरणस्य दीक्षायामुपयोगानिरूपणम् । ३४३

विद्यापादान्तर्गतेन्द्रियादिप्रकरणस्थानां विषयाणां
सूचिका समाप्ता ।

---

## अथ अध्वप्रकरणम् ।

---

कालानलादिकलाभुवनान्तस्य भुवनवर्गस्य भोगस्थानं संसार-
मिति च संज्ञाकथनम् । ३४५
मायाभुवनानामपि शास्त्रेपु श्रुतेः तस्यास्सावयवत्वमाशंक्य
तेषां तत्कार्यकलामस्तक एव शुद्धिनिरूपणम् । ३४७
महामायाभुवनानामपि तत्कार्यमूर्ध्न्येव अवस्थितिकथनम् । ३४८
विद्याविद्येश्वरादीनां महामायाशरीरतत्वकथनम् । ३४९
परमाण्वादिक्रमेण योजनाप्रमाणकथनम् । ३४९
सप्रमाणकालाग्निभुवननिरूपणम् । ३५२
रौरवाद्यष्टनरकनिरूपणम् । ३५३
शून्यास्यादिमहानरकाष्टककथनम् । ३५४
लाक्षाप्रलेपादिनरकराजाष्टककथनम् । ३५४
लोहस्तम्भादिराजराजेश्वरनरकाष्टककथनम् । ३५५
एतेषां प्रमाणसंख्यानिरूपणम् । ३५६
कूष्माण्डभुवनशुद्ध्यैव नरकाणां शुद्धिनिरूपणम् । ३५७
सप्तपाताळसंज्ञायास्तदधिपतीनां च निरूपणम् । ३५९
नरकाणामुपरि हाटकेशभुवनकथनम् । ३६१
भूमण्डलप्रमाणनिरूपणम् । ३६२

द्वीपानां प्रमाणसंज्ञयोर्निरूपणम् । ३६३
जम्बूद्वीपप्रमाणकथनम् । ३६५
महामेरुपर्वतस्य प्रमाणकथनम् । ३६६
सकलदिक्पालानां पुरीनिरूपणम् । ३६८
सकलदिक्पालपुरीणां स्वर्गप्रसिद्ध्या कविभिर्व्यवाह्रियमाणत्वकथनम् । ३७२
ब्रह्मणः पुर्या निरूपणम् । ३७३
मेरोरधस्स्थितानां नवद्वीपवर्षावधीनां निषधादिशैलानां निरूपणम् । ३७६
इळावृतादीनां वर्षाणां स्वरूपप्रमाणादिनिरूपणम् । ३७८
जम्बूद्वीपस्य प्राबल्यं तत्संज्ञाकारणकथनं च । ३८१
विष्कम्भशैलस्थितानां सर उपवनादीनां संज्ञास्वरूपादिनिरूपणम् । ३८२
इळावृतादिद्वीपनिवासिनां जनानां आहाराऽयुःकान्त्यादि-
निरूपणम् । ३८३
भारतवर्षस्थानां जनानां युगानुरूपप्रज्ञायुस्तेजोबलधनप्रजादि-
निरूपणम् । इतरवर्षापेक्षयाऽस्य वर्षस्य वैशिष्ट्य-
निरूपणं च । ३८७
भारतवर्षस्थितस्य द्वीपनवकस्य संज्ञाकथनम् । ३९०
शाकादिद्वीपानां स्वस्वसंज्ञाया अन्वर्थतानिरूपणम् । ३९२
नवद्वीपानां परस्तात् देवविहारार्थं ब्रह्मनिर्मिताया हिरण्मयभूमे-
स्स्वरूपनिरूपणम् । ३९३
तद्बहिर्लोकालोकाचलकथनम् । ३९६
भुवर्लोकादिलोकषट्कस्योच्छ्रायनिरूपणम् । ३९८
ब्रह्माण्डकटाहकस्य शतकोटियोजनप्रमाणकत्वनिरूपणम् । ४००
ब्रह्माण्डदिक्षु दशसु दशानामिन्द्रादीनां पालकत्वनिरूपणम् । ४०१
दशदिक्पालकानां निन्यतृत्वेन प्रतिदिशं दशरुद्रावस्थिति-
निरूपणम् । ४०२
मण्डपपूजादावपि इन्द्रादिद्वारेण शतरुद्राणामेव पूज्यत्वनिरूपणम् । ४०३

अप्तत्त्वास्थितगुह्याष्टककथनम् । ४०८
तेजस्तत्त्वस्थितातिगुह्याष्टकनिरूपणम् । ४०८
वायुतत्त्वास्थितगुह्यतराष्टककथनम् । ४०९
आकाशतत्त्वस्थपवित्राष्टकनिरूपणम् । ४०९
अहङ्करादिस्थस्थाण्वष्टककथनम् । ४१०
बुद्धितत्वस्थसूक्ष्मभुवनाष्टकनिरूपणम् । ४११
गुणतत्वस्थभुवनाष्टककथनम् । ४११
वामदेवादीनां त्रयोदशरुद्राणां गुणमूर्धन्यवस्थितिनिरूपणम् । ४१२
वामदेवादीनां संज्ञाकथनम् । ४१३
प्रधानाधिपतीनां क्रोधेशादीनां निरूपणम् । ४१४
पुरुषतत्त्वभुवनस्य प्रधानमूर्धनि रागतत्त्वाधोभागेऽवस्थितिकथनम् । ४१५
मायाधिकारिनिरूपणम् । ४१७
विद्याभुवनस्थानां विद्याराज्ञीनां निरूपणम् । ४१७
सदाशिवतत्त्वे पञ्चब्रह्मषडङ्गसदाशिवज्वालिन्यादिसकळनिष्कळ-
रुद्राष्टकपरिवृतस्य सदाशिवस्यावस्थितिनिरूपणम् । ४२०
सदाशिवतत्त्वादूर्ध्वं भुवनाधिपावस्थितौ मुनेः प्रश्ननिरूपणम् । ४२३
समाधानकथनम् । ४२४
शास्त्रोक्तस्य पतिभेदस्य कृत्यभेदादौपचारिकत्वकथनम् । ४२५
निवृत्तिप्रतिष्ठाविद्याशान्तिकलाचतुष्टयेश्वराणां साधारणस्वरूप-
निरूपणम् । ४२५
एतेषामसाधारणस्वरूपनिरूपणम् । ४२६
नादकलानिरूपणम् । ४२८
इन्धिकादिकलानिरूपणस्य शान्त्यतीतकलाभुवनानाश्रितादि-
भुवनानां उपलक्षकत्वकथमम् । ४२९
मोचिकोर्ध्वगयोर्व्यापारकथनम् । ४२९
शिवस्य साक्षात् सदाशिवादिभुवनाधिष्ठातृत्वमुपसंहृत्य तच्छ-

क्तेरपि तत्तद्भुवनाधिष्ठानत्वोपसंहारानिरूपणम् । ४३२
भूमिप्रकृतिमायाविद्याविन्दुनादकलानवकानां बन्धनस्थान-
त्वकथनम् । ४३३
भूम्यादीनां तत्तत्कलान्तर्भावेन शोध्यत्वकथनम् । ४३५
प्रागुक्तानां गहनेशादीनां आस्पदस्य प्रमाणनिरूपणम् । ४३६
उत्पत्तिक्रमवैपरीत्येन लयक्रमकथनम् । ४३७
प्रळयविभागतत्स्वरूपयोर्निरूपणम् । ४३७
प्रळयविषये मुनेः प्रश्ननिरूपणम् । ४३८
प्रश्नस्योत्तरनिरूपणम् । ४३९
चतुर्मुखब्रह्मणो दिनादिकालनिरूपणम् । ४४०
दीपिकायां मतङ्गाद्युक्तलवनिमेषादिकालस्वरूपनिरूपणम् । ४४१
प्रळयकाले शतरुद्राणां श्रीकण्ठवीरभद्रक्रोधेशचण्डसंवर्तादीनां
चावस्थितिनिरूपणम् । ४४२
पुनस्सृष्ट्यारम्भकथनम् । ४४३
बुद्धिनिष्ठयोर्धर्माधर्मयोः कथं प्रकृतिस्थाशयत्वमिति मुनेः
प्रश्ननिरूपणम् । ४४३
तत्सिद्धान्तनिरूपणम् । ४४४
आधारकारणकार्यसमीपोपकारकादीनाम् उपचारबीजानां
सदृष्टान्तं निरूपणम् । ४४५
तत्त्वानामुपसंहारक्रमकथनम् । ४४८
शुद्धाध्वनि संहारक्रमकथनम् । ४४९
अशुद्धतात्त्विकशरीरवत् शुद्धस्य तात्त्विकसूक्ष्मशरीरस्याभ्यु-
पगमे कारणमाशंक्यसमाधानकथनम् । ४५१
विद्यासदाशिवबिन्दुनादपरशक्तिरूपे शुद्धेध्वनि भावप्रत्ययानां
कुत्रावस्थितिरिति मुनेः प्रश्ननिरूपणम् । तत्समाधान-
कथनं च । ४५२

उपसंहारः । ४५४
ग्रन्थकृतोर्नामसङ्कीर्तनम् । ४५६

इति श्रीविद्यापादान्तर्गताध्वप्रकरणस्थानां विषयाणां
सूचिका समाप्ता ।
विद्यापादः समाप्तः ।

---

## अथ योगपादः ।

योगपादारंभावतरणिका । ४५७
सौत्रपादार्थिकादिसम्बन्धनिरूपणम् । ४५८
आत्मवत्वं किमित्यात्मवत्वस्वरूपकथनम् । ४५८
तच्च योगित्वं प्राणायामाद्यनुष्ठानजन्यजिताक्षतावत्त्वेवेति कथनम् । ४५९
स्वेच्छया प्राणायामादिकमभ्यस्यतां वातगुल्मोदावर्तादिदोषोद्भव निरूपणम् । ४५९
साङ्गस्य योगस्य निरूपणम् । ४६०
प्राणायामादीनां प्रत्येकं लक्षणकथनम् । ४६०
प्रत्याहारस्य लक्षणकथनम् । ४६१
ध्यानस्य स्वरूपनिरूपणम् । ४६२
समाधेर्लक्षणकथनम् । ४६२
जपलक्षणकथनं जपस्योपांश्वादिभेदेन त्रैविध्यकथनं च । ४६३
ऊहलक्षणकथनम् । ४६३
ऊहस्य कार्योपयोगप्रदर्शनम् । ४६४
योगफलनिरूपणम् । ४६५
अन्यस्याऽपि योगविषयकमुनिप्रश्नस्य निरूपणम् । ४६५
तत्समाधानकथनम् । ४६६
शौचनिरूपणम् । ४६७

| | |
|---|---|
| योगासननिरूपणम् । | ४६९ |
| पूरकलक्षणं तदभ्यासफलकथनं च । | ४७० |
| रेचकाभ्यासफलकथनम् । | ४७० |
| कुम्भकलक्षणं तदभ्यासफलकथनं च । | ४७१ |
| वायुप्रचारज्ञस्य मध्यवामदक्षिणनाडीचारेषु फलादिकथनम् । | ४७१ |
| रेचककुम्भकादीनां कालप्रमाणनियमनिरूपणम् । | ४७३ |
| प्राणायामस्य सगर्भनिर्गर्भभेदेन द्वैविध्यकथनम् । | ४७४ |
| प्रभातकृतस्य सायंकृतस्य च सगर्भप्राणायामस्य फलकथनम् । | ४७४ |
| निर्गर्भप्राणायामस्याऽऽनर्थक्यमाशङ्क्य सार्थक्यकथनम् । | ४७५ |
| सगर्भप्राणायामस्य वैशिष्ट्यकथनम् । | ४७५ |
| प्रथिव्यादितत्त्वध्याने भगवद्भावनायाः फलकथनम् । | ४७६ |
| प्रथमाभ्यासस्यारुरुक्षोः प्रथिव्यादीनामेवाभ्यासस्थानत्वकथनम् । | ४७७ |
| एतेषां पृथिव्यादीनां रूपाकृतिप्रयोजनलांच्छनादिनिरूपणम् । | ४७८ |
| प्रथिव्यादिधारणासूपदिष्टस्य रूपस्य कस्मिन्स्थाने चिन्त्यत्वमिति मुनेः प्रश्नपूर्वकं हृदयादिस्थाननिरूपणम् । | ४८० |
| प्रथिव्यादीनां परस्परमध्यस्थारातिमित्रत्वनिरूपणम् । | ४८१ |
| प्राणादिवृत्तीनां कानि स्थानानि तासुजितासु प्रयोजनं च किमिति मुनेः प्रश्नकथनम् । | ४८२ |
| प्रश्नस्योत्तरकथनम् । | ४८३ |
| नीरूपस्य शिवस्य कथं ध्येयत्वमिति मुनिप्रश्नपूर्वकं समाधानकथनम् । | ४८८ |
| भोगेच्छोः कथं चित्तसंस्थितिरित्याशङ्क्य समाधिकथनम् | ४९० |
| आकारकल्पनां विना योगाभ्यासशालिनः स्वरूपाभिव्यक्तिकथनम् । | ४९३ |
| अस्यातिरहस्यत्वात् सर्वाप्रकाश्यत्वकथनम् । | ४९४ |
| योगपादोपसंहारः | ४९५ |

योगपादस्समाप्तः ।

---

॥ श्रीः ॥

# पटलसूचिका ।

पृष्ठसंख्या.


| | | |
|---|---|---|
| १. | उपोद्घातप्रकरणम् । | १ |
| २. | परमोक्षनिरासप्रकरणम् । | ९४ |
| ३. | पतिलक्षणपरीक्षाप्रकरणम् । | ११२ |
| ४. | पतिस्वरूपनिरूपणम् । | १४१ |
| ५. | पञ्चकृत्यप्रकरणम् । | १५६ |
| ६. | पशुलक्षणप्रकरणम् । | १७८ |
| ७. | पाशलक्षणप्रकरणम् । | १९४ |
| ८. | कर्मविचारप्रकरणम् । | २१६ |
| ९. | मायालक्षणप्रकरणम् । | २२८ |
| १०. | कलादिकार्यप्रकरणम् । | २५१ |
| ११. | प्रत्ययादिप्रकरणम् । | २९० |
| १२. | इन्द्रियादिप्रकरणम् । | ३१३ |
| १३. | अध्वप्रकरणम् । | ३४४ |
| १४. | योगपादः । | ३५७. |

# अवधेयमेतत् ।

---

१. चत्वारिंशत्पुटे पङ्क्तिदशकादनन्तरं विद्यमानं "कथं तस्य वचो मिथ्या यस्य वश्यः पयोनिधिः ।" इति श्लोकार्धं मूलत्वेन परिगणनीयम् ।

२. चत्वारिंशत्पुटे अधोविद्यमानं "क्रोडीकृतेत्यादिपद्यमपि" मूलतया परिगणनीयम् ।

३. अष्टादशाधिकशतपुटे षष्ठपङ्क्तौ विद्यमानं "वैशिष्ट्यं कार्यवैशिष्ट्याद्दृष्टं लोकस्थितावपि" इत्येतदपि मूलसूत्रतया ग्राह्यम् ।

---

॥ श्रीः ॥

# ग्रन्थानन्तर्गतानां चत्वारिंशत्समधिकशतपुटावधिकानां तत्पुटावधिसम्मुद्रणानन्तरसमासादितमातृकानुसारिणां पाठभेदानां संसूचिका ।

| पाठभेदाः | पृष्ठं. | पंक्तिः. |
|---|---|---|
| वस्त्वपरिस्फुटम् । | ४ | ३ |
| गुरूक्तिमनुकुर्वन् । | ६ | ९ |
| एवं विधाश्श्रोतारः । | ६ | १८ |
| उत्तरकुरुषु तपः कुरुष्व । | ९ | २ |
| दृष्टार्थत्वम् । | १० | १८ |

प्रणवादीनामित्यस्यानन्तरं एतद्धटायितव्यं अत्र गुरुपरम्पराक्रमश्च द्विविधः महौघक्रमलक्षणः प्रतिसंहिताक्रमलक्षणश्च महौघक्रमः प्रोक्तः वक्ष्यति चात्र मूलकार एव शिवोद्गीर्णमिदं ज्ञानं मन्त्रमन्त्रेश्वरेश्वरैरित्यादिना । कामिकाद्युक्तप्रकारस्तु प्रतिसंहितागुरुक्रमः सोऽपि शिवरुद्रादिभेदेन द्विप्रकारः तत्र शिवभेदः प्रणवादीननुगृह्य सदाशिवतत्त्ववासिनः कृत्वा तेषामेकैकमेव तन्त्रमुपदिष्टं रुद्रभेदस्तु अनादिरुद्रप्रभृतीनां विजयाद्यष्टादशभेदभिन्नः तन्त्रः प्रकाशितः। तदुक्तं श्रीमत्पौष्करे प्रमाणपटले सृष्ट्यनन्तरमेवेशः शुद्धाध्वविषयानणून्। स्वांशुसंस्पर्शनादेव कृत्वा दृक्क्रिययोत्कटान्। सदाशिवोऽपि भगवान् नादरूपतयागतम्। षट्पदार्थमयं ज्ञानं अनेकच्छन्द

| | पृष्ठं. | पंक्तिः. |
|---|---|---|
| एव तत्। पूर्वतो दशसंख्यातं शिवभेदं तथा परम्। रौद्रमष्टादशविधं तेभ्योऽवादीत् कृपानिधिः। इति एवमुपदेशक्रमस्य द्वैविध्यान्न कश्चिद्विरोधः। | १२ | १९ |
| विषयस्य। | २८ | ८ |
| गोचरचारि सामान्य। | ३३ | २ |
| शरीरवत्त्वेऽपि। | ३९ | १२ |
| यदेतेषु तु वेदान्तेषु। | ७३ | १७ |
| स्वसिद्धान्त एवैकान्त इति। | ८९ | ५ |
| कुतोऽस्यायुक्तत्वमित्याह। | ९० | १४ |
| शक्त्यन्तरयोगः प्रोक्तः। | १९८ | ७ |
| दृष्टान्तसिद्धत्वात्। | २२१ | ११ |
| त्रिविधत्वेनानेकत्त्वात्। | २६७ | १७ |
| अथात्रैवेत्यस्यानन्तरं पञ्चचत्त्वारिंशद्योजनसहस्रप्रमाणत्वं प्रत्यक्षेऽपि न तयोरुभयोस्सामानमित्यर्थः। इत्यधिकः पाठः। | २८६ | १७ |

शिवाभ्यां नमः ।

# मृगेन्द्रम् ।

## दीपिकासहितया वृत्त्याऽलङ्कृतम् ।

### विद्यापादः ।

### दीपिका ।

यस्य ज्ञानक्रियारूपा शक्तिर्भुवि विमुक्तिदा ।
सर्वज्ञानविधातारं तं वन्दे परमेश्वरम् ॥ १ ॥

श्रीमन्मृगेन्द्रवृत्तौ नारायणकण्ठपादरचितायाम् ।
युक्त्यागमाविरुद्धं तात्पर्यार्थं प्रकाशयाम्यद्य ॥ २ ॥

योर्थो वृत्तिकृता स्वयं स्फुटतरं व्याख्यायते शाङ्करे
शास्त्रेऽस्मिन्न हि तत्र किञ्चन मया वक्तव्यमालोक्यते ।
यस्याद्विस्तरभीरुणा न गदितो यश्चास्फुटं सूचित-
स्तत्रैवागमयुक्तियुक्तमधुना किञ्चिन्मयाप्युच्यते ॥ ३ ॥

रामकण्ठमहाकण्ठकण्ठीरवपदानुगः ।
न कुतार्किकमातङ्गगर्जितेभ्यो बिभेम्यहम् ॥ ४ ॥

तत्र तावदत्रभवानाचार्यश्शिष्टाचारानुविधानाय शास्त्रस्याप्यविघ्न-परिसमाप्तये च शास्त्रस्य करणोपादानकर्तॄनवतारकांश्च गुरून् पूर्वार्धेन प्रणमति । उत्तरार्धेन तु शास्त्रव्याख्यां प्रतिजानीते । चन्द्रार्धेत्यादि ।

अष्टाविंशत्यागमेष्वादिभूतकामिकस्योपागममिदं मृगेन्द्रम् । मृगेन्द्रसंज्ञाकारणं तत्रमे स्पष्टीभविष्यति ।

वृत्तिः ।

चन्द्रार्धचूडचरणाब्जयुगं प्रणम्य
वागीश्वरीं गणपतिं क्रमशो गुरूंश्च ।
लेशाद्यथामति यथागमयुक्तिगूढं
श्रीमन्मृगेन्द्रपरमार्थमहं व्यनज्मि ॥ १ ॥

दीपिका ।

चन्द्रार्ध चन्द्रकला प्रकाशकत्वादाह्लादकत्वाच्च ज्ञानशक्तिरेव चन्द्रकलात्वेनोच्यते, सैव चूडा भूषणं यस्य । "ज्ञानचन्द्रकलाञ्चित" इति श्रुतेः । तस्य परमेश्वरस्य । चर्यते गम्यते ज्ञायते आचर्यते अनुष्ठीयते क्रियते चानेनेति चरणौ ज्ञानक्रियाशक्ती शास्त्रप्रणयनकरणभूते । यद्वक्ष्यति "करणं च न शक्त्यन्यत् ।" इति । विकसनशीलत्वाद्विमलत्वाच्च त एवाब्जे तयोर्युगं समष्टिरूपम् । एकत्वेऽपि शक्तेरुपचाराज्ज्ञेयकार्योपाधिभेदविवक्षया युगमित्युक्तम् । **प्रणम्य** कायवाङ्मनोभिः प्रह्वीभूय । **वागीश्वरीं** । शास्त्रोपादानभूतां महामायात्मिकां परिग्रहवर्तिनीं परविद्यास्वरूपां शक्तिम् । यदुक्तं श्रीमत्पौष्करे "परा वागीश्वरी विद्या मायाविद्याऽपरा स्मृता" । इति । यद्वक्ष्यति "शक्तेर्नादो भवेदि"त्यादि । तथा **गणपतिं** गणानां विद्येश्वराणां विद्यानां अपरमन्त्रेश्वराणां पशुसङ्घानां च पतिः परमशिवः तं च शास्त्रप्रणेतारं प्रणम्य । कर्तुः क्रियायां साधकतमत्वात्प्रथमं करणोपादानम् । सकरणस्याप्युपादानापेक्षित्वात् उपादानोपादानं पश्चात्कर्तुरुपादानम् । **क्रमशः** । यथाक्रमम् । **गुरून्** । अनन्तश्रीकण्ठशक्रभरद्वाजहारीतान् तन्त्रावतारकान् अन्यांश्च स्वगुरुपर्यन्तान् प्रणम्य श्रीमन्मृगेन्द्रपरमार्थं व्यनज्मीति सम्बन्धः । अनेन शास्त्रस्य परमेश्वरप्रणीतत्वेन प्रामाण्यं आत्मनश्चाविछिन्नसम्प्रदायागतत्वेनाऽऽप्तत्वं दर्शयति । **लेशात्** संक्षेपात् । **यथामति** यथाबोधम् । न हि पारमेशं

शास्त्रं ब्रह्मणाप्यशेषतः परिज्ञातुं शक्यम् । यद्येवं स्वमनीषिकया यत्किंचिदभिदधानोसावनाप्त एव स्यात् । अत आह **यथागमयुक्तीति** । आगमानुमानानातिक्रमेणेत्यर्थः । **गूढं** अतिगम्भीरम् । अयं च व्याख्याप्रवृत्तौ विशेषणद्वारेण हेतुः । गूढत्वादेवासौ व्याख्येय इत्यर्थः । **श्रीमन्मृगेन्द्रपरमार्थमिति** । श्रीमत् सर्वेश्वरत्वात्परमेश्वरोऽपि श्रीः सा विद्यते यथा कर्तृतया यस्मिन् शास्त्रे श्रीमच्चेदं मृगेन्द्रं च । ननु दशाष्टादशभिन्नेषु शिवशास्त्रेषु मृगेन्द्राख्यया किमपि न श्रूयते । सत्यम् । अत एवेदं कामिकाख्यं ज्ञानशास्त्रं मृगेन्द्ररूपिणा शक्रेणाऽऽश्रितत्वात् मृगेन्द्रमित्युच्यते । यद्वक्ष्यत्युपसंहारे "इत्येतत्कामिकं ज्ञानमवाप्तं परमेश्वरात्" इति । तथा । "ज्ञानं चैतत्परं गुह्यं यद्विस्पष्टं जगत्त्रये । श्रोतुर्मृगेन्द्ररूपत्वान्मृगेन्द्रमिति सूरिभि"रिति ॥ तस्य परमार्थं अर्थयाथार्थ्यम् । **व्यनज्मि** । प्रकटीकरोमि इति ।

## दीपिका ।

ये किल व्याख्यातारः प्रकृतानुपयोगि यत्किंचिद्बहुतरं प्रलपन्ति । ये च कुशलंमन्यमाना व्याख्येयमर्थं स्पष्टमित्युपेक्षन्ते तानुभयप्रकारान् द्वितीयेन श्लोकेनाऽऽक्षिपति ।

## वृत्तिः ।

**केचित्स्वबोधविभवप्रथनाय ताव-**
**द्वर्जन्त्यलं न किल यत्प्रकृतोपयोगि ।**
**अन्ये पुनः पटुधियो न विवेचयन्ति**
**स्पष्टार्थमेतदिति तत्तदुपेक्षमाणाः ॥ २ ॥**

## दीपिका ।

तृतीयेनाऽऽत्मव्याख्यायास्साधुत्वं सूचयन् —

वृत्तिः ।

संक्षेपतः प्रकृतवस्त्वपरिस्फुटं ये
व्याचक्षते पदपदार्थसमन्वयेन ।
प्रायः कुशाग्रमतिभिस्तदिहाद्रियन्ते
व्याख्याकृतो विफलविस्तरभीरुभिश्च ॥ ३ ॥

दीपिका ।

साधुव्याख्यालक्षणमाह साक्षादित्यादिश्लोकत्रयेण ।

वृत्तिः ।

साक्षाच्छ्रीकण्ठनाथादिव सुकृतिजनानुग्रहायावतीर्णा-
च्छ्रुत्वा श्रीरामकण्ठाच्छिवमतकमलोन्मीलनप्रौढभास्वान् ।
श्रीविद्याकण्ठभट्टस्तदिदमुपदिशन्नादिदेशैतदेनां
स्पष्टार्थामत्र लघ्वीं विरचय विवृतिं वत्स सर्वोपयोग्याम् ॥

उपर्युपर्येव कृतानि कैश्चि-
न्मतान्तराणां हि निबन्धनानि ।
नोद्भिन्नमुद्रं त्विदमद्य याव-
त्तस्माद्गुरुर्मामिदमन्वशात्सः ॥ ५ ॥

तेनाहमस्यां विवृतौ प्रवृत्तो
नोल्लङ्घनीया हि गुरोरनुज्ञा ।
यदृच्छया कोऽतिगभीरशब्दं
मृगेन्द्रमाक्षेप्तुमिदं व्यवस्येत् ॥ ६ ॥

दीपिका ।

शास्त्रसम्प्रदायव्याख्याप्रवृत्तौ च कारणमभिधत्ते । अध्ययनश्रवणादाविव शास्त्रव्याख्यानेऽपि गुर्वाज्ञैव प्रवर्तनहेतुरित्यभिप्रायः । यदुक्तमाचार्यैरपि । गुरूपसदनात्प्रभृति सर्वत्र तैर्गुरुवाक्यादेव प्रवर्तितव्यमिति । **मृगेन्द्रमिति** । मृगेन्द्रं शास्त्रं सिंहं च । **गभीरशब्दमिति** । गभीरत्वं शास्त्रस्य गभीरार्थतया मन्त्रत्वेन चेति ।

किमपीत्यादिना अनुक्तदुरुक्तसन्दिग्धानि समाधत्ते ।

वृत्तिः ।

किमपि यदिह नोक्तं यच्च किञ्चिद्दुरुक्तम्
कथितमपि मया यत्प्रस्फुटं नावभाति ।
दिनकृत इव दोषापह्नवैकप्रवृत्ता-
स्तदपि विबुधमुख्यास्स्पष्टयन्तः क्षमन्ताम् ॥

अतः परं प्रवर्तन्तां वृत्तयोप्युत्तरोत्तराः ।
प्रज्वालितात्प्रदीपाद्धिकस्वरा दीपसन्ततिः ॥

दीपिका ।

दोषेति । रात्रिरित्यर्थः गुणविपर्ययाश्च । वृत्यंतराण्यप्यनयैव मातृकया प्रवर्तन्तामित्याह । अतःपरमित्यादि ॥

वृत्तिः ।

अथानादिमलापेत इति तन्त्रम् । यत्पुनः परमेशं नमस्कृत्येत्याद्युपोद्घातप्रकरणं तत्सम्बन्धाभिधेयप्रयोजनं

तन्त्रावतारक्रमनिदर्शनार्थम् । पुरा खलु तत्र भगवान् भरद्वाजशिष्यस्समधिगतसकलवेदशास्त्रार्थतत्वो मुनिर्हारीतनामा शिवशक्त्युन्मुखीकृतचेतोभिस्समासादितदीक्षैर्ज्ञानक्रियाचर्यायोगजिज्ञासुभिर्नैमिशारण्यवासिभिस्तपोधनैः कृतप्रणामांजलिभिरूर्ध्वस्रोतःप्रसृतं श्रीमत्कामिकभेदमिमं मृगेन्द्रोत्तरसंज्ञकं पृष्टस्सदा शिष्यगुणोपपन्नान् दृष्ट्वा परमेश्वरादिप्रणामपूर्वकमिदमाहेति हारीतशिष्यस्तत्प्रशिष्यो वा विरक्तिमनुकुर्वन् स्वशिष्यानिदमवदत् ।

मूलम् ।

परमेशं नमस्कृत्य
भरद्वाजमृषिं ततः ।
हरादिन्द्रक्रमायातं
ज्ञानं शृणुत सुव्रताः ॥

वृत्तिः ।

हे सुव्रताः परमेश्वरभक्तिप्रकर्षपरिपोषितशोभातिशयवत्वात्सु शोभनं व्रतं शास्त्रीयनियमानुष्ठानं येषां ते । ये च श्रोतारस्सम्बोधिताः यद्वक्ष्यत्युपसंहारे "भवत्सु शिवशीतांशुज्योत्स्नापाण्डुष्विदं मया । तदिच्छयोक्त" मिति । हरादिन्द्रक्रमायातं ज्ञानं शृणुत आकर्णयत इति

सम्बन्धः। "हरति पशुभ्यः पाशान् पुंसोप्यूर्ध्वं पदमतस्तु हरः" इति। यद्यपि यौगिकीयं संज्ञा अनन्तेशादिष्वपि सामान्या। तथाऽपीन्द्रशब्दसन्निधेरिहोमापतावेव हर-शब्दो ज्ञेयः। यदाहुः "अर्थः प्रकरणं लिङ्गं शब्दस्या-न्यस्य सन्निधिः। औचित्यसामान्यशब्दानां विशेषस्थिति-हेतवः"। इति। कुत एतदिति चेन्नस्मादैन्द्रेऽस्मिन् कामि-कभेदे भगवत उमापतेर्वक्तृत्वेनेन्द्रस्य श्रोतृत्वेनैव सम्बन्धः प्रतीतः। तथाहि पुरस्तादिहैव मुनीनामिन्द्रो वक्ष्यति।

"शिवोद्गीर्णमिदं ज्ञानं मन्त्रमन्त्रेश्वरेश्वरैः।
कामदत्वात्कामिकेति प्रगीतं बहुविस्तरम्॥
तेभ्योऽवगत्य दृग्ज्योतिर्ज्वालालीढस्मरद्रुमः।
ददावुमापतिर्मह्यम्॥ इति। तस्माद्धरादि-

न्द्रक्रमाच्छ्रीकण्ठनाथात् इन्द्रादिक्रमेणाऽऽयातमवतीर्णम्। ज्ञायन्तेऽनेन विद्याचर्याक्रियायोगा इति ज्ञानं शास्त्रम्। किंकृत्वा शृणुत परमेश्वरं नमस्कृत्य सृष्टिस्थितिसंहरणा-दिभिश्चिदचिल्लक्षणं विश्वमीष्ट इतीशः। ईशितृत्वं चान-न्तेशादीनामप्यस्तीति परमपदेन विशेषणम्। परम-श्चासौ अन्येषां तदनुग्रहतश्शिवत्वाभिव्यक्तेरीश्वरश्च स्वातन्त्र्येण सृष्ट्यादिकरणात् परमेशः। तं नमस्कृत्य कायवाङ्मनोभिस्तस्मिन् प्रह्वीभूय ततः अनन्तरं तन्त्रा-

वतारकं भरद्वाजं ऋषिमिति ऋष गताविति धातो-स्सर्वेषां च गत्यर्थानां ज्ञानार्थत्वादपि परमार्थतया ऋषिः। तं च नमस्कृत्य शृणुतेति श्रोतॄणां नमस्कारोपदेशः। अनमस्कृतपरमेश्वराणामप्रणतगुरूणां च निर्विघ्नं संहिताधिगमनासम्भवात्। यश्च श्रोतृजनमेवं शिक्षयति सः अर्थात्कृततथाविधः प्रवर्तत इति गम्यते, तेन यथा परमेश्वरं गुरूंश्च नत्वाहं उपदेष्टुं प्रवृत्तस्तथा यूयमपि श्रोतुं प्रवर्तध्वमिति व्यवस्थितम्। यथा चैतदिन्द्रस्योमापतिनोपदिष्टं तत्परिसमाप्तौ यद्यपि ग्रन्थ एवास्ति। तथाऽपि व्याख्यानोपक्रमे सम्बन्धादेरवश्याभिधेयत्वात्किञ्चिदुच्यते।

कदाचित् अतिरुचिररत्नप्रकरविनिचितकनकमयकमनीयमहीतलमनोहरसप्तमजलधिं तद्विहरणभोगिनं नीलोत्पलत्विषं चतुर्भुजं द्विकन्धराधारमुखद्वयेन वेदाध्ययनसुरापानसाङ्कर्यकारिणं असुरनिवहपरिवृतं दुर्मतं महासुरं त्रिदशपतिरपश्यत्। अथ तथाविधदुराचारदर्शनजनितकोपाकुलितमुनिगणसहितश्शतक्रतुरक्षममाणो लब्धवरत्वात्प्रसभमस्त्रैरवध्यं बुध्यन् फेनान्तर्हितवज्रेण असुरस्य शिरोद्वयं चिच्छेद। तद्व्यापादनतश्च ब्रह्महत्याजनितमघमाशङ्कमानस्तत्प्रशान्तये भगवन्तमच्युतं नाम्नां सहस्रेण ऋग्यजुस्सामभिश्चास्तौषीत्। प्रसन्नेन हरिणा नवोदितभास्वद्भासुरं सर्वहत्यभिभावुकं नारसिंहं कवचं प्रयच्छता

प्रोक्तं यथैतत्सन्नद्धदेहस्त्वं तपः कुरुष्व भगवन्तं पिनाकिनमाराधयन् वर्षसहस्रान्ते तु तं दृष्ट्वाऽभिमतमासादयिष्यसीत्युक्त्वान्तर्हिते मुरारौ सर्वं तदिन्द्रेण कृतम् । अथ प्रत्यक्षीभूते भगवति पिनाकिनि निखिलदुःखान्तश्चास्य सञ्जातः । श्रीमत्कामिकाख्यञ्चास्मै परमेश्वर उपदिदेश । यतश्चेन्द्रस्य नृसिंहरूपिणस्समुपादिष्टमिदमुमापतिना ततो मृगेन्द्रश्रोतृत्वान्मृगेन्द्रसंज्ञया प्रथितम् ।

सम्बन्धस्त्वत्र षट्प्रकारः परादिः । तथा हि सर्गादौ परमेश्वर ऊर्ध्वप्राग्दक्षिणोत्तरपश्चिमस्रोतःपञ्चकभेदभिन्नं ज्ञानं स्वेच्छानुगृहीतविद्येश्वराष्टकप्रबोधनानन्तरं तदभिव्यक्तं मन्त्रेश्वरादिभ्यो वक्ष्यमाणवदादिदेश । तथा चोक्तं **किरणे**—"सृष्ट्यनन्तरमेवेशश्शिवान् सृष्ट्वा दशात्मजान् । ज्ञानमेकं विभज्याशु तेषां तत्सङ्ख्ययाऽवदत् । कामिकं प्रणवाख्यस्य योगजमि"त्यादि ॥ अत्र आत्मजानिति आत्मनैव निरधिकरणेनानुग्रहेणानुगृहीतानित्याशयः । तेभ्य उमापतिः प्राप । तस्माच्च शक्रः । ततोऽपि भरद्वाजः । तत्सकाशात्तु हारीतः । स पुनः स्वशिष्येभ्यः प्राहेति परस्तात्सर्वं स्पष्टीकरिष्यामः । अभिधेयाश्चेह ज्ञानक्रियायोगचर्याः । प्रयोजनं चाऽत्र तज्ज्ञप्तिः । तत्प्रयोजनमपि भुक्तिमुक्ती । परमेश्वरसद्भावसाधकप्रमाणोपन्यासः तद्बाधक-

निराकरणं च यद्यपि तत्प्रणीतागमप्रामाण्यसाधनाय प्रथममेवोपयुज्यते । तथापि शास्त्रकारेणैवाऽत्रैतद्विचारितं अतस्तत्रैव वक्ष्यामः । केवलमेतावदेवेह प्रतिजानीमहे । यदुक्तं—"आयुर्वेदाच्च गणितान्मन्त्रवादाच्च सस्वरात् । रसोपनिषदाद्योपादाप्तस्य परिगृह्यते" । इति । तच्चाऽऽप्तत्वं साञ्जनत्वादसर्वार्थदृशां दर्शनान्तरप्रणेतॄणां स्वस्वविषयमेव । नित्यनिर्मलनिरतिशयसर्वार्थज्ञानक्रियाशक्तेस्तु सर्वदा सर्वानुग्रहप्रवृत्तस्य परमेश्वरत्वादेव सर्वाधिष्ठातुस्सर्वविषयम् । एवंविधविशेषणविशिष्टस्य वक्तुर्विप्रलम्भकत्वासम्भावनात् नाऽप्रामाण्यम् । एतच्च यथावसरं वक्ष्यामः । तदेवमीदृग्रूपो भगवानागमस्य कर्ता । आगमस्तु तं ज्ञापयति । अतश्च द्वयोरपि विसदृशक्रियत्वात् नात्रेतरेतराश्रयदोषस्स्यात् । यथा कश्चिदेवं वक्ति देवदत्तोऽहमायातइति । तद्वाक्यश्रवणाच्च तदन्ये मन्यन्ते देवदत्तोऽयमायात इति । न चात्र देवदत्तस्य तद्वाक्ये चेतरेतराश्रयत्वं युक्तम् । तदुक्तेषु च दृष्टार्थेषु विषभूतरसवादादिषु तदागमस्य फलवत्त्वमुपलभ्याऽदृष्टार्थस्य तच्छासनस्यापि फलदत्वमनुमीयत इत्यलमनेन । प्रकृतमनुसरामः ॥ १ ॥

दीपिका ।

शास्त्रस्वरूपं दर्शयति अथानादीत्यादिना । उपोद्धातपटलस्य प्रयोजनमाह यत्पुनरित्यादिना । यदाहुः "चिन्तां प्रकृतसिद्ध्यर्थामुपोद्धातं

प्रचक्षत इति । उपोद्धातपटलस्य प्रस्तावमाह **पुरा खल्वि**त्यादिना । **समासादितदीक्षैः** इति, नादीक्षितानां श्रवणाधिकार इत्यर्थः । **ऊर्ध्व-स्रोत** इत्यादि सिद्धान्तरूपं न वामादिकम् । **मृगेन्द्रोत्तरसंज्ञमिति** मृगेन्द्रं प्रत्युक्तवान् मृगेन्द्रोत्तराख्यं न तु मृगेन्द्रैकदेशभूतम् । ज्ञानादिपादचतुष्टययोगात् । **शिष्यगुणोपपन्नानिति** । यदुक्तं "अर्थी शक्तो विद्वान् शास्त्रेणापर्युदस्तस्तन्त्रेऽधिक्रियत" इति । **परमेश्वरादीनि** आदिग्रहणाद्भरद्वाजः व्याख्यानादौ पूज्योऽभिवन्द्यश्च गुरुः यतः । **हारीतशिष्य** इत्यादि हारीतवचनमेव हारीतशिष्यादिभिरनूक्षत इत्यर्थः । **व्रतं** शास्त्रीयनियमानुष्ठानं सामान्यविशेषशास्त्रसिद्धम् । श्रीमद्भार्गवे "इति वर्णाश्रमाचारान् मनसापि न लंघयेत् । यो यस्मिन्नाश्रमे तिष्ठन् प्राप्तो दीक्षां शिवात्मिकाम् । स तस्मिन्नेव सन्तिष्ठेत् शिवधर्मं च पालयेदि"ति । श्रीमत्स्वायम्भुवेऽपि-गृहिणो लोकमार्गस्था लङ्घयेयुर्न लौकिकम् । अचारदीक्षितास्तद्वत्कुर्वीरन्निति । **हरति पशुभ्यः** पाशानित्यादि हरशब्देनात्रानन्तशिष्यः श्रीकण्ठः प्रोच्यत इति । अत्र हेतुमाह **इन्द्रशब्दसान्निध्ये**रिति तस्यैव ब्रह्माण्डमध्याधिकारित्वादित्यर्थः । एतदेव प्रपञ्चयितुं प्रश्नयति । **कुत एतदित्यादि** । परिहरति **यस्मादित्यादि** हरादिन्द्रक्रमायातमित्यत्र इन्द्रशब्दो भरद्वाजस्याप्युपलक्षणमित्याह **इन्द्रक्रमेणेति** । ज्ञानपदं व्याचष्टे **ज्ञायन्तेऽनेनेत्यादि** । विद्याशब्देनात्र विद्यापादवाच्यः पत्यादिरर्थो गृह्यते । **तदनुग्रहतश्शिवत्वाभिव्यक्ते**रिति । विद्येश्वरादीनां शिवानुग्रहादेव सर्वज्ञत्वाभिव्यक्तेः । यद्वक्ष्यति-"तत्रादौ केवलाणूनां योग्यानां कुरुतेऽष्टकम् । वामादिशक्तिभिर्युक्तं सप्तकोटिपरिच्छद"मिति । अतस्तस्मिन्नेवेशशब्दस्य मुख्यत्वमित्याह **स्वातन्त्र्येणे**त्यादि अनन्तादीनां तत्प्रेरणयैव सृष्ट्यादिकरणात् सर्वज्ञत्वेऽपि तेषां शिवापेक्षया कर्तृत्वं न्यूनमित्यर्थः । भरद्वाजस्य ऋषित्वप्रसिद्धौ ऋषिशब्दस्य पुनरुक्ततामाशङ्क्य

परिहरति **ऋष गतावित्यादि** । **सम्बन्धादे**रित्यादिग्रहणात् अभिधेयं
प्रयोजनं च गृह्येते । तत्र सम्बन्धप्रकाशनार्थमितिहासमाह । **कदाचिदि-**
**त्यादि** । **विहरणभोगिन**मिति क्रीडाव्यसनिनम् । **निखिलदुःखान्त-**
**श्चास्य सञ्जात** इति निखिलदुःखहेतुत्वात् निखिलं दुःखं मलः तस्यान्तो
व्यपगमः सञ्जातः तत्काल एव मलपरिपाकवशाच्छक्तिनिपातपूर्वकं निर्वा-
णदीक्षास्य सम्पन्नेत्यर्थः । अत एवाधिकारित्वात् श्रीमत्कामिकाख्यं चास्मै
परमेश्वर उपादिदेश शास्त्रमिति शेषः । सम्बन्धप्रकाशनाय **सम्बन्धस्त्वि-**
**त्यादि परादि**रिति परो महानन्तरालो दिव्यो दिव्यादिव्योऽदिव्यश्चेति ।
तानेव दर्शयति **तथाही**त्यादिना । **स्रोतः पञ्चकभिन्न**मिति [illegible]रूपभे-
**वेदं** पञ्चमन्त्रपरिग्रहत्वात् पञ्चकृत्यप्रतिपादकत्वात् पञ्चमन्त्रात्मकशिवदेहाभि-
व्यक्तत्वाच्च पञ्चस्रोतोरूपमुच्यते । न वामादिकमपि तेषामशिवकर्तृकत्वात्
कथं पुनस्तेषामपि शैवत्वेन क्वचित्प्रसिद्धिः उपचारात् शिवाधिष्ठिनाऽऽत्मा-
न्तरप्रणीतत्वेन । यद्येवं परमेश्वरस्याशरीरत्वात् शास्त्रोपदेशानुपपत्तिः ।
न जगत्सृष्ट्यादिवत्सङ्कल्पमात्रेणैव विद्येश्वरादीनां शास्त्रावबोधकत्वात् । तदे-
वाह **स्वेच्छानुगृहीते**त्यादि । ननु कामिकाद्याश्शिवभेदाः प्रणवादीनामुप-
दिष्टा इति श्रूयन्ते । तत्कथं विद्येश्वराणामुपदेशः । अत आह **विद्येश्व-**
**राष्टकप्रबोधनानन्तर**मिति प्रथमं विद्येश्वराणामुपदेशः पश्चात्प्रणवादीना-
मिति । **तेभ्य उमापति**रिति तेभ्योऽनन्तरम् अनन्तभट्टारकाच्छ्रीकण्ठः
प्राप न तु सूक्ष्मादिभ्यो वा । अनन्तशिष्यत्वेनैव प्रसिद्धेः । उक्तञ्च श्रीम-
द्रौरवे "जगतः कारणं देवमनन्तेशं परं गुरुम् । तेनोक्तं परमेशान श्रीक-
ण्ठाय महात्मने" इति । तदेवं शिवानन्तयोः परस्सबन्धः । अनन्त-
श्रीकण्ठयोर्महान् । श्रीकण्ठशक्रयोरन्तरालः । शक्रभरद्वाजयोः दिव्यः ।
भरद्वाजहारीतयोर्दिव्यादिव्यः । हारीततच्छिष्ययोरदिव्यः । **ज्ञानक्रि-**
**यायोगचर्या** इति ज्ञानशब्देनात्र ज्ञेयाः पतिपशुपाशाः कथ्यन्ते **प्रयोज-**

नश्चात्र ज्ञप्तिरिति अत एवोपायोपेयलक्षणश्चायं सम्बन्धोऽत्र सूचितः **तदे-वमीदृग्रूप** इति परमार्थः । **द्वयोरपीति** कर्तृज्ञापकत्वेन विसदृशक्रियत्वान्नेतरेतराश्रयदोष इति । तदेवोदाहरणेन स्पष्टयति **यथा कश्चिदित्यादि** ॥ १ ॥

वृत्तिः ।

तदेवं हारीतमुनिस्स्वशिष्याणां ज्ञानोपदेशं प्रतिज्ञाय तत इन्द्रक्रमायातत्वं दर्शयितुमाह ।

॥ मू ॥ **नारायणाश्रमे पुण्ये**
**भरद्वाजादयो द्विजाः ।**
**तेपुः शिवं प्रतिष्ठाप्य**
**तदेकाहितमानसाः ॥ २ ॥**

**बदरिकाश्रमनाम्नि** विष्णोराश्रमे तदाश्रमत्वादेव पावने भरद्वाजप्रभृतयो मुनयस्तेपुरिति सम्बन्धः । भरद्वाजादीनामृषीणां द्विजत्वप्रसिद्धिसम्भवात् **द्विजा** इति विशेषणं वागीश्वरीविभवसंयोगात् न सञ्जननादिना । कृतदीक्षत्वेनोत्कर्षवत्वप्रतिपादनार्थम् । तदानीं न पुनरुपनीतत्वमात्रं स्मार्तवद्द्विजशब्देनेष्टम् । अदीक्षितानां तन्त्रादिश्रवणानधिकारात् प्रत्युत प्रत्यवायश्रुतेः । **शिवं प्रतिष्ठाप्येति**। लोहबाणलिङ्गादावाधारे सामान्यमन्त्रादिना परमेश्वरप्रतिष्ठापनं परिकल्प्येत्याशयः । अन्यथा यथाव-

द्विदिततत्तद्विधानानां परस्तात्प्रतिष्ठादिविषयस्य प्रश्नस्यानुपपत्तेः । तस्मिन्नेवैकस्मिन्नाहितं एकाग्रीकृतं मानसं यैस्ते तथाविधास्सन्तस्तेपुः । शिवाराधनलक्षणं तपश्चक्रुरित्यर्थः ॥

दीपिका ।

द्वितीयसूत्रं सम्बन्धयति तद्देवमित्यादिना । नारायणाश्रमस्यानेकत्वात्कस्मिन्नित्याकांक्षायामाह बदर्याश्रमनाम्नीति । द्विजपदं व्याचष्टे **भरद्वाजादीनामित्यादि** । यदुक्तं "मातायाः प्रथमं जन्म विद्याजन्म ततः परं" इत्यादि । कथं पुनः भरद्वाजादीनां इन्द्रसाक्षात्करणात्पूर्वं दीक्षितत्वम् । न तदानीं । हारीतवचनकाले त्वस्त्येव । **स्मार्तवदिति** सूत्रप्रोक्तद्विजशब्दवत् । यदाह देवलः "मातापितृभ्यां गर्भाधानादिभिस्संस्कृते गर्भाष्टमे वर्षे उपनयनार्हो भवति । तत्रोपाध्यायः पिता । माता गायत्री । एवमुपनीतो द्विपितृको द्विजातिस्स्यादिति । **तन्त्रादिश्रवणानधिकारादिति** । अत्र आदिग्रहणात् मन्त्रपरिग्रहः । यदुक्तं श्रीमत्कालोत्तरे "मन्त्रं तन्त्रं त्वया प्रोक्त"मिति । मन्त्रतन्त्रश्रवणे च दीक्षितानामेवाधिकारः यदुक्तं श्रीमत्पराख्ये "दीक्षितो योऽधिकारी स्याद्योग्यस्स्नानार्चनादिषु" इति । वक्ष्यति चाध्ययनप्रकरणे "पूते महीतले स्थित्वा पशुश्रवणवर्जितः" । इति । **प्रत्यवायश्रुतेरिति** । यदुक्तं श्रीमद्रौरवे "आज्ञाविलंघनात्प्रोक्तं क्रव्यादत्वं शतं समाः" । इति । यदि वा द्विजशब्देन तेषां द्विजत्वव्याप्तिफलेनेशज्ञानेन योगादुत्कर्षः प्रोच्यते ततश्चानात्मादावात्मज्ञानाद्यभावेऽपि सर्वज्ञत्वाद्यदर्शनात् बन्धान्तरबद्धत्वमात्मानमाशङ्कमानानामेनेषां शक्तिनिपातवशात्तदुच्छेदोपायज्ञस्य शिवस्याराधनमुपपद्यत इति । **शिवाराधनलक्षणमिति** । परिणतमलत्वेन शक्तिनिपातवशाच्छिवधर्माद्यात्मकम् ।

यदुक्तं किरणे "सम कर्माणि संजाते कालान्तरवशात्पुनः । तीव्रशक्तिनिपातेन" इति ।

श्रीमत्स्वायम्भुवेऽपि "सा शक्तिरापतत्याद्या पुंसो जन्मन्यपश्चिमे । सन्निपातात्क्षरत्यस्य मलः संसारकारणं" क्षीणे त्वस्मिन् क्रिया सा स्यात्परं निःश्रेयसं प्रति" इति ॥ १ ॥

॥ मू ॥ अथ तान् भावितान् मत्वा
कदाचित्त्रिदशाधिपः ।
तदाश्रमपदं भेजे
स्वयं तापसवेषभृत् ॥ ३ ॥

वृत्तिः ।

अनन्तरं च तान् भावितान् तन्त्रश्रद्धालून् ज्ञात्वा कस्मिंश्चित्काले मुनिरूपधारी शक्रः तदीयमाश्रमं सिषेवे ॥ ३ ॥

दीपिका ।

तत्र श्रद्धालून् इति पाठे शिवे श्रद्धालूनित्यर्थः ॥ ३ ॥

॥ मू ॥ स तैस्सम्पूजितः पृष्ट्वा
तांश्च सर्वाननामयम् ।
प्रोवाच चोदनाधर्मः
किमर्थं नानुवर्त्यते ॥ ४ ॥

वृत्तिः ।

स इन्द्रस्तैर्भरद्वाजादिभिराश्रमसमुचितेनातिथिसत्कारेणाभ्यर्चितस्तान् भरद्वाजादीन् प्रत्येकं कुशलं पृष्ट्वाऽब्रवीत् किं तदित्याह **चोदनाधर्मः किमर्थं नानुवर्त्यत** इति । चोदनेति क्रियायाः **प्रवर्तकं** वचनमाहुः तदाम्नातो धर्मः किमिति नानुष्ठीयते । चोदनैव हि धर्मे प्रमाणं प्रमाणमेव चोदना इत्येवमयोगान्ययोगव्यवच्छेदेन ततः प्रवर्तमानानामैहिकस्याऽऽमुष्मिकस्यापि फलस्याविसंवादात् । तथा चोक्तम् ।

"श्रुतिस्मृत्युदितान् धर्माननुतिष्ठन् हि मानवः ।
इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमां गतिम् ॥"

इति । तद्विपरीतं तु त्रयीबाह्यलिङ्गाराधनादि यत् तत्त्रयीबाह्यत्वादेव फल्गुप्रायम् । यदाह भट्टः ।

तथाऽतिक्रान्तवेदोक्तमर्यादव्यवहारिणाम् ।
संवादिष्वपि वाक्येषु नेष्यते मानहेतुता ॥

मनुरपि "या वेदबाह्यास्स्मृतयो याश्च काश्चित्कुदृष्टयः ।
सर्वास्ता निष्फलाः प्रेत्य तमोभूता हि तास्स्मृताः ॥ ४ ॥

दीपिका ।

सर्वशब्दार्थमाह **प्रत्येकमिति** अब्रवीदिति मीमांसकदृष्ट्या चोदितवानित्यभिप्रायः । चोदनाशब्देनात्र विधिनिषेधवाक्यान्यभिधीयन्त इत्याह **चोदनेत्यादि** चोदनावाक्यानां कार्य एवार्थे प्रामाण्याभ्युपगमात्

न सिद्ध इति। ननु लिङादेः प्रत्ययमात्रस्य विध्यर्थकत्वेन प्रवर्तकत्वात् कथं वचनमित्युपन्यासः ! सत्यम्। प्रत्ययमात्रस्यैव विधिरर्थः। स तु भावनापेक्ष एव पुरुषं प्रवर्तयति। अयमर्थः। कुर्यादित्युक्ते किं, केन, कथमित्याकांक्षायां अनेन इत्थं कुर्यादिति वाक्यस्यैव प्रवर्तकत्वम्। यदाहुः "त्रिमात्रपेक्षितैः पूर्णस्समर्थः प्रत्ययो विधौ" इति। धर्मशब्देनात्र न भावप्रत्ययरूपो बुद्धिगुणो विवक्षितः। मीमांसकानामनभिमतत्वात्। नाऽपि भावस्वभावः। तस्य कार्यत्वात्। नाप्यपूर्वाख्यस्संस्कारः। तस्यानुष्ठानोत्तरकालभावित्वात्। अपि तु यागाद्यनुष्ठानरूप एवेत्याह। **तदाम्नातो धर्म** इति। **नानुष्ठीयत** इति। **चोदनैवहि धर्मे प्रमाण**मिति। धर्मस्यानुष्ठानरूपस्य प्रत्यक्षत्वेऽपि तज्जन्यस्याप्यपूर्वाख्यस्य तत्फलस्य च स्वर्गादेस्तत्सम्बन्धस्य चातीन्द्रियत्वात् प्रत्यक्षादिप्रमाणानां तत्र प्रामाण्यं न सम्भवतीति। यद्येवं प्रमाणानन्तर्भावात् चोदनाऽपि न प्रमाणं अत आह **प्रमाणमेव चोदनेति** चोदनायास्तु नित्यत्वेन कर्तृगतविप्रलम्भादिदोषाद्यभावात् अतीन्द्रियेष्वर्थेषु ज्ञापकत्वेन प्रामाण्यमनिवार्यमेव। यदाहुः— **अनधिगतार्थगंतृ** प्रमाणमिति। **अयोगान्ययोगव्यवच्छेदेनेति** प्रमाणमेवेत्यवधारणं चोदनायाः प्रामाण्यायोगं व्यवच्छिनत्ति। चोदनैवेत्यवधारणं तु प्रत्यक्षादीनां प्रामाण्ययोगं व्यवच्छिनत्ति। **फलस्याविसंवादा**दिति - ननु क्वचित्पुत्रेष्ट्यादौ फलविसंवादो दृश्यते तत्कथं फलाविसंवादाच्चोदनायां प्रामाण्यम्। उच्यते। कारीर्यादाविव कर्मकर्तृत्वसाधनवैगुण्येन फलविसंवादः। स च नाप्रामाण्यफलसाधक इति। **फल्गुप्राय**मिति अल्पप्रयोजनम्॥ ४॥

**वृत्तिः।**

इत्येवं जैमिनिमतानुसारिणस्तस्य वाचश्श्रुत्वा—

॥ मू ॥ त ऊचुर्नन्वयं धर्म-
श्चोदनाविहितो मुने।
देवताराधनोपाय
स्तपसाऽभीष्टसिद्धये ॥ ५ ॥

ते भरद्वाजादय इन्द्रं तापसरूपत्वेन मुनिशब्दे-नाऽऽमन्त्र्य नन्विति वचनमवोचन्। योऽयमस्माभिरभि-मतरुद्राख्यदेवताप्रसादनोपायलक्षणो धर्मस्तपसा समीहित-सिद्ध्यर्थमासेव्यते स चोदनयैव हि। विहितः। व्यवस्थापितः। तथा हि—चोदना नाम लिङ्लोट्तव्यादिशब्दव्यवस्थापि-तविधिनिषेधरूपयजनादिक्रियाप्रवर्तकं वचनमभिधीयते। यथा "ज्योतिष्टोमेन यजेत स्वर्गकाम" इत्यादि। तच्च मुख्यतया श्रौतम्। तन्मूलत्वाच्च स्मार्तमपि। तथा चोक्तं—"तस्माच्छ्रुतिस्मृती ह्येव प्रमाणं धर्मगोचर" इति। तथा-"वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्।" इति।

तदास्तां तावदेवंविधाश्श्रुत्यादिसदागमार्थाविरो-धिन्यः पौराणिक्यस्संहिताः अन्याश्च काश्चन श्रुतयः। यासामिदं तात्पर्यम्। यथा महाभारतादौ—

"ये भक्ता वरदं देवं शिवं रुद्रमुमापतिम्।
इह लोके सुखं प्राप्य ते यान्ति परमां गतिम्" इति।

सर्वरूपं भवं ज्ञात्वा लिङ्गे योऽर्चयति प्रभुः ।

तस्मिन्नभ्यधिकां प्रीतिं करोति वृषभध्वजः ।। इति ।

तथा—

"आदित्या वसवो रुद्रा मुनयश्च महौजसः ।

विधिवल्लिङ्गमाराध्य पदमिष्टतमं गताः ।" इति ।

तथा—

"मृद्भस्म गोशकृत्पिष्टगुडखण्डादिलिङ्गकम् ।

सम्पूजयन् प्रतिष्ठार्थं श्रद्धावानधिगच्छति" इति ।

अभ्युपगम्यापि ब्रूमः यदभिप्रायेणेदमभिधीयते भवद्भिस्स तावच्छ्रुत्यर्थ एव स्मर्यताम् ॥ ५ ॥

दीपिका ।

उत्तरसूत्रमवतारयति इत्येवमित्यादि योयमस्माभिरित्यादि चोदनैव धर्मे प्रमाणमस्तु वयमपि चोदनाधर्ममेवानुतिष्ठाम इत्यर्थः । समीहितासिद्ध्यर्थमिति । समीहितं चैषां मलनिवृत्त्यादिः । चोदनाधर्मतामेवोपपादयति तथाहीत्यादि । प्रवर्तकं चोदनैवेत्युक्तम् । ननु नास्माभिः प्रवर्तकवाक्यमात्रं प्रमाणमिष्यते; अपि तु श्रुतिरूपैव चोदना। अत आह अभ्युपगम्यापि ब्रूम इत्यादि ॥ ५ ॥

तत्र हि ।

॥ मू ॥ वेदेऽस्ति संहिता रौद्री
वाच्या रुद्रश्च देवता ।
सान्निध्यकरणेऽप्यस्मिन्
विहितः काल्पिको विधिः ॥ ६ ॥

वृत्तिः ।

रुद्रो देवता अस्येति रौद्री संहिता ऋग्यजुस्साम-लक्षणे चाथर्वणे च वेदेऽस्ति । यजुर्वेदे हि रुद्रैकादशिनी संहिता श्रुयते । यस्यां भगवन्तो रुद्रास्सर्वाभिप्रेतसाधकाः पठ्यन्ते । ऋग्वेदेऽपि "त्र्यम्बकं यजामहे । इमा रुद्राय तपसे कपर्दिने । इमा रुद्राय स्थिरधन्विने गिरः ।" इत्यादिकाः ऋग्विधानाम्नाततत्तद्विशिष्टविधानफला विद्यन्त एव । सामवेदेऽपि श्रुयते हि साम्नां विधाने । आवो राजानं तद्वर्गा देवप्रावृज्यातो हनीत्येषा रौद्री संहिता । एतां प्रयुञ्जानो रुद्रं प्रीणातीति । एवमाथर्वणेऽपि रुद्राराधनविधयस्तन्मन्त्रसंहिताश्च सम्भवन्ति । न च केवलं संहितामात्रमेवाऽस्ति । तत्र रुद्र एव देवता वाच्यरूपतया श्रूयते । यमुद्दिश्य "एष ते रुद्रभागस्सह स्वस्राम्बिकया । तं जुषस्व स्वाहे"ति श्रुतिः । न चैतद्यावत् काल्पिक इति कल्पो वेदाङ्गं तदुक्तो विधिर्भगवतस्सान्निध्यकल्पनाय श्रूयते । तथा हि काठके सूत्रपरिशिष्टीये रुद्रकल्पे—"त्रिषवणमुदकोपस्पर्शी"त्युक्त्वोक्तम् । दर्भेष्वासीनो दर्भमुष्टिं धारयमाणो रक्षोभ्योप्यविज्ञेयो भवति । शाकयावकपयोभैक्षभक्षषड्भिर्मासैः प्रत्यक्षीभवन्तं भगवन्तं पिनाकिनं पश्यतीति । एवं चाश्रद्दधानमनसां जैमिनीयच्छायानुसारिणामपि चोदनाप्रदर्शितोऽयमस्त्येव प्रसिद्धः पन्थाः ।

किं पुनः परमेश्वरप्रकाशनविहतमहामोहातिमिरतया विस्पष्टदृष्टीनामन्येषाम् ॥ ६ ॥

दीपिका ।

किं पुनरिति । शक्तिपातवशादीश्वरविषयसंशयविपर्ययज्ञानविनाशेन प्रकाशिततदस्तित्वनिश्चयानामित्यर्थः । नत्वत्र महामोहो मल इति व्याख्येयं दीक्षयैव तत्क्षपणस्य वक्ष्यमाणत्वात् ॥ ६ ॥

॥ मू ॥ इत्युक्तेऽपि परं भावं
जिज्ञासुः प्रहसन् प्रभुः ।
तानाह मिथ्याज्ञानं व-
श्शब्दमात्रं हि देवता ॥ ७ ॥

वृत्तिः ।

एवमपि कथिते तदीयं भक्तिप्रकर्षं ज्ञातुमिच्छुः इन्द्रत्वेन परमैश्वर्ययोगात् प्रभुः प्रभवनशीलस्स तान् मुनीन् सस्मितमाह । किं तत् मिथ्याज्ञानं वः युष्माकं सम्बन्धि यदेतत् लिङ्गार्चनादिशिवाराधनप्रतिपादकं ज्ञानं शास्त्रं तन्मिथ्या न सत्यं तत् । प्रणेतृतथाविधदेवतानुपपत्तेः । यतः कर्मानुष्ठानादेव फलम् । न देवतातः । शब्दमात्रं हि देवता । न खलु वयं प्रत्यक्षप्रमाणेतरप्रमाणापह्नवप्रवृत्तदुराचारचार्वाकवदसम्भवमेव देवतायाः प्रतिपाद्यामहे । किं तर्हि, विद्यत एव देवता सा तु न शब्दादतिरि-

च्यते । अपि तु अयोगोलकवह्निवदनुपलभ्यमानवाच्यार्थापृथक्भावश्शब्द एव। नैष तेषु क्रियाविशेषेषु अङ्गभावं गच्छन् यागसम्प्रदानदेवताविशेषाख्यां लभते । तदुक्तं—
"अविनिर्भिण्णशब्दार्थे ध्यायेदोङ्कारमीश्वरं" इति। न चात्र कश्चिदेक एव विश्वेशिता अस्तीति नियमः प्रतिज्ञातुं शक्यः। अनेकाकारसुप्रसिद्धबहुतरदेवताविशेषश्रवणात्। तच्चेदमनुपममहिम्नश्शब्दरूपस्यैव विजृम्भितम् । यदेकमपि तत् तत्तद्देवताविशेषप्रतीतिहेतुतामात्मप्रतीतिहेतुतां चाभ्येति । तथैव श्रुतिः—

"इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यस्सुपर्णो गरुत्मान् ।
एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः"
इति। तत्सुस्थितमेतच्छब्दात्मिका देवतेति ॥ ७ ॥

## दीपिका ।

इत्युक्तेऽपीत्यादिसूत्रं व्याचष्टे **एवमपीत्यादि** । परं भावमिति व्याचष्टे **तदीयं भक्तिमकर्षमिति**। शक्तिपातयोग्यतैव तन्निष्ठत्वं भक्तिः योग्यतावेशलक्षणो ज्ञानविशेषः। यदुक्तम्—

"अन्योऽपि योग्यतावेशलक्षणोऽपर उच्यते ।
भक्तित्वेन समाख्यातो विज्ञानावयवोप्यथ। इति ॥ अत

एवेदानीं मलपरिणतिस्सम्पन्ना । यतश्शक्तिपातचिह्नभूता परमेश्वरशक्तिर्वर्तते तदहमेतेषां तत्प्रकर्षं ज्ञातुं पुनरपि मीमांसकदृष्ट्याऽऽक्षिपामीति

समन्दहासमाह न त्वपहासशील इत्याह । कर्मानुष्ठानादेव फलं न देवतात इति । तस्या देवताया वाचकाभिमतरुद्रेशादिशब्दभेदेन प्रमाणान्तरैरसिद्धेः तेन सह सम्बन्धग्रहणासम्भवादागमेनाप्यसिद्धः तत एव च सम्बन्धग्रहणादितरेतराश्रयतोऽसिद्धिरेव । ततश्च'' रौद्रं चरुं निर्वपेदित्यादावपि उद्देश्याकारतया विशिष्टः कर्माङ्गत्वेन स देवताशब्द एव प्रतीयत इति क्रियात–एव फलं न देवतात इति । इहाऽपि वक्ष्यति ''न च तत्साधकं किञ्चित्प्रमाणं भात्यबाधितम्'' इति । अतश्शब्देतरत्वाभ्युपगमेऽपि न युष्मदाभिमतदेवताविशेषसिद्धिरित्याह । न चात्रेत्यादि ब्रह्मविष्णवादीनामपि विश्वेशितृत्वेन श्रवणादित्यभिप्रायः । न चाभ्युपगमो युक्त इत्याह तत्सुस्थितमेतदिति निश्चितमित्यर्थः ॥ ७ ॥

वृत्तिः ।

एवमन्वयेनाभिधाय व्यतिरेकेणामुमेवार्थं दृढयितुमाह ॥

॥ मू ॥ **शब्देतरत्वे युगप-**
**द्भिन्नदेशेषु यष्टृषु ।**
**न सा प्रयाति सान्निध्यं**
**मूर्तत्वादस्मदादिवत् ॥ ८ ॥**

शब्दव्यतिरिक्ता हि यदि देवता विद्यते किं विग्रहवती अविग्रहवती उभयरूपा अनुभयरूपा वा । अनुभयरूपत्वेऽवस्तुत्वात् । किञ्च न तत्वं तस्याः । उभयरूपत्वे विरुद्धधर्माध्यासतः स्वसिद्धान्तविरुद्धानेकान्तवादाभ्युपगमः ।

व्यस्तपक्षद्वयोक्ताखिलदोषप्रसङ्गश्च । अविग्रहवत्त्वे शब्दे-नैवं किमपराद्धम् । विग्रहवत्त्वे तु भिन्नदेशावस्थितेषु युग-पत्प्रारब्धयागेषु यज्वसु मूर्तत्वात् तस्यास्तत्सान्निध्यानुप-पत्तिः । ननु मूर्तत्वे सत्यपि सान्निध्यं परस्परविदूरदेश-स्थोपस्थातृजनोपहृतसपर्ययोरर्केन्दुबिम्बयोर्दृष्टमित्यनैकांति-तिकं मूर्तत्वम् । नानैकान्तिकम् । अर्केन्दुबिम्बयोस्स्वप्रभा-भास्वरयोरुच्चतरत्वेन सकलदेशोपलक्ष्यस्थानमात्रस्थयोर्बहु-जनोपलम्भयोग्यदेशावस्थानमेव सान्निध्यं भवतां प्रति-भाति न वास्तवम् । यथाचात्युत्तुङ्गरङ्गोत्सङ्गवर्तिनी नर्तकी विदूरदेशवर्तिभिर्भूयोभूयोऽभिप्रेक्षकैः प्रेक्ष्यमाणा नैकैकं प्रति प्राकाम्यशक्त्या सान्निध्यं भजते । यथाच समकाल-मनेकप्रणयिजनोपनिमन्त्रितानामस्माकं मूर्तत्वाद्युगपदने-कगृहभोजनं न दृष्टम् । एवं देवतायास्तुल्यकालं भिन्न-देशस्थयागसान्निध्यं मूर्तत्वान्न सम्भाव्यमिति शब्दमात्रत्व-मेवास्स्यास्साधीयः ॥ ८ ॥

## दीपिका ।

शब्देतर इत्यादिसूत्रस्य सम्बन्धमाह **एवमन्वयेनेत्यादि अनुभय-रूप** इत्यादिविग्रहवत्वाविग्रहवत्वाभ्यामन्यस्याः कोटेरसम्भवादिति । **उभयरूपत्वे** इत्यादि तदेवसत्तदेवासदित्यादिना नैकान्तवादस्य निरा-करिष्यमाणत्वादिति भावः । **व्यस्तपक्षद्वयेत्यादि** विग्रहवत्वाविग्रहवत्वयोः पक्षयोर्ये दोषास्सम्भाव्यन्ते किंचिज्ज्ञत्वादयोऽकर्तृत्वादयश्च तेषामुभयेषामत्र-प्रसङ्ग इति ॥ ८ ॥

वृत्तिः ।

किंच ।

## न च तत्साधकं किञ्चि-
## त्प्रमाणं भात्यबाधितम् ।

न किल तथाविधव्यत्ययदशाविरहितपरमपरोक्षव-
पुषः प्रकृष्टातिशयैश्वर्योपपन्नज्ञानानन्दमहिम्नो देवता-
विशेषस्य साधकं किमपि प्रमाणं प्रतिभाति । तथाहि—
अपरोक्षत्वेन सकलप्रमाणज्येष्ठस्य प्रत्यक्षप्रमाणस्य ताव-
न्नासौ गोचरः न ह्यतीन्द्रियग्रहणक्षमत्वं प्रत्यक्षस्य सम्भ-
वति । अथ व्यवहितविप्रकृष्टार्थविषयं योगिप्रत्यक्षं तत्स-
त्तानिश्चायकमिति चेत् । तन्न । यतोऽस्मदाद्यतीन्द्रियार्थ-
दर्शिनो योगिनस्सूक्ष्मादिविषयं तत्प्रत्यक्षं तेन चेश्वरस्साक्षा-
त्क्रियत इति सर्वमेतदनुपपन्नं प्रमाणाभावात् । अतीन्द्रि-
योऽतीन्द्रियार्थदर्शी च कश्चित्साधयितुमिष्टः । तस्य तथा-
विधपुरुषप्रत्यक्षेणासिद्धेन साधनं प्रामाणिकस्यापि भवतः
किमिति न त्रपावहम् । नन्वस्त्यत्रानुपहतसामर्थ्यमनु-
मानम् । तथाहि—जगदिदमुर्वीपर्वतसरित्समुद्रादिधर्मि
कार्यमिति साध्यो धर्मः । सावयवत्वात् । यद्यत्सावयवं तत्त-
त्कार्यं यथा वलभिप्राकारपुष्करिण्यादि विपक्षव्यावृत्तश्चायं
हेतुः । यत्र किलाऽऽत्मादौ कार्यत्वं नास्ति तत्र सावयव-

त्वमपि नास्तीति । न चास्य हेतोरीश्वरशरीरेणानैकान्तिकत्वम् । यथाहुर्जैमिनीयाः "अनेकान्तश्चहेतुस्ते तच्छरीरादिना भवेत्,, । इति । तस्याऽपि तदिच्छाकार्यत्वेनास्माभिरिष्यमाणत्वात् । इति । सिद्धे च जगतः कार्यत्वे यद्यत्कार्यं तत्तद्विशिष्टज्ञानाक्रियोपपन्नकर्त्रविनाभावि घटपटादिकार्यवत् । कार्यं चेदं जगत् । तस्मादिदमपि निरतिशयज्ञत्वकर्तृत्वसम्पन्ननिर्मातारं गमयति । यश्चात्र निर्माता स ईश्वर इति किमेतन्न प्रमाणम् । भवेदेतत्प्रमाणं यद्यबाधितं स्यात् । यावता परमाण्विन्द्रियादेर्जगद्भागस्यासिद्धं सावयवत्वमिति भागासिद्धोऽयं हेतुः । परमाणूनामचैतन्ये सत्यनेकत्वात् घटादिवत् कार्यत्वमव्यभिचारीति किल भवतामभ्युपगमः । यदप्येतद्दृष्टान्तीकृतं वळभिप्राकारपुष्करिण्यादि तद्गतमुपादानसहकारिकारणाद्यानुगुण्यवैगुण्यनिर्वृत्तसदसत्सन्निवेशं सावयवत्वं तदन्यदेव तत्तत्सन्निवेशविसदृशमितरदेव हि महीमहीधरादिगतं सावयवत्वं वस्तुसादृश्यावलम्बनपूर्वकव्याप्तिदर्शनाहितसंस्काराच्च तदनुगुणसाध्यसाधनार्थं प्रामाणिकमिति प्रवर्तेत इति युक्तम् । न पुनस्सावयवत्वं शब्दमात्रसामान्याश्रयणेन । यदाह धर्मकीर्तिः—

"सिद्धं यादृगधिष्ठातृभावाभावानुवृत्तिमत् ।
सन्निवेशादिमद्युक्तं तस्माद्यदनुमीयते ॥

वस्तुभेदप्रसिद्धेऽपि शब्दसाम्यादभेदिनः ।
न युक्ताऽनुमितिः पाण्डुद्रव्यादिव हुताशनः ॥"

इति । अपि च वल्भ्यादीनां पक्षान्तर्भावात् दृष्टान्तत्वायोगः । न च दृष्टं कारणमपहाय कारणान्तरमीश्वराख्यं कल्पयितुमुपपन्नम् । एवं हि सति सर्वत्र कार्यकारणभावो विप्लवेत् । तदुक्तम्—

"यस्मिन् सति भवत्येव तत्ततोऽन्यस्य कल्पने ।
तद्धेतुत्वेन सर्वत्र हेतूनामनवस्थितिः" ॥ इति । किंच

न तावदशरीरनिर्मातृदेवताविशेषाभ्युपगमो युक्तः । तस्य जगल्लक्षणकार्यसम्पादनासम्भवात् । यदाह—

"कार्यं शरीरयुक्तेन कर्त्रा व्याप्तं सदैव यत् ।
कार्यत्वात्तेन जगतः कर्ता देही प्रसज्यत" ॥ इति ।

ततश्च धर्म[1]स्वरूपविपरीतसाधनः कार्यत्वहेतुः । शरीरवत्वेत्वस्मदादिवदुत्पत्तिप्रळययोगित्वमतश्चास्य शरीरं स्वनिर्मितं कर्त्रन्तरनिर्मितं वा । स्वनिर्मितत्वे किमसौ सर्गकाले सशरीरश्शरीररहितो वा । देहेन्द्रियरहितश्चेत् तर्ह्यपि न क्वचित्किञ्चित्कार्यं दृष्टमित्युक्तम् । शरीरवांश्चेत् शरीरं सृजति । तर्हि तदप्यस्य शरीरं किङ्कृतम् । स्वकृतत्वेऽन्य-

---

1. साध्यधर्मस्वरूपेत्यर्थः ।

कृतत्वे वा अनवस्थेत्येवमादिबाधकसद्भावात्तत्साधकं प्रमाणं न किञ्चिदुपपद्यते ।

## दीपिका ।

एवं सामान्येन देवतायाश्शब्दमात्रत्वं प्रसाध्य तद्विशेषस्येश्वराख्यस्य सद्भावे प्रमाणाभावो "न च तत्साधकमित्यादिना प्रोच्यत इत्याह । **न किञ्चेत्यादि** । तत्र तावदीश्वरस्य प्रत्यक्षाविषयत्वमाह **अपरोक्षत्वेनेत्यादि नहीत्यादि** यदाहुः "सति सम्प्रयोगे पुरुषस्य इन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षनिमित्तम् । विद्यमानोपलम्भनत्वादि"ति । **अथेत्यादिना** योगिप्रत्यक्षं प्रमाणत्वेनाशङ्क्यते । परिहरति **तन्नेत्यादि** प्रमाणाभावाद्योग्येव तावन्न सिद्धः । किं पुनस्तत्प्रत्यक्षेणेश्वर इति । ईश्वरसद्भावेऽनुमानं प्रमाणं भवतीति चोदयति **नन्वित्यादि** । भरद्वाजादीनां सिद्धान्तशास्त्रानधिगमात् । पौराणिकमतेनेश्वरस्यैव शरीरमभ्युपगम्योच्यते । **तस्यापीत्यादि** । तस्यापि[1] बाधामाह **भवेदेतदित्यादि** । तत्र सावयवत्वादिति हेतोर्बाधामाह **परमाण्विन्द्रियादेरित्यादि** । भवताम**भ्युपगम** इति । युष्मादृशां परमाण्वनित्यत्ववादिनां सांख्यादीनामित्यर्थः । तर्हि तेनैव तेषां कार्यत्वमिति चेत् । न । नित्याः परमाणवः । निरवयवद्रव्यत्वात् आत्मवदित्याद्यपि वक्तुं शक्यं यतः अत एव जगतां कार्यत्वासिद्धेः कर्तृपूर्वकत्वमपि बाधितं भवतीति । इदानीं जगतः कार्यत्वमभ्युपगम्य दूषणमाह **किञ्चेत्यादि** ।

## वृत्तिः ।

अथोच्यते वाक्यमागमलक्षणं प्रमाणमस्ति । यदत्यन्तातीन्द्रियार्थनिश्चायकं ततः प्रवर्तमानस्याभिप्रेतसम्प-

---

1. अनुमानस्यापीत्यर्थः ।

त्वेर्दृष्टत्वात् । तदाहुः "अक्षलिङ्गादिगोप्यार्थः पुंसश्शास्त्रेण दर्शित" इति । एतदेव निराकर्तुमाह ।

**वाक्यं तदन्यथासिद्धम् ।**
**लोकवादाः क साधवः ॥ ९ ॥**

पुराणेतिहासादिगीतम्[1] । यथा—महाभारतादौ भगवान् व्यासमुनिः "स शिवस्तात तेजस्वी प्रसादात् द्योततेऽग्रतः । सेन्द्रादिषु च देवेषु तस्यैवैश्वर्यमुच्यते । तं गच्छ शरणं देवदेवादिं भुवनेश्वरं" इत्यादि । श्रुतावपि "यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवनाविवेश । तस्मै रुद्राय नमो अस्तु । तथा—त्र्यम्बकं यजामह इत्यादि । तदेतदन्यथा सिद्धम् । अत्र हि पौर्वापर्यपर्यालोचनकाकुतो यथाश्रुतश्रुतिसमुत्पादितो न वाक्यार्थः । अनेन प्रतीतिमात्रविप्रलब्धबुद्धयस्तथेति प्रतिपत्तिं भावयन्ति । यथा किल विषं भक्षय मा परगृहे भुङ्क्था इत्यत्र विषभक्षणेऽभ्यनुज्ञानं श्रूयमाणमपि न वाक्यार्थः । किन्तर्हि प्रतिकूलगृहभोजननिषेध एव तात्पर्यम् । एवं भारतादावुपाख्यानद्वारेण सोद्वेगस्य विजिगीषोर्द्विषदुपशमो निर्विघ्नः । क्षत्रियाणां च स्वधर्मानुष्ठानमभ्युदयाय । इत्येवमर्थः । श्रुतौ तु मन्त्रार्थवादपदानां कार्यातिशया-

---

१ वाक्यमिति शेषः ।

वेदनं विनाकृतानां प्रवृत्तेश्श्रद्धावहविविधयज्ञज्ञानोप-
जननप्रतीत्यङ्गत्वात् न स्वरूपयाथार्थ्यमिति न तदुक्ति-
मात्रं विशिष्टदेवतासद्भावावेदकम्। तथा चाहुः। स्तुतिवा-
दकृतज्ञान....मति विभ्रमः। पौर्वापर्यापरामृष्टश्शब्दोऽन्यां
कुरुते मतिम्। इति। अथ सकललोकसिद्धा प्रसिद्धिरन-
पह्नवनीया विद्यते। यत्सर्वो ह्ययमाविद्वदङ्गनाबालो जनः
परमेश्वरस्येच्छाविधिप्रेरितः प्रवर्तते। दैवमेवात्र कारण-
मिति ब्रुवाणो दृश्यते च। उपाख्यानानि च ते ते दक्ष-
मखमथनकालदमनमदनदाहान्धकवधत्रैलोक्याक्रमणाद्यु-
पाराचितानि बहुशः पठन्तः कथयन्तश्शृण्वन्तश्चोपलभ्यन्ते।
तदुद्देशेनात्र योगनियमजपतपःप्रभृतिक्लेशकारिणीमपि
कर्मपद्धतिमनुतिष्ठन्तः मानवा गमयन्ति। तदुत सन्ति
देवताविशेषा इत्याह लोकवाद इत्यादि। अपर्यालोचित-
पौर्वापर्यगतानुगतमूर्खजनप्रवार्तितात् प्रवादमात्रात् अस-
कृतिसद्धव्यभिचारात् वस्तुसिद्धिमिच्छन् अहो बत वृथैव
दैन्यास्पदतामुपयातोऽसि। अथ प्रत्ययिनपुरुषप्रवर्तितः
प्रवादः तर्ह्यागम एवासौ। प्रत्ययितत्वं च तस्य कतमेन
प्रमाणेन सिद्धम्। तत्प्रवर्तितादागमप्रामाण्याच्च तत्सिद्धिः
तत्सिद्धेश्चागमप्रामाण्यं इति इतरेतराश्रयदोषः। नित्यत्वे-
त्वागमस्य कार्य एवार्थे प्रामाण्यम् न सिद्ध इति न युष्म-
दभिमतदेवताविशेषः कथमपि सिध्यति ॥ ९ ॥

दीपिका ।

वाक्यं तदन्यथासिद्धमिति व्याख्यातुमाशङ्कामाह । **अथोच्यत इति** । अथोत्तरग्रन्थेन सूत्रखण्डेनोच्यत इत्याह । **एतदेवेत्यादि** । **पुराणेति**-हासादिगीतमिति प्रवर्तकवाक्यसामान्यविवक्षया । **श्रुतावपीति** विशेषविवक्षया । उभयप्रकारमपि वाक्यं दूषयितुं तदन्यथासिद्धमिति व्याचष्टे । **तदेतदन्यथा** सिद्धमिति । चोदनानां कार्य एवार्थे प्रामाण्यमित्यभिप्रायः । तदेवोपपादयति **अत्र हीत्यादि** । तर्हि वेदे ह्यर्थवादादिवाक्यानामप्रामाण्यप्रसङ्गः । अत आह **श्रुतौ त्वित्यादि** इदानीमुपमानार्थापत्त्योरनुमानान्तर्भावात्तान्यनादृत्य लोकवादाः क साधव इति व्याख्यातुं पौराणिकमतेनैतिह्यप्रमाणसिद्धत्वमीश्वरस्याऽऽशङ्कते । **अथ सकललोकसिद्धेत्यादि आहेति** । उत्तरमाहेत्यर्थः । तमेव सूत्रखण्डं व्याचष्टे **अपर्यालोचितेत्यादि** । नैतिह्यस्य प्रामाण्यं सम्भवति । व्यभिचारदर्शनादिति भावः । ननु आप्तप्रवर्तितस्य प्रवादस्य व्यभिचारो न दृश्यत इत्याशङ्कते । **अथेत्यादि** अत्रापि दूषणमाह **तर्हीत्यादि** । आगमस्य तु अयमेवोक्तो दोष इति । आप्तत्वंच तत्तद्वाक्यकर्तॄणाम् । न प्रमाणसिद्धमित्याह । **प्रत्यायितत्वं चेत्यादि तस्येति** आगमकर्तुः । ननु "वेदेऽस्ति संहिता रौद्री वाच्यो रुद्रश्च देवता" इत्युक्तमत आह **नित्यत्वे त्वित्यादि**। **एतच्च पूर्वोक्त**-मिति ॥ ९ ॥

वृत्तिः ।

इति शक्रोक्तिमभिधाय हारीतमुनिस्स्वोक्त्या स्वशिष्यानाह ॥

**इत्यनीशवचोवारि-**
**वेलानुन्नोऽब्धिनेव सः ।**

---

कर्तुः प्रमाणेति पाठभेदः ।

**शक्रेण न चचालैषां**
**धीशैलस्सारगौरवात् ॥ १० ॥**

इत्यनेन क्रमेणेश्वरनिराकरणवचनान्येव निम्नमार्गानुसरणात् वारीणि तेषां वेला समुल्लासः तया नुन्नः प्रेरितोऽप्येषां भरद्वाजादीनां सम्बन्धी मतिपर्वतः सारवत्वात् गुरुत्वाच्च हेतोर्न **चचाल** न चकम्पे । केन नुन्न इत्याह । **अब्धिनेव** शक्रेण । यथा किल वेलाचलस्समुद्रः जलतरङ्गदृढाहतः स्वावष्टम्भनान्न चलत्येवं मुनिमतिस्तीक्ष्णाग्रत्वादि साधर्म्यात् पर्वतेन रूपीकृतः स्वस्थैर्यान्न व्यचलत् ॥ १० ॥

दीपिका ।

इत्यनीशेत्यादिसूत्रमवतारयति इति **शक्रोक्तिमित्यादि** **सारवत्वात्गुरुत्वाच्चेति** । बुद्धेस्सारवत्वं सूक्ष्मार्थग्राहित्वम् । गुरुत्वं च स्थैर्यम् । गृहीतार्थापरित्यागे इत्यर्थः ॥ १० ॥

वृत्तिः ।

ततश्चेन्द्रं प्रति ते पुनरिदमभ्यदधुः ।

**न जातु देवतामूर्ति-**
**रस्मदादिशरीरवत् ।**
**विशिष्टैश्वर्यसम्पन्ना**
**साऽतो नैतन्निदर्शनम् ॥ ११ ॥**

---

१. गृहीतार्थपरिग्रह इति पाठः ।

विभूतियोगतारतम्यमस्मदादिलोचनगोचरसशरीरसामान्यपुरुषमात्राश्रयं दृष्टं अदृष्टविग्रहस्य देवताविशेषस्याणिमाद्यैश्वर्यसम्पत्तिमनुमापयति तत्कथं प्राकाम्यशक्तिजनितं युगपदनेकदेशसन्निधिमसम्भाव्यं मन्यसे। नहि कदाचिदस्मदादिशरीरादिवत् देवतामूर्तिः क्लेशकर्मविपाकयोगिन्यव्यापिका वा। इच्छामात्रेणास्मदादिसृष्टिस्थितिध्वंसकरणक्षमविशिष्टैश्वर्यसम्पन्नत्वात्। मूर्च्छिताणुत्राणाद्धि मूर्तत्वं अस्मदादिमूर्तत्वविलक्षणं चास्य। ततश्च युगपदनेकदेशसन्निधिनिराकरणायोपात्तस्य मूर्तत्वाख्यस्य हेतोरप्रयोजकत्वम्। दृष्टान्तश्चानुपपन्नः। साध्यधर्मासिद्धत्वात्। साध्यो हि धर्मः तुल्यकालमनेकदेशासन्निधिलक्षणोऽत्र सर्वात्मना नास्तीति यस्मादस्मदादिमध्यवर्तिनां मूर्तिमतां सतामप्यणिमादिसिद्धिप्रकर्षयोगिनां युगपदनेकदेशसन्निधिरदृष्टत्वेऽपि नासम्भाव्यः। न च निरतिशयसकलोत्कर्षयोगिनः परमेश्वरस्य स्वदर्शनाभिनिवेशिभिः कुम्भकारादिनिदर्शनकलुषीक्रियमाणजगन्निर्माणस्य कियान् किमाश्रयः किमुपकरणः इत्याद्यसद्विकल्पविप्लवोऽनुप्रविशति। तथाचोक्तं सिद्धचूडामणिना।

किमीहः किङ्कायस्स खलु किमुपायस्त्रिभुवनं
किमाधारो धाता सृजति किमुपादान इति च।

अतर्क्यैश्वर्ये त्वय्यनवसरदुःस्थो हतधियः
कुतर्कोऽयं कांश्चिन्मुखरयति मोहाय जगतः ॥

इति । यथाच अशरीरदेवताविशपसम्भवोऽसम्भवाद्वाधितः तथा ईश्वरप्रकरणे वक्ष्यामः । स तु तथा तथा प्रतिपाद्यमानोऽपि न तन्निराकरणप्रवीणानां प्रयोजनहेतुर्भविष्यतीति । यथा चाह राजाऽजानको उत्कलदेवः—

समुज्वलन् न्यायसहस्रसाधितो-
प्युपैति सिद्धिं न विमूढचेतसाम् ।
महेश्वरः पाणितले स्थितोऽपि सन्
पलायते देवहतस्य सन्मणिः । इति ॥ ११ ॥

## दीपिका ।

"न जातु इति सूत्रस्य सम्बन्धमाह **ततश्चेत्यादि** अयमत्र सिद्धान्तवादिनामभिप्रायः—देवतायाश्शब्दमात्रत्वेऽभ्युपगम्यमाने ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादौ स्वर्गाद्यात्मकमपि फलं प्रमाणान्तरासिद्धत्वात् शब्दमात्रमेव स्यात् । अथ पुराणेतिहासादिप्रसिद्धत्वात् स्वर्गशब्दोऽपि विशिष्टमेवार्थं फलत्वेनाभिधत्त इत्युच्यते तदिहापि समानमिति देवतायाश्शब्देतरत्वासिद्धिरिति । अतश्च शब्देतरत्वे देवतायास्सा किं विग्रहवती आविग्रहवती उभयरूपा अनुभयरूपा वेति ये विकल्पाः पूर्वपक्षोक्ताः तत्रोत्तरयोः पक्षयोरनभ्युपगमेन परिहारः । विग्रहवत्त्वे यद्दूषणमुक्तं युगपदनेकदेशसन्निधानासम्भव इति तस्य परिहारः न जात्वित्यादिनोच्यत इति दर्शयति **विभूतियोगतारतम्यमित्यादि** । **क्लेशकर्मविपाकातिशययोगिनीति** । **नहि** ब्रह्मेन्द्रादिदेवताशरीराणि अस्मदादिवद्दुःखबहुळानि **अव्यापिकावेति** स्वाधिकारान्तमणिमाद्यैश्वर्ययोगिनीत्यर्थः । **इच्छामात्रेणेति** प्राकाम्यशक्त्या

यदाहुः—अनेकानि शरीराणि योगी निर्माय चात्मनः । युगपत्स्त्रीसहस्राणि भुङ्क्ते प्राकाम्यशक्तितः" इति । **मूर्च्छिताणुत्राणाद्धि** मूर्तत्वमिति । मूर्च्छितानामज्ञानबहुळानामणूनां, भूतानां त्राणादित्युपलक्षणं स्थित्यादिकरणादित्यर्थः । अणिमादीनां कार्यकरणात्मकशरीरजत्वात्तत्रैव तेषां तत्कार्याणां च सृष्ट्यादीनामारोपः । यदुक्तं मतङ्गे 'तृतीयं कार्यतस्सिद्धमैश्वर्यमणिमादिकम् । प्राप्त्यादयो गुणाः पञ्च योगिनः करणात्मजा" इति । **योगिना**मिति । न च योगिनोऽस्माकमसिद्धा इति वाच्यम् । यच्छ्रूयते "आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम् । ज्ञाननिर्मथनाभ्यासाद्देवं पश्येन्निगूढवत् । इति । अत एव योगिप्रत्यक्षेणाऽपि देवतासिद्धिः । इत्थं सामान्येन देवतास्तित्वं प्रसाध्य तद्विशेषमीश्वराख्यं दर्शयति । **न चेत्यादि** अशरीरत्वेऽपि देवतायाश्शरीरनैरपेक्ष्येणापरिमितशक्तिमत्वात् अर्थसाधकत्वम् । अतश्शब्देनाविनाभूता सती तत्र तत्र सान्निध्यमेति केवलस्तु शब्दोऽचेतनत्वान्न फलादिदाने शक्तः कर्माऽपि जडत्वादधिष्ठातारं विना न फलजनकमिति वक्ष्यामः । यदुक्तं ईश्वरस्याशरीरत्वे जगत्करणं नोपपद्यत इति । तत्राह **यथाचाशरीरदेवताविशेषसम्भवोऽसम्भवात्** बाधित इति । अशरीरस्याऽपि स्वदेहस्पन्दादौ कर्तृत्वं दृष्टमिति भावः । उत्तरत्राऽपि भविष्यतीत्याचार्य आह "**तथैवेश्वरप्रकरणे वक्ष्याम**"इति । ततश्चानुमानेनापि ईश्वरस्य सिद्धिरिति भावः । परमाणूनां यथा कार्यत्वं तथोत्तरे वक्ष्यामः । "भूतावधि जगद्येषां कारणं परमाणव" इत्यादौ । इति ॥ ११ ॥

वृत्तिः ।

**ईदृशाभ्यां च हेतुदृष्टान्ताभ्यां साध्यासिद्ध्यभ्युपगमेऽन्यत्राप्ययमेव न्यायः प्रसज्यत इत्याह ।**

अथास्त्वेवं घटे न्याय
श्शब्दत्वादिन्द्रशब्दवत् ।
नादत्ते घटशब्दोम्भ
श्चन्द्रशब्दो न राजते ॥ १२ ॥

भवता किल शब्दमात्रं हि देवतेति प्रतिज्ञातं अतश्शब्दव्यतिरिक्तदेवतानभ्युपगमे सत्येतदापतितम् । यदुत वाचकव्यतिरिक्तवाच्यार्थासम्भवः । इन्द्रादिशब्दानां यथा नान्यो वाच्योऽर्थो विद्यते एवं शब्दत्वाविशेषात् घटादावप्ययमेव न्यायः । न चैतद्युक्तम् । अनुभवविरोधात् । तथाहि नादत्ते घटशब्दोम्भ इति घटते चेष्टतेऽर्थक्रियार्थमिति घटः । चन्दति आह्लादयति दीप्यते चेति चन्द्र इत्येवं विधया शब्दव्युत्पत्त्या शब्दव्यतिरिक्तवाच्यार्थासम्भवतो घटशब्दस्यैवोदकाहरणं चन्द्रशब्दस्यैव चाऽऽह्लादनादि प्राप्तं न चानयोस्तदस्ति अपितु तद्वाच्ययोः पृथुबुध्नोदराकारभास्वरबिम्बस्वरूपयोस्तत्तदर्थक्रियाकरणक्षमत्वं दृष्टम् । अतो न वाच्यवाचकयोरैक्यम् । ततश्च न शब्दमात्रं देवता किं तर्हि तद्वाच्यैवेति सिद्धम् ॥ १२ ॥

दीपिका ।

अथास्त्वेवमिति सूत्रमवतारयति ईदृशाभ्यां चेत्यादि मूर्तत्वादसम-

दादिवत् इत्येताभ्यां हेतुदृष्टान्ताभ्यां देवतायाश्शब्दमात्रत्वाभ्युपगमेपि अनुभवविरोध इत्यर्थः ॥ १० ॥

वृत्तिः ।

इदानीं वाक्यं तदन्यथासिद्धमिति परमतमनूद्य दूषयति ।

**अथान्यविषयं वाक्य**
**मस्तु शक्रादिवाचकम् ।**
**कर्मरूपादिशब्दानां**
**सार्थकत्वं कथं भवेत् ॥ १२ ॥**

इन्द्रो वज्री हिरण्मय इत्यादीनि शक्रादिदेवतालिङ्गानि मन्त्रार्थवादपराणि । न त्वेषां स्वरूपयाथार्थ्यमिति यद्भवद्भिरभिहितं तत्तथाऽस्तु । स्वार्थप्रतिपादनपराणां तु श्रूयमाणानां कर्मरूपादिशब्दानां कथमर्थवत्त्वं स्यात् । तत्र कर्मशब्दाः क्रियाभिधायिनः व्रीहीनवहन्तीत्यादयः रूपशब्दा जात्यादिशब्दाश्च । यथा श्वेतच्छागमालभेतेत्यत्र श्वेतशब्दस्य रूपाभिधायिनश्छागस्य च जातिवाचिनश्शक्रादिशब्दवच्छब्दत्वाविशेषात् स्वरूपयाथार्थ्यासम्भवे सत्यानर्थक्यम् । ततश्च चोदनावाक्यानां अकिञ्चित्करत्वं । यद्वा शक्रादिवाचकस्य वाक्यस्य अन्यविषयत्वे कल्प्यमाने तद्विषयाणां इन्द्रो वृत्रमवधीदित्या-

दीनां कर्मशब्दानां सहस्रदृग्वज्रपाण्यादीनां च रूपाद्य-
भिधायिनां शब्दानां कथमर्थवत्त्वं स्यात् । न चार्धजर-
तीयन्याय उपपादयितुं शक्यः । येन विधिशब्दानामेव
स्वरूपयाथार्थ्यं न इन्द्रादिशब्दानामिति स्यात् ॥ १३ ॥

दीपिका ।

अथान्यविषयमित्यादिसूत्रस्य सम्बन्धमाह इदानीमित्यादि तथा-
स्त्विति शब्दो हि तावत् विदितपदपदार्थसम्बन्धस्य मुख्यतोऽर्थप्रत्यायक-
त्वेन भवतोऽपि सिद्धः । ततस्तत्प्रत्यायकत्वानुपपत्त्या इन्द्रादिशब्दानामपि
स्वरूपयाथार्थ्यमनिवार्यमेव तथाप्यभ्युपगम्य ब्रूम इत्यर्थः । यद्वेति व्याख्या-
नान्तरम् । कथं पुनर्विषं भक्षयेत्यादेरन्यपरत्वं आचार्यस्य गृहे भुङ्क्था
इत्युत्तरवचनसामर्थ्यादिति ब्रूमः । तदेवमागमेनापि विशिष्टदेवतासम्भव
इति ॥ १३ ॥

वृत्तिः ।

यदप्युक्तं लोकवादाः क साधव इति तदयुक्तं यतः ।

**प्रवादोऽप्यखिलो मिथ्या**
**समूलत्वान्न युक्तिमत् ।**
**स चेदमूलो भूतानां**
**हतास्सर्वप्रवृत्तयः ॥ १४ ॥**

नद्यास्तीरे गुडशकटं पर्यस्तमित्यादेर्निर्मूलस्यापि
प्रवादस्यैकान्तेन न मिथ्यात्वम् । कदाचित्संवादित्वात् ।

ततश्च सर्वप्रवादो न सत्य इत्येतन्न युक्तिमत्। न प्रमाणोपपन्नम् । समूलत्वे सति मिथ्यात्वासिद्धेः । मूलं चास्यागमः । तथा चाहुः "प्रसिद्धिमागमः प्राप्तो लोक इत्यभिधीयते । इति । अथ निर्मूलो यः प्रवादः स चेन्मिथ्यारूपः तदप्ययुक्तं यस्मादेवं कल्प्यमाने भूतानां सर्वाः प्रवृत्तयो व्याहन्येरन् । सर्वो हि हितप्रेप्सुरहित-जिहांसुर्वा न प्रमाणघटनां कृत्वा तां पुरस्कृत्य लोकव्य-वहारे दृष्टफले सेवाकृष्यादौ अदृष्टफले वेष्टापूर्तादौ प्रव-र्तते किन्तु प्रायशो गतानुगतिकया प्रवादमात्राधिवासि-तमतिः[1] । कीदृशं च भवता प्रवादस्य मूलमन्वेष्टव्यं यदि चिरकालप्रवृत्तत्वेन बहुजनोद्घुष्यमाणत्वं तद्युक्तमेव अन्यथा प्रवाद एव नासौ । तथा सति नास्य मिथ्यात्वम् । चिरतरमनेकजनप्रथितत्वेऽपि कुतोस्योद्भव इत्येवंविधं मूलं परीक्ष्यते किन्तर्हि आगमपरीक्षैवेयम् । न लोकवादवि-चारः । न चैतदेवम् । यतो भवद्भिरपि श्रुतिरूपादागमा-दन्य एव सज्जनसेवितो व्यवहारशिष्टाचाराख्यो धर्म-मूलत्वेनाभ्युपगत इत्यलं तत्प्रद्वेषणेन । तदेवं समूलेन लोकप्रवादेनेश्वराख्यविशिष्टदेवतासम्भवस्तूपपादितः। "उ-पमन्युर्हरं दृष्ट्वा विमन्युरभवन्मुनिः" । किं न नाम अ-खिलप्रतीतमेतत् । यथा हि मुनिरुपमन्युः परमेश्वरेण

१. प्रवर्तत इति शेषः ।

वरप्रदानेनानुगृहीतः तथाच महाभारते आनुशासनिके पर्वणि भगवद्व्यासमुनिना उपमन्युवाक्यं दर्शितम् ।

आगम्य भगवानीशः प्रहसन्निव शङ्करः ।
वत्सोपमन्यो प्रीतोस्मि पश्य मां मुनिपुङ्गव ।
दृढभक्तोऽसि विप्रर्षे मया जिज्ञासितस्त्वमि ।
अनया वत्स भक्त्या ते ह्यत्यर्थं प्रीतवानहम् ।
तस्मात्सर्वान् प्रदास्यामि वरान् यान् मनसि स्थितान् । इति ।

अथोच्यते मिथ्यैतदुपमन्युना आत्मप्रभावकथनायोक्तम् । अत्र हि किं प्रमाणं यदेवायमसौ भगवताऽनुगृहीत इति । तदसत् । यस्मात्कथं तस्य वचो मिथ्या यस्य वश्यः पयोनिधिः यस्य किल सकलमुनिजनप्रत्यक्षपरिदृश्यमानः क्षीराब्धिस्स्वाधीनः तस्य वचसः किं नाम मिथ्यात्वम् । अयमाशयः परमेश्वरात्प्राप्तवरोऽहमिति अनृतवादित्वं तदिदानीं तस्य भवेद्यदि दुग्धोदधिवशीकारः प्रचुरमुनिजनप्रत्यक्षो न स्यात् । यदि च संवादीन्यपि वचांसि मिथ्या तर्हि न किञ्चित्सत्यं वचनम् । प्रशान्तरागद्वेषाणां साक्षात्कृतभूतभविष्यदर्थानां मुनीनामपि मिथ्यावादित्वाभ्युपगमे मन्वादयोऽपि दत्तदक्षिणास्त्वयेत्यहो त्वद्दर्शनकौशलं किञ्च—

"क्रोडीकृतो हि पाशेन विषज्वालावलीमुचा ।
हुङ्कृत्य मोचितः पत्या दृष्टश्श्वेतो घनैर्जनैः ॥

विषानलार्चिःपरम्पराक्षेपभीषणेनाशीविषपाशेन विवशीकृतः श्वेतः पातीति पतिः तेन पत्या त्राणशीलेन परमेश्वरेण हुङ्कारमात्रं कृत्वा क्रोधाग्निना भस्मीकृत्य मोचित इति घनैरविरलैर्भूयो जनैरस्मत्सजातीयैर्मुनिप्रभृतिभिश्च दृष्टः। अत्राऽपि च त्रिकालामलदर्शिभिर्देवैश्च प्रवर्तिते प्रवादे यद्यसमाश्वासस्तर्हि आगममेव न सहत इति वक्तव्यम्। तथाच सति श्रुतिरप्यसहनस्य भवतः प्रामाण्यालाभे दैन्येन भीतभीता मुखमन्वीक्षत इति तदनुकम्पया संत्यज्यतामतिसाहसम्। ननु मिथ्यात्वहेतूनां दोषाणां कर्त्राश्रयत्वादकृतकत्वेन नित्यत्वश्रुतेः अतस्तस्याः प्रामाण्याय कोऽयमुपहासः। न कश्चित् किन्तु कर्त्रभावनिश्चये प्रमाणं नोत्पश्यामः। प्रत्युत" स्वयम्भुवे नमस्कृत्येत्यादि वाक्यवत् रचनावत्त्वात् कर्तृव्यापाराविनाभावित्वमुत्प्रेक्षामहे इत्यलमनेन। प्रकृतमनुसरामः॥ १४॥

## दीपिका।

इष्टापूर्तादाविति इष्टं यज्ञेषु यद्दानावाप्तिः। कूपतटाकादि पूर्तमिति। भवद्भिरित्यादि "वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदा" मित्युक्तं यतः समूलेन लोकप्रवादेनेति पुराणेतिहासादिसिद्धेन। समूलत्वमेव दर्शयति यथाहीत्यादि। तर्ह्यागममेव न सहत इति। भवानिति शेषः। आगमानां देवादिप्रणीतत्वादिति भावः। प्रसङ्गाच्छ्रुतीनामप्याप्तप्रणीतत्वेन प्रामाण्यमिति दर्शयति। तथाचेत्यादि अत एव चोद्य-

वाद्याह नन्वित्यादि । अचार्य आह न कश्चिदिति । नायमुपहास इत्यर्थः । अत एव यथार्थमाह किंत्वित्यादि उत्तरसूत्रमवतारयति प्रकृतमनुसराम इति ॥ १४ ॥

इति वादानुषङ्गेण
हरशंसाप्रहर्षितान् ।
साश्रुगद्गदवाचस्तान्
वीक्ष्य प्रीतोऽभवद्धरिः ॥ १५ ॥

वृत्तिः ।

उक्तवत्प्रस्तावायातपरमेश्वरप्रशंसाहर्षप्रवृत्तानन्दवशादविस्पष्टगिरस्तान् भरद्वाजादीन् दृष्ट्वा इन्द्रस्तान् प्रति परं तुतोषेत्येवं हारीतमुनिः स्वशिष्यानाह ॥ १५ ॥

दीपिका ।

तान् प्रति तुतोषेतीति तीव्रशक्त्याघ्रातत्वेनावेत्य तेषामनुग्रहाय मतिं चक्र इत्यर्थः ॥ १५ ॥

स्वं रूपं दर्शयामास
वज्री देवश्शतक्रतुः ।
तरुणादित्यसंकाशः
स्तूयमानं मरुद्गणैः ॥ १६ ॥

वृत्तिः ।

प्रत्यग्रभास्वरं देवगणैस्स्तूयमानं आत्मीयरूपं वज्रपाणिः देवश्शतक्रतुः प्रकटीचकार । तेजोतिशययोगस्य हेतुतया वज्रीति शतक्रतुरिति च विशेषणद्वयं कुलिशस्य हि स्वभाव एवायं यदद्भुतप्रभास्वरत्वं शतक्रतुत्वाच्च तज्जनितपुण्यप्रभावोद्भूतभूरिमहस्समूहत्वमिति ॥ १६ ॥

दीपिका ।

स्वं रूपमित्यादेस्सूत्रस्यार्थद्वयं विद्यते । तत्रैकस्तावदाचार्येण प्रदर्शितः । अपरस्तु प्रदर्श्यते । शतक्रतुः अनुष्ठितानन्तशैवक्रतुराचार्य इत्यर्थः । अन्येषां शास्त्रोपदेशाद्यनधिकारादेव पूर्वसूत्रप्रकृतात्रिदशाधिपः । वज्रीत्युपलक्षणम् । वज्रहस्तत्वसहस्रनेत्रत्वादिविशेषणविशिष्टो भूत्वा मलान्धकारापगमादुदर्कसन्निभं मरुद्भिः ब्रह्मादिभिर्गणैश्च विद्येश्वरादिभिस्स्तूयमानं तेषां भरद्वाजादीनां आत्मीयमनागन्तुकं सर्वज्ञसर्वकर्तृत्वात्मकं रूपं प्रकटीचकार । एतदुक्तं भवति शक्तिपातनिश्चयानन्तरं प्रकटीकृताधिकारनिबन्धननिजशरीरस्त्रिदशाधिपो दीक्षाख्येनाऽऽत्मव्यापारेण तेषां मलादिबन्धमपनीय शिवत्वं व्यक्तं करोतीति । नन्वेवं चेदनन्तरमेव शरीरपातप्रसङ्गः । असद्योनिर्वाणदीक्षायां प्रारब्धकार्यकर्मभोगोपरोधेन तदसम्भवात् । यदुक्तं किरणे येनेदं तद्धि भोगत इति । इमं चार्थं प्रणामस्तुतिप्रतिपादकेनोत्तरसूत्रेण शास्त्रोपदेशान्यथानुपपत्त्या चार्थसिद्धत्वादुपेक्षितवानाचार्यः ॥ १६ ॥

ते तमृग्भिर्यजुर्भिश्च
सामभिश्चास्तुवन्नताः ।

**सोऽब्रवीदुच्यतां कामो**
**जगत्सु प्रवरो हि यः ॥ १७ ॥**
**ते वव्रिरे शिवज्ञानं**
**श्रूयतामिति सोऽब्रवीत् ।**
**किन्त्वेकोऽस्तु मम प्रष्टा**
**निखिलश्रोतृसम्मतः ॥ १८ ॥**

वृत्तिः ।

ते भरद्वाजादयस्तं प्रत्यक्षीकृतस्वरूपं इन्द्रमृग्यजुस्सामाभिः प्रह्वास्सन्तस्तुष्टुवुः । स च सर्वजगत्प्रवरो वरो भवद्भिरभ्यर्थ्यतां इति तानाह । ते तदैवमुक्ताः पारमेश्वरं ज्ञानं शास्त्रं वृतवन्तः तदभ्यर्थितं ज्ञानोपदेशं दातुं तान् प्रतिवचनं श्रूयतामित्याह । किन्तु ममैकएव भवतां मध्यात् सकलश्रोतृजनाभिमतो यथावसरमनुक्तवस्तुनः प्रष्टा भवतु । सर्वैश्चाऽपि भवद्भिश्श्रूयतामिति ॥ १७-१८ ॥

दीपिका ।

अत एवाह प्रह्वास्सन्तस्तुष्टुवुरिति । स च सर्वजगत्प्रवर इति निश्शेषभुवनपतिः उच्यतां काम इति व्याचष्टे । वरो भवद्भिरभ्यर्थ्यतामिति अथवा स चेन्द्रः । सर्वोत्कृष्टो वरो भवद्भिः प्रार्थ्यतामित्यर्थः । पारमेश्वरं ज्ञानमिति परमेश्वरप्रणीतत्वेन प्रकृष्टतरं न वामादिकमिति ॥ १७-१८ ॥

वृत्तिः ।

एवं भगवता शक्रेणोक्ते सति ।

**अथ तेषां भरद्वाजो**
**भगवानग्रणीरभूत् ॥**
**वाग्मी प्रगल्भः पप्रच्छ**
**न्यायतस्सुरपूजितम् ॥ १९ ॥**

अथानन्तरं तेषां मध्यादैश्वर्यादिगुणयोगाद्भगवान् विविधशास्त्राभ्यासाधिवासप्रशस्यवाग्युक्तत्वाच्च **वाग्मी** प्रष्टव्यावसरेषु अकौशलाप्रतिपत्त्याद्ययोगात् **प्रगल्भश्च** भरद्वाजो मुनिः **न्यायत** इति न्यायेन शिष्योचितया नीत्या युक्त्युपपन्नपूर्वपक्षीकरणेन च इन्द्रमपृच्छत् ॥ १९ ॥

दीपिका ।

अथेत्यादिसूत्रसम्बन्धमाह एवमित्यादि **ऐश्वर्यादिगुणयोगा**दिति यदाहुः "ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसश्श्रियः । वैराग्यस्य च बोधस्य षण्णां भग इतीरितः इति श्रुतिरिति । **अकौशलाप्रतिपत्त्याद्ययोगा**-दिति आदिशब्देनाधारणादिपरिग्रहः । **शिष्योचितया नीत्ये**ति । विनयादिकया श्रीमन्मतङ्गे "सुविनीतस्सुशान्तात्मा नातिदूरे न सन्निधावित्या"दि । **युक्त्युपपन्ने**त्यादि यदुक्तं तत्रैव "प्रष्टव्यं व्यक्तये शिष्यैस्सन्देहस्य पुनः पुनः" इत्यादि ॥ १९ ॥

वृत्तिः ।

किं पप्रच्छेत्याह ।

**कथं महेश्वरादेत**
**दागतं ज्ञानमुत्तमं ।**
**किञ्च चेतसि संस्थाप्य**
**निर्ममे भगवानिदम् ॥ २० ॥**

यदेतद्भगवतास्मभ्यमुपदेष्टुमारब्धम् । इतरेभ्यो ज्ञानेभ्यस्सातिशयफलत्वाच्छ्रेष्टतमं ज्ञानं तत्कथं महेश्वरात्प्रशान्तस्वरूपान्निष्कळाच्छिवात्प्रसृतम् । ज्ञानं हि द्विरूपम् । अवबोधरूपं शब्दरूपं च तदवबोधरूपं शब्दरूपारूढमर्थेषु प्रवर्तते तत्रादितः परमेश्वरादवबोधरूपमेतावत्कथं प्राप्तं कथं च शब्दरूपतामेत्य बहुभेदभिन्नं सम्पन्नम् । किञ्चाकलय्य भगवानिदमकरोत् नह्यनभिसंहितप्रयोजनः कश्चित्कर्ता किञ्चित्कार्यं कुर्वन् दृष्टः । तस्य च भगवत एतत्करणे किं कारणमित्यर्थः ॥ २० ॥

दीपिका ।

उत्तमपदं व्याचष्टे इतरेभ्यो ज्ञानेभ्य इत्यादि । सर्वान्यागमप्राप्यस्थानप्रदर्शनपूर्वं तदनधिगतार्थावबोधकत्वात् प्रमाणभूतम् । यदाहुः "अनधिगतार्थगन्तृ प्रमाणमि"ति । फलस्य च सिद्धिमुक्त्यात्मनस्साति-

शयत्वं विशुद्धत्वादपुनरावृत्तेश्च । यद्वक्ष्यति शैवे सिद्धो भाति मूर्ध्नीतरेषां मुक्तस्स्रष्टौ पुंवरोऽभ्येति नाथः" । इति । शब्दरूपतामेत्येति शब्दात्मनो ज्ञानस्य प्रकाश्यतामेत्येत्यर्थः । अयं चात्र प्रश्नार्थः । ज्ञानं हि द्विरूपम् । अवबोधरूपं शब्दरूपं च । अवबोधरूपमपि शब्दरूपारूढमेव प्रवर्तते । ततस्तच्छब्दरूपं कार्यकारणरहिताच्छिवात्कथं विद्येश्वरादिभिः प्राप्तम् । किञ्च प्रयोजनमभिसन्धायेदं शास्त्रमकरोत् इति । इदमेव चात्रोत्तरम् । अवबोधरूपं तावज्ज्ञानं सर्गारम्भ एव भोगमोक्षात्मनः पुरुषार्थस्य सिद्ध्यर्थं परमेश्वरः प्रथमं नादरूपेण प्रकाश्य पश्चादधिकारावस्थो भूत्वा शब्दरूपारूढं विद्येश्वरादिभ्य उपदिदेशेति । उपदेशश्च सृष्ट्यादौ सङ्कल्पमात्रसिद्ध इत्युक्तं पूर्वमेव ॥ २० ॥

वृत्तिः ।

अत्र प्रतिवचनम् ।

**सृष्टिकाले महेशानः**
**पुरुषार्थप्रसिद्धये ।**
**विधत्ते विमलं ज्ञानं**
**पञ्चस्रोतोऽभिलक्षितम् ॥ २१ ॥**

सर्गप्रारम्भे परमेश्वरः पुरुषार्थस्य भुक्तिमुक्त्यात्मनः सम्पत्त्यर्थं विमलमिति अवबोधात्मनो नादरूपत्वेन प्रथमं प्रसृतत्वात् अगृहीतोपाधिभेदम् । परतस्तूर्ध्वप्राग्दक्षिणपश्चिमोत्तरस्रोतःपञ्चकेनाभितस्समन्तात्प्रसृतत्वेनलक्षि-

तामिति सदाशिवरूपेण दर्शनात्मतां प्रापितं ज्ञानं निर्मिणोतीति क्रमः। प्रयोजनं च पूर्वप्रश्नितमुपवर्णितं॥ २१॥

दीपिका।

अवबोधात्मनो नादरूपत्वेनेति। नादप्रकाश्यत्वेन परतस्त्वित्यादि तच्च ज्ञानं पञ्चमन्त्रपरिग्रहत्वात् पञ्चमन्त्रात्मकशिवदेहाभिव्यक्तत्वाच्च पञ्चस्रोतोऽभिलक्षितमित्युक्तं न त्वत्रेश्वरस्य विद्येश्वरादीनामिव बैन्दवशरीराभ्युपगमो युक्तः तस्योत्पत्तिप्रळययोगित्वेनानीश्वरत्वप्रसङ्गात्। अनवस्थाप्रसङ्गाच्चेति वक्ष्यामः॥ २१॥

किञ्च।

तद्वर्तिवाचकव्रात
वाच्यानष्टौ महेश्वरान्।
सप्तकोटिप्रसंख्याता-
न्मन्त्रांश्च परमेऽध्वनि॥ २२॥

मन्त्रोद्धारप्रकरणाभिधास्यमानज्ञानमध्यवर्तिनो वाचकव्रातस्य मन्त्रगणस्य ये वाच्या अनन्तादयोऽष्टौ विद्येशाः तांस्तथा मायेयस्याशुद्धस्याध्वनस्तत्कालमनाविर्भावात् शुद्धविद्याभुवने कृतस्थितीन् सप्तकोटिसंख्यातान् मन्त्रान् परमेश्वरो विधत्त इति पूर्वेण सम्बन्धः। कालसामान्येऽपि प्रथमस्य करणस्येष्टत्वात् सृष्टिकाले व्यधादित्यर्थः। प्रतिसर्गकालं वा तथा करोतीति वर्तमानतैव।

तत्र विद्येश्वराणां वामादिशक्तियोगित्वेन स्वसम्प्रभाविभावनं नाम करणं मन्त्राणां तु आवरणापनयात् प्रकटीकृतदृक्क्रियत्वमुभयेषां एषां परमेश्वरात् ज्ञानक्रियाशक्त्योरुद्दीपनं ज्ञेयं न पुनर्मुक्ताणुवन्निर्मलीकरणं अधिकारमलेनापरत्वान्मुक्तेरस्या इति वक्ष्यामः ॥ २२ ॥

दीपिका ।

अथोपदेशक्रमं दर्शयितुं अनुग्रहक्रमस्तद्वर्तीत्यादिनोच्यत इत्याह **मन्त्रोद्धारेत्यादि**—

"मननं सर्ववेदित्वं त्राणं संसार्यनुग्रहः ।
मननत्राणधर्मित्वान्मन्त्र इत्यभिधीयते" इति न्यायान्मन्त्रशब्दोऽत्र मुख्यतश्शिवशक्तितदनुगृहीतेषु वर्तते उपचारात्तु वाचकशब्देषु प्रवर्तते इत्याह । **वाचकव्रातस्य मन्त्रगणस्य ये वाच्या इत्यादि** । **अष्टौ विद्येशा इति** अणुपक्षे शक्तिपक्षशम्भुपक्षयोरपि सम्भवात् । उक्तं च—

"अनुग्रहाय लोकस्य शिवो मन्त्र इति श्रुतिः ।
या त्वनुग्रहिका शक्तिः सा मन्त्रत्वमिहागता ॥ इति ।

अत एव स्वस्याधिष्ठानोपाधिभेदभिन्नाभ्यां शिवशक्तिभ्यां सह चतुर्विंशतिर्भवन्ति । सप्तकोटिसङ्ख्याता मन्त्रा अपि त्रिरूपा एव । तदुक्तम् ।

"चतुर्विंशतिराख्याता मन्त्राणामीश्वराः पराः ।
आणवाश्शांभवाश्शाक्तास्तथान्या मन्त्रकोटयः ॥ इति ।

एते च मन्त्राश्शुद्धा एव न त्वशुद्धा इत्याह । **मायेयस्येति** । श्रीमद्रौरवेप्युक्तं—

"अन्ये प्राधानिका मन्त्रा ब्रह्मविष्ण्वादयोऽपराः ।
सांजनास्तेण्डमध्यस्थास्सात्वराजसतामसाः" ॥ इति ।

विधत्त इति पूर्वक्रियानुषङ्गोत्र कार्य इत्याह विधत्त इत्यादि सर्गारम्भ एवैषां विधानं वर्तमानतया विनिर्दिश्यत इत्याह । कालसामान्येऽपीत्यादि करणस्य सृष्टेः कालत्रयसंबन्धेऽपि प्रथमस्येष्टत्वात् लकारव्यत्ययोत्र कर्तव्य इत्यर्थः । परिहारान्तरमाह प्रतिसर्गकालं वेत्यादि कथं पुनरेषां नित्यत्वात्करणमुपपद्यत इत्याह तत्रेत्यादि अत एव विद्येश्वराणां पञ्चविधकृत्यकारित्वम् । यदुक्तं रौरवे "स्थिति संरक्षणादानभावानुग्रहकारिणः इति । मन्त्राणां च अनुग्रहहेतुत्वमिति वक्ष्यामः । विज्ञानकेवलिनामेवैषामनुग्रह इत्याह आवरणापनयनादिति मलापनयनात् । यद्येवं शिवसमत्वादमूर्ता एव ते सम्पन्ना इत्याह उभयेषामित्यादि ॥ अधिकारमलांशावशेषान्न शिवसमत्वमिति ॥ २२ ॥

वृत्तिः ।

तदेवं मन्त्रमहेश्वरान् मन्त्रांश्चोक्त्वा मन्त्रेश्वरान् वक्तुमाह ।

**अष्टादशाधिकं चान्य**
**च्छतं मायाधिकारिणाम् ।**
**मन्त्रेश्वराणामूर्धाध्व**
**स्थितेशोपमतेजसाम् ॥ २३ ॥**

मायायामधिकारिणः मायाधिकारिणः तेषामुपरितनशुद्धाध्ववर्तिविद्येश्वरसमानधाम्नामष्टाधिकं शतं विधत्त इति पूर्वेण संबन्धः । तत्र मण्डलिनोष्टौ वक्ष्यमाणाः

क्रोधाद्याश्चाष्टावेव शतरुद्राणां च ब्रह्माण्डाधारकाणां शतं श्रीकण्ठवीरभद्रौ चेत्येवमष्टादशोत्तरं शतं प्राग्वन्मन्त्रेश्वरत्वे शिवेन नियुक्तमित्यर्थः ॥ २३ ॥

दीपिका ।

सकलानामेवापरमन्त्रेश्वरत्वेनानुग्रह इत्याह । मायायामाधिकारिण इत्यादि । येषां शिवादेव सर्वज्ञत्वाद्यभिव्यक्तिस्ततस्सकलत्वेऽपि पशूनामिव न पाशवश्यत्वमित्याह । उपरितनशुद्धाध्ववर्तिविद्येश्वरसमानधाम्नामिति । यदुक्तं–कलायोगेऽपि नो वश्याः कलानां *पशुसङ्घवत् । इति । अत एव शिवशक्त्याऽधिष्ठितत्वादेतेऽपि त्रिरूपाः पूर्ववदेव । यदुक्तं–अण्डस्याधारका ह्येवं वीरभद्रपुरस्सराः । श्रीकण्ठवीरभद्रौ च इति ॥ श्रीकण्ठश्चायं गुणतत्वोर्ध्वभुवनावासी । न तु ब्रह्माण्डांतर्वर्ती । तस्य शिवशिष्यत्वप्रसिद्धेः । न च विद्येश्वरमध्यपठितः तस्य कलादियोगाभावात् ॥ १३ ॥

तेषु व्यक्तस्स भगवा-
निदं योग्येषु सिद्धये ।
प्रकाशयत्यतोन्येषु
योऽर्थस्समुपपद्यते ॥ २४ ॥

वृत्तिः ।

तेष्वनन्तादिषु मन्त्रमहेश्वरेषु मण्डल्यादिषु च मन्त्रेश्वरेष्वभिव्यक्तो देव इदमित्यनन्तरोपक्रान्तं ज्ञानं

प्रकाशयति । अस्मिन् विषये किमर्थं प्रकाशयतीत्याह **योग्येषु सिद्धये** परिपक्काञ्जनत्वान्निरतिशयश्रेयःप्रेप्सुषु भुक्त्यर्थं मुक्त्यर्थं च वक्तीत्यर्थः । **अतोऽन्येष्विति** । एतच्छास्त्रार्हेभ्यो येऽन्येऽपरिपक्काञ्जनतया पशुशास्त्रानुवर्तिनस्तेषु विषयेषु यः कापिलपाञ्चरात्रादिप्राप्योऽर्थः सम्यगिति तदुक्तयोग्यतानुसारेणोपपद्यते अनुगुणो भवति तं प्रकाशयति । पशुशास्त्रप्रणेतॄनधिष्ठाय तत्तच्छास्त्रप्रकाशनमपि पारम्पर्येण कुरुत इति यावत् ॥ २४ ॥

दीपिका ।

तेष्वनन्तादिष्वित्यादि । इत्थमेतान् विद्येश्वरादीननुगृह्य तेषु प्रकाशितमेतज्ज्ञानमेतानेव साक्षात्परम्परया वाचाऽधिष्ठाय योग्येषु प्रकाशयति । सिद्धय इति पदमत्रोपलक्षणमित्याह भुक्त्यर्थं मुक्त्यर्थं चेति ॥ २४ ॥

वृत्तिः ।

अथास्य ज्ञानस्यास्मभ्यमभिधीयमानस्य किमभिधानमित्याह ।

**शिवोद्गीर्णमिदं ज्ञानं**
**मन्त्रमन्त्रेश्वरेश्वरैः ।**
**कामदत्वात्कामिकेति**
**प्रगीतं बहुविस्तरम् ॥ २५ ॥**

परमेश्वरात् प्रोक्तेन क्रमेण प्रसृतमेतज्ज्ञानं शास्त्रं स्कन्दस्य देव्यास्तदन्येषां च पृथक् पृथक् श्रोतॄणां बहुत्वात् बहुभेदत्वेन सविस्तरमभिहितं। कामदत्वात्कामिकत्वेनोपदेष्टृभिर्मन्त्राणां मन्त्रेश्वराणां चेश्वरैर्मन्त्रमहेश्वरैरनन्तादिभिरुपदिष्टम् ॥ २५ ॥

दीपिका ।

एवं प्रसङ्गात्सर्वज्ञानविषयं उपदेशक्रमं प्रतिपाद्येदानीं भरद्वाजादीनामुपदेश्यं ज्ञानं शिवोद्गीर्णमित्यादिना विशेषयतीत्याह अथास्येत्यादि ॥ २५ ॥

वृत्तिः ।

तेभ्योवगम्य कस्मै कियता ग्रन्थेन को दत्तवानित्याह ।

तेभ्योऽवगम्य दृग्ज्योति-
र्धामलीढस्मरद्रुमः ।
ददावुमापतिर्मह्यं
सहस्रैर्भवसम्मितैः ॥ २६ ॥

तेभ्योऽनन्तादिभ्यः तृतीयनेत्राग्निशिखानिर्दग्धस्मरतरुर्भगवानुमापतिरधिगम्य भवसङ्ख्यैरेकादशाभिस्सहस्रैस्संक्षिप्य मह्यमदात् ॥ २६ ॥

दीपिका।

तेभ्य इत्यादि तेभ्योऽनन्तादिभ्योऽनन्तरमुमापतिरनन्तदेवादधिगम्य मह्यमदादिति। अनन्तशिष्यत्वेनैवास्य प्रसिद्धेः। मदशब्दो मदहेतुत्वान्मदनवाचीत्याह स्मरतरुरिति ॥ २६ ॥

सोऽहमिदानीं—

तत्राऽपि विस्तरं हित्वा
सूत्रैस्सारार्थवाचकैः।
वक्ष्ये निराकुलं ज्ञानं
तदुक्तैरेव भूयसा ॥ २७॥

वृत्तिः।

तत्राप्यर्थवादानुवादरूपं विस्तरं त्यक्त्वा सारार्थाभिधायिभिर्बाहुल्येन क्वचिदुक्तैः क्वचिच्चात्मीयैराकुलं सङ्कुलं ज्ञानं शास्त्रमभिधास्य इतीन्द्रो मुनीनामाहेति हारीतस्स्वशिष्यान् ब्रूते ॥ २७ ॥

इति श्रीभट्टविद्याकण्ठात्मज श्रीभट्टनारायणकण्ठकृतौ मृगेन्द्रवृत्तौ
उपोद्घातप्रकरणं प्रथमं समाप्तम् ॥

---

दीपिका।

क्वचिच्चात्मीयैरिति त्रिपदार्थं चतुष्पादं महातन्त्रमित्यादौ ममाऽपि कर्तृत्वमस्तीत्यर्थः। यद्येवं भरद्वाजवक्तृत्वेनात्र वक्ष्यमाणानां न पारमे-

श्वरत्वं । नैवम् । अद्यत्वेऽपि शास्त्रकरणे तथा दर्शनात् । पूर्वपक्षोत्तर रूपमेव शास्त्रं शिवेन प्रणीतं अनुग्रहात् भरद्वाजादिपदानि प्रश्नेषु क्षिप्तानीति गुरवः ॥ २७ ॥

इत्यघोरशिवाचार्यविरचितायां मृगेन्द्रवृत्ति दीपिकाया-
मुपोद्घातप्रकरणं प्रथमं समाप्तम् ।

## अथ परमोक्षनिरासप्रकरणम् ।

**अथानादिमलापेत**
**स्सर्वकृत्सर्वविच्छिवः ।**
**पूर्वं व्यत्यासितस्याणोः**
**पाशजालमपोहति ॥ १ ॥**

वृत्तिः ।

सम्बन्धाभिधेयप्रयोजनानि प्रथममेव विवेचितानि अथेत्यानुषङ्गिकसम्बन्धादिकथनानन्तरं विद्याख्यः पादः प्रारभ्यते । अत्र च शास्त्रे पतिपशुपाशाख्यास्त्रयः पदार्थाः पशूनामस्वातन्त्र्यात्पाशानामचैतन्यात् तद्विलक्षणस्य पत्युः पञ्चविधकृत्यकारित्वं तत्कारकाणि स्वशक्तिरूपाणि मायादीनि च क्रिया च दीक्षाद्या तत्फलं च पशूनामनुग्रहाख्येन कर्मणा परकैवल्यासादनमित्याद्यभिधास्यमानं तदे-

तद्गर्भीकारेणेदं मूलसूत्रम् । **अनादिमलापेत** इति अनादि शब्दः क्रियाविशेषणं अनादिकृत्वा मलापेतः स्वभावनिर्मलः परमेश्वरः । तथा अनादिश्च मलापेतश्च तत्प्रसादात्प्रध्वस्त-समस्तमलो मुक्ताणुवर्गः । किञ्च अनादेर्मलादपेतः स्वाभाविकमलविदारणात्परमेश्वरेण प्रकटीकृतदृक्क्रियः । किञ्चिदवशेषितत्वादादिमताऽधिकारमलेन युक्तो मन्त्रमन्त्रेश्वरवर्ग इत्येवं समासत्रयकरणान्मुक्ताणुभिर्विद्येश्वरादिभिश्च सहितः पतिपदार्थोऽत्र सूचितः तस्य च त्रिविधस्याऽपि सर्वज्ञता सर्वकर्तृत्वं च विद्यते । मुक्तात्मनां तु सत्यपि सर्वार्थदृक्क्रियत्वे पाशजालापोहनसामर्थ्यमेवापोहनम् । अतस्ते करणीयस्याभावात् न प्रवर्तन्ते अतस्स्वात्मन्येव श्रेयोयोगात् शिवत्वमेवं तेषाम् । विद्येश्वराणां शिवपद-प्राप्तिहेतुत्वात् । भगवतस्तु सर्वानुग्रहप्रवृत्तत्वात् । तथैव मुक्तात्मनां प्रवृत्त्यभावात् विद्येश्वराणां च परमेश्वरपारतन्त्र्यात् स्वतन्त्रस्स भगवान् किङ्करोतीत्याह । **अणोः पाशजालमपोहतीति** विज्ञानकलप्रळयाकलसकलत्वेन त्रिरूपस्य तथा विज्ञानकलप्रळयाकलात्मनोरपर्यवासित-मलेश्वरशक्त्याधिकारात् तदन्यथा भावभेदात् प्रत्येकं द्विविधस्य सकलस्यापि त्रिबन्धनबद्धस्य कुतश्चिदुपायात्प्रक्षीण-कर्मतया केवलकलादियुक्तस्य चैवं द्विप्रकारस्यास्यैव च प्रत्येकं विदेहसदेहभेदात् प्रतिभेदं च मलाद्यधिकारविरहिण-स्तद्युक्तस्य चेत्येवमष्टप्रकारस्येत्थमनेकभेदभिन्नस्यात्मनः

परमेश्वरः पाशजालं यथासम्भवमपोहतीति सबन्धः । यस्य च यथा चापोहति तत्सर्वं यथावसरमग्रे वक्ष्यामः । कीदृशस्याणोरित्याह पूर्वव्यत्यासितस्येति पूर्वैरनादिकालिकैर्मलकर्ममायापरमेश्वरनिरोधशक्त्याख्यैर्यथासम्भवं हेतुतया स्थितैर्व्यत्यासितस्य परमेश्वराद्वैसादृश्यं प्रापितस्य तत्प्रेर्यस्य बन्धान्तरयोगिनश्च । अयमर्थः । मलेनेश्वरनिरोधशक्त्या कर्मभिश्च सदसद्भिरणोराशिवत्वं ततश्च बन्धान्तरयोगः । तदपोहने तु शिवत्वम् । एवं च शिववैसादृश्ये त एवानादयो हेतवः । शिवस्त्वप्रतिबन्धनिरतिशयसर्वार्थक्रियाशक्तिस्तेषां योग्यतामपेक्ष्यानुग्रहप्रवृत्तः पाशव्रातमपोहति । उपसर्गादस्यत्यूह्योर्वा वचनमिति अपोहतिपदम् । तदेवमखिलतन्त्रार्थसूचनादेतन्मूलसूत्रम् । तथा चैवेह व्याख्यानावसरे वक्ष्यति । "यत्र बीज इवारूढो महातन्त्रार्थपादपः । आहादिमूलसूत्रं तदथशब्दाद्यलङ्कृत"मिति ॥ १ ॥

## दीपिका ।

अथेत्यादिशास्त्रारम्भसूत्रं पठति । यद्येवं शास्त्रारम्भे सम्बन्धादीनि वक्तव्यानि इत्यत आह सम्बन्धेत्यादि "तेषु व्यक्त"इत्यादिना पूर्वप्रकरणप्रोक्तानीत्यर्थः । अथेति सम्बन्धादिकथनानन्तरं इति नार्थः तस्य व्यपोहतिक्रिययाऽनभिसम्बन्धात् । नाप्यधिकारार्थः । तस्यापि "वक्ष्ये निराकुलं ज्ञान"मित्यनेनैव सिद्धेः । कथं पुनरत्रार्थः । उच्यते । भविनश्चिच्छक्तिसन्निरोधककर्त्रधिकारक्षयाभिमुखभावादनन्तरं शिवः पाशजाल-

मपोहतीत्यर्थः। ननु मङ्गलार्थोऽयमथशब्दः कस्मान्न कल्प्यते 'यस्मादान-न्तर्यासम्भव एव मङ्गलाद्यर्थं अभावविकल्पप्रसिद्ध्या सिद्धम्। कथं पुनर-र्थेत्यानुषङ्गिकसंबन्धादिकथनादित्यादि वृत्तिग्रन्थः। नायं वृत्तिग्रन्थः अपितु अशास्त्रज्ञैः प्रक्षिप्त इत्यदोषः। आदिसूत्रस्य स्वरूपं दर्शयति **अत्र चेत्यादि** यदनन्तरमेव वक्ष्यति "त्रिपदार्थं चतुष्पादं महातन्त्रं जगत्पतिः। सूत्रेणै-केन सङ्गृह्ये"ति। **त्रयः पदार्था** इति पदार्था अर्थराशयः एष्वेवान्येषां वस्तूनामन्तर्भाव इत्यर्थः। **पशूनामस्वातन्त्र्यादिति** बद्धात्मानः पतिनिर-पेक्षा न स्वपाशविमोचने शक्ताः अस्वातन्त्र्यान्मेषादिपशुवत्। पाशाश्च पतिनिरपेक्षा न स्वयमेव पाश्याद्विमुक्ता भवन्ति अचेतनत्वान्निगळादि-वदिति। नन्वात्मज्ञानादेवाऽऽत्मानो मोचयिष्यन्तीति वेदान्तविदस्तद-युक्तम्। यतो मलस्य द्रव्यत्वाच्चक्षुषः पटलादेरिव न ज्ञानमात्रान्नि-वृत्तिः अपितु चक्षुर्वैद्यव्यापारेणेव ईश्वरव्यापारेण दीक्षाख्येनैवेति। **स्वशक्ति-रूपाणीति** समवेतशक्त्यपेक्षया। कथं पुनरेकस्याश्शक्तेरनेकत्वम्। उपा-धिभेदादित्युक्तम्। वक्ष्यामश्च "तदेकं विषयानन्त्याद्भेदानन्त्यं प्रपद्यत इति। **मायादीनीति** परिग्रहशक्त्यपेक्षया। आदिग्रहणात् बिन्दुश्च। क्रिया चेत्युपलक्षणं योगचर्ययोरपीति। **दीक्षाद्येत्यादि**।[1] आदिग्रहणा-त्तदङ्गभूतानि दीक्षोत्तरकालमनुष्ठेयानि स्नानार्चनादीनि। परकैवल्यासादन-मित्युपलक्षणं भोगावाप्तेरपीति। **तदेतद्गर्भीकारेणेदं मूलसूत्रमिति** पदा-र्थत्रयसहितसमस्तशास्त्रार्थगर्भीकारेणेत्ययमर्थः। अत्र तावच्छिव इत्यनेन मन्त्रमन्त्रेश्वरमन्त्रमहेश्वरमुक्तात्मशक्तिशिवानां पतिपदार्थे सङ्ग्रह इत्युच्यते। अतःपरमणोरित्यनेन विज्ञानाकलादिभेदभिन्नपशुपदार्थस्सूच्यते। **पाश-जालमित्यनेन** मलतिरोधानशक्तिकर्ममायारूपाः पाशास्सूच्यन्ते। **अपो-**

---

१. गृह्यन्त इति शेषः।

**हृतिपदेन** च पतिपदार्थान्तर्भूतः क्रियादिपादत्रयवक्ष्यमाणो भोगमोक्षोपायस्सङ्गृह्यते । नन्वेकस्या एवेश्वरशक्तेः कथं पतिपदार्थे पाशपदार्थे च संग्रहः । सत्यम् । पतिपदार्थ एव शक्तेरन्तर्भावः । उपचारात्तु पाशधर्मानुवर्तनेन पाशत्वमिति वक्ष्यामः—

"तासां माहेश्वरी शक्तिस्सर्वानुग्राहिका शिवा।
धर्मानुवर्तनादेव पाश इत्युपचर्यते" ॥ इति ।

मलस्त्वेक एवानेकात्मावारकानेकशक्तियुक्तो नित्यो व्यापकश्च । कर्माऽपि प्रतिपुरुषं भिन्नं धर्माधर्मात्मकं प्रवाहनित्यम् । माया च द्विरूपा शुद्धाशुद्धा च स्वस्वकार्यसहितेत्येतत्सर्वं यथावसरं वक्ष्यामः । एतदेवाङ्गीकृत्य मूलसूत्रं व्याचष्टे । **अनादिमलापेत** इत्यादि । **स्वभावनिर्मल** इति । न त्वीश्वरान्तरव्यापारेण अनवस्थाप्रसङ्गात् न चात्र प्रवाहनित्येश्वरपक्षस्सम्भवति ऐश्वर्यस्य स्वरूपव्यक्तिलाभात्मकत्वेन विनाशासम्भवात् । **तत्प्रसादात्प्रध्वस्तसमस्तमल** इति । न तु साङ्ख्यानामिव स्वभावनिर्मलः । न च वेदान्तिनामिव स्वसामर्थ्यान्मुक्त इति वक्ष्यामः । **सर्वकृत् सर्वविदिति** पदद्वयं व्याचष्टे । **तस्यचेत्यादि** । तत्र सर्वज्ञत्वं सर्वेषां समानम् । सर्वकर्तृत्वं तु विद्येश्वराणां परमेश्वरादंशेन न्यूनम् । मन्त्राणां मन्त्रेश्वराणां च ततोऽपि न्यूनमिति वक्ष्यामः । त्रिविधस्यापि तस्य अपोहृतिक्रियान्वयं शिवपदवाच्यत्वं चाभिधत्ते। **मुक्तात्मनां** त्वित्यादि । **विद्येश्वराणां शिवपदप्राप्तिहेतुत्वादिति** परापराणां विद्येश्वराणां अनुग्रहकर्तृत्वेन । तदुपलक्षितानां तु मन्त्राणां तत्करणतयेति। **सर्वानुग्रहप्रवृत्तत्वादिति** । विद्येश्वराणामप्यनुग्राहकत्वादिति । अणोरिति सूत्रवचनं जात्येकवचनमित्याह **अणोरित्यादि**। **कुतश्चिदुपायादित्यादि** ।

"विज्ञानयोगसन्यासैर्भोगाद्वा कर्मणः क्षयात् ।
तिष्ठति संस्कारवशात् चक्रभ्रमवद्धृतशरीर" इति—

केवलं मलमायायुक्तोऽपि सम्भवति यतः। विदेहभेदादिति। देहशब्देनात्र भुवनजशरीराण्युच्यन्ते। ततस्सदेहस्तद्युक्तः। विदेहस्तु सूक्ष्मशरीरमात्रदेह इत्यर्थः। यथासम्भवमिति मलरोधशक्तिभ्यां विज्ञानाकलस्य ताभ्यां कर्मसहिताभ्यां प्रळयाकलस्य। व्यत्यासितस्येति। अत एव तत्प्रेर्यस्येति। तेन परमेश्वरेण रोधशक्त्या प्रेर्यस्य बन्धान्तरयोगिनश्चेति बन्धान्तरेण कलादिना योगो यस्य तस्य मायामलकर्मयुक्तस्य रोधशक्तिप्रेर्यस्य सकलस्येति। एतदेव प्रपञ्चयति अयमर्थ इत्यादि योग्यतामपेक्ष्येति। साधिकरणानुग्रहार्हत्वं च बुद्ध्वा। पाशव्रातमपोहतीति कस्यचिन्मलकर्मणी कस्यचित् त्रिविधमिति यदुक्तं प्राग्यथासम्भवमपोहतीति ॥ १ ॥

वृत्तिः।

अथैतत्सूचितार्थप्रकाशनार्थं उत्तरसूत्रम्।

**त्रिपदार्थं चतुष्पादं**
**महातन्त्रं जगत्पतिः।**
**सूत्रेणैकेन सङ्गृह्य**
**प्राह विस्तरशः पुनः ॥ २ ॥**

पाशसद्भावे ह्यात्मनां जन्मस्थितिध्वंसतिरोभावानुग्रहकृद्भगवान् भवतीति पतिपाशात्मव्यतिरिक्तं न किञ्चित्पदार्थान्तरं प्रयोजनवदेष्वेवान्येषामन्तर्भावात् इति त्रिपदार्थत्वमुक्तम्। किञ्च पाशजालमपोहतीत्यपोहनक्रिया-

क्षिप्तः क्रियाचर्यायोगपादः पतिपशुपाशोक्त्याक्षिप्तश्च विद्यापाद इति पादचतुष्टयोपक्षेपः कृतः । महातन्त्रमिति दर्शनान्तरेभ्योऽधिकफलत्वाच्छिवभेदकत्वेन परत्वाद्वा महत् । तन्त्रिततत्तत्प्रमेयत्वाच्च तन्त्रम् । एकेनैवामुना सूत्रेण संगृह्य पुनर्विस्तरेणैतदेव प्रमेयं जगत्पतिश्श्रीकण्ठनाथः प्राह ॥ २ ॥

दीपिका ।

अधुना त्रिपदार्थमिति व्याचक्षाणस्त्रिपदार्थत्वे कारणमाह **पाशसङ्घाते** हीत्यादि पत्युरनुग्राहकत्वेन पशूनामनुग्राह्यतया पाशानां चापोह्यतयात्र प्राधान्यम् । अन्येषां तदङ्गतया तत्कारणतया च तेष्वेवान्तर्भाव इत्युक्तः । चतुष्पादत्वमप्यादिसूत्र एव सूचितमित्याह । **किञ्चेत्यादि** । **दर्शनान्तरेभ्योऽधिकफलत्वादिति** । सर्वान्यागमप्राप्यस्थानप्रदर्शनपूर्वं तद्वनधिगतार्थप्रकाशकत्वेन सर्वातिशायिमोक्षप्रदत्वादिति । **जगत्पतिश्श्रीकण्ठनाथ** इति । जगच्छब्देनात्र भूरादयो लोकाः कथ्यन्ते तत्पतिरनन्तशिष्य इत्यर्थः ॥ २ ॥

वृत्तिः ।

मूलसूत्रात्सर्वकृत्सर्वविदिति विशेषणद्वयं व्याचष्टे ।

**जगज्जन्मस्थितिध्वंस**
**तिरोभावविमुक्तयः ।**
**कृत्यं सकारकफलं**
**ज्ञेयमस्यैतदेव हि ॥ ३ ॥**

तेन स्वभावसिद्धेन
भवितव्यं जगत्कृता ।
अर्वाक्सिद्धेऽनवस्था स्यात्
मोक्षो निर्हेतुकोऽपि वा ॥ ४ ॥

जगतो जन्मवज्जन्तुचक्रस्य भोगोपयोगिपरिकरसहितस्य पौनःपुन्येन तत्तद्विविधयोनिषूद्भवनं जन्म स्थितिस्तदिच्छानिरुद्धस्य सर्वस्य लोकस्य स्वगोचरे नियोगस्थापनम् । ध्वंस आदानं जगद्योनावुपसंहारः । तिरोभावो यथानुरूपाद्भोगादप्रच्यावः । संरक्षणाख्ययान्यत्रोक्तः । यदाह वार्तिककारः स्वसंस्कारोचिताद्भोगादप्रच्यावश्शरीरिणाम् । प्रोक्तं संरक्षणं नाम न्यायेन परिपालनम् । विमुक्तिशब्देनात्रानुध्यानरूपोऽनुग्रह इत्येतत् परमेश्वरस्य संबन्धि पञ्चविधं कृत्यम् । कारकैश्शक्त्यादिभिः फलेन च भुक्तिमुक्त्यात्मना सहितं ज्ञेयमवबोद्धव्यं ॥ ३ ॥

एतच्च न मायादिभिः कर्मभिर्वा निर्वर्तयितुं शक्यं अचैतन्यात् । नापि पुरुषेण । तस्य मलनिरुद्धशक्तित्वात् । नचानीश्वरोऽत्र कर्ता युक्तः । यश्चैतत्सृष्ट्यादि कर्तुं शक्नोति सोऽवश्यं तद्विषयज्ञः । चिकीर्षितकार्यविषयाणां ज्ञानविशेषाणामंशेनाऽपि वैकल्ये तत्तत्कार्यानिष्पत्तेः ।

अतश्च सर्वकर्त्रा सर्वज्ञेन तेन च स्वभावसिद्धेन जगतः कर्त्रा भवितव्यम् । **अर्वागित्यादि** आदित्वेन सिद्धे तस्मिन्नभ्युपगम्यमाने यदि कारणात्कुतश्चित् तस्यासावनुग्रहः तस्यापि कारणं तत्कारणस्यापि कारणान्तरं मृग्यमित्यनवस्था । अथास्य विनैव कारणं स्वत एव तथाविधमैश्वर्यं तदकस्माज्जातं तर्ह्येव निर्हेतुको मोक्षोऽन्यानपेक्षणात्सर्वस्यैव स्यात् । तस्याऽपि वा न स्यात् यदाहुः—

"नित्यं सत्वमसत्वं वा हेतोरन्यानपेक्षणात् ।
अपेक्षातोऽहि भावानां कादाचित्कत्वसम्भवः ॥ इति ।

**तस्मात्स्वभावसिद्धनित्यनिरतिशयनिर्मलसर्वार्थदृक्क्रियः पतिपदार्थः पूर्वमुद्दिष्टोऽनेन लक्षितः परीक्ष्यः परस्तात् ॥ ४ ॥**

दीपिका ।

**भोगोपयोगिपरिकरसहितस्येति** भोगोपयोगिना सूक्ष्मरूपेणासाधारणेनाऽऽन्तरेण बाह्येन च भुवनाद्यात्मना साधारणेन भुवनजशरीराद्यात्मना साधारणासाधारणपरिकरेण शुद्धाशुद्धरूपेण तत्वव्रातेन यथासम्भवं युक्तस्येत्यर्थः । **तत्तद्विविधयोनिषूद्भवनं** जन्मेति । तत्र शुद्धाशुद्धरूपाणां तत्वानां बिन्द्वात्मनो मायात्मनश्चोपादानात् साक्षात्पारम्पर्येण चोद्भवनं जन्म । विद्येश्वरादीनां सर्वज्ञत्वसर्वकर्तृत्वोत्पादनपूर्वं स्वस्वाधिकारयोग्यबैन्दवशरीरयोगः । पशुसङ्घानां च स्वस्वकर्माक्षिप्तेषु सन्निहितविषयेषु भुवनजशरीरेषु संयोजनम् । अपरमन्त्रेश्वराणां तु सर्वज्ञत्वाद्युत्पादनेन कलादियोगेन च

स्वाधिकारे नियोजनमिति वक्ष्यामः । एतच्च कृत्यं परमेश्वरस्य शुद्धाशुद्ध-विषयं साक्षात्पारम्पर्येण चेत्युक्तम् —

"शुद्धेऽध्वनि शिवः कर्ता प्रोक्तोऽनन्तोऽसिते प्रभुरि'ति ।

**तदिच्छानिरुद्धस्य सर्वलोकस्येति** ईश्वरशक्त्या निरुद्धस्य पूर्वोक्तस्य जगतः । **जगद्योना**विति मायायां बिन्दौ च । तत्र कलादिकस्य मायायाम् । शुद्धविद्यादेस्तु बिन्दाविति वक्ष्यामः । पशुसङ्घानां च संहारः प्रळयाकलत्वमेव । यद्वक्ष्यति —

"भोगसाधनमाक्षिप्य कृत्वा कारणसंश्रयम् ।
तच्च सात्मकमाक्रम्य विश्वमायाऽवतिष्ठत" ॥ इति ।

विद्येश्वरादीनां तु संहारकालेऽधिकारपर्यवसाने मोक्ष इत्युक्तम् । श्रीमद्रौरवे—

"अनन्तोपरमे तेषां महतां चक्रवर्तिनाम् ।
विहितं सर्वकर्तृत्वकारणं परमं पदम्" ॥ इति ।

तिरोभावानुग्रहौ यथानुरूपाद्भोगादित्यादिना प्रदर्शितावित्यविरोधः । शक्त्यादिभिरित्यादिग्रहणान्मायादि गृह्यते ॥ ४ ॥

वृत्तिः ।

इदानीं पशुपदार्थं लक्षयितुमाह ।

**चैतन्यं दृक्क्रियारूपं**
**तदस्त्यात्मनि सर्वदा ।**
**सर्वतश्च यतो मुक्तौ**
**श्रूयते सर्वतोमुखं ॥ ५ ॥**

**सदप्यभासमानत्वा**
**त्तन्निरुद्धं प्रतीयते ।**
**वश्योऽनादृतवीर्यस्य**
**सोत एवाऽऽविमोक्षणात् ॥ ६ ॥**

ज्ञानक्रियात्मकं यच्चैतन्यं तदात्मन्यस्ति न तु शरीरसमवेतमिति चार्वाकनिराकरणे वक्ष्यामः । तच्च सर्वदैवास्ति न तु मुक्तौ संविदभावो यथा वैशेषिकैरिष्टः तथाविधाया मोहरूपाया मुक्तेर्निराकरिष्यमाणत्वात् । तच्चात्मनश्चैतन्यं ज्ञानक्रियात्मकं सर्वतोमुखमस्ति । न तु क्षपणकानामिव देहप्रमाणकत्वनियमादव्यापि पशुपदार्थप्रकरणे व्यापकत्वस्य च वक्ष्यमाणत्वात् । अत्र हेतुमाह **यतो-मुक्तौ श्रूयते सर्वतोमुख**मिति मुक्तावात्मनां सर्वतोमुखस्य चैतन्यस्य श्रवणादित्यर्थः । न च तेषां तदानीमेव तदुत्पद्यत इति वाच्यम् । सदुत्पत्तेस्सत्कार्यवादप्रकरणेऽभिधास्यमानत्वात् । अथ मुक्तावेव तथाविधचैतन्यश्रुतेः पूर्वं च तदनुपलम्भादन्वयव्यतिरेकाभ्यां संसारावस्थायां सर्वतोमुखत्वं चैतन्यस्य कुत इत्याशङ्कानिरासायाह **सदप्यभासमानत्वा**दिति सत्यमनुपलम्भस्संसारावस्थायां तथाविधस्य चैतन्यस्य स त्वन्यथासिद्धः व्यञ्जकाभावकृतो हि योऽनुपलम्भः स नाभावसाधकः अपि तु सति व्यञ्जके

यश्चायमनुपलंभः व्यञ्जकाभावकृतः अतश्च नासत्वं साधयति। तच्च सर्वतोमुखत्वं सदपि यस्मान्न प्रथते ततः केनापि प्रतिबद्धमित्यवसीयते। अस्माच्च हेतोरनावृतनिजसामर्थ्यस्य[1] पुरा मुक्तेरस आत्मा वश्य इति ॥ ६ ॥

दीपिका।

सदुत्पत्तेरित्यादि। नन्वेवं चेत्कलादेरिव संसारावस्थायां शक्तिरूपत्वं मुक्तौ तु व्यक्तिरूपत्वमिति परिणामित्वादिदोषप्रसङ्गः। तन्न। अभिव्यक्तिसाधर्म्यमात्रादेवमुक्तम्। परमार्थतस्तु व्यापकमेव चैतन्यं मलनिवर्तनेन प्रकटीक्रियत इत्यदोषः। एतदेवाऽऽशङ्कापूर्वमाह **अथ मुक्तावेवेत्यादि** ॥ ६ ॥

वृत्तिः।

एवं द्वितीयं पदार्थमभिधाय तृतीयं पाशपदार्थं लक्षयितुमाह।

> **प्रावृतीशबले कर्म**
> **मायाकार्यं चतुर्विधम्।**
> **पाशजालं समासेन**
> **धर्मा नाम्नैव कीर्तिताः ॥ ७ ॥**

प्रावृणोति प्रकर्षेणाऽऽच्छादयतीत्यात्मनां दृक्क्रिये इति प्रावृतिः स्वाभाविक्यशुद्धिर्मल इत्यर्थः। ईष्टे स्वात-

---

१. ईश्वरस्येति शेषः।

न्त्र्येणेतीशः तदीयं बलं रोधशक्तिर्द्वितीयः पाशः तथा-ह्यग्रे वक्ष्यति—

"तासां माहेश्वरी शक्तिस्सर्वानुग्राहिका शिवा ।
धर्मानुवर्तनादेव पाश इत्युपचर्यते ।" इति ।

क्रियते तत्फलार्थिभिरिति कर्म । तस्य चानादित्वं आद्यकोटेरनुपलभ्यमानत्वात् । यतश्शरीरवतः कर्मकरणं तच्च शरीरं कर्मारब्धं तान्यपि शरीरान्तरेण कृतानि तच्च कर्मजमिति सोऽयं तृतीयः पाशः । मात्यस्यां शक्त्या-त्मना प्रलये सर्वं जगत् सृष्टौ व्यक्तिं यातीति माया यथोक्तं श्रीमत्सौरभेये—

"शक्तिरूपेण कार्याणि तल्लीनानि महाक्षये ।
विकृतौ व्यक्तिमायान्ति स्वकार्येण कलादिना" इति ॥

कार्यसहितोऽयमप्यनादिकालिकश्चतुर्थः इत्येतदा-त्मनां सहजसामर्थ्यप्रतिबन्धकत्वात्पाशानां जालमिव जालं समासतस्संक्षेपादुक्तम् । एषां च ये धर्मव्यापारास्ते नाम्नैव प्रदर्शिताः । अन्वर्थेन स्वाभिधानेन सूचिताः । तथापि यथावसरं वक्ष्यन्ते ॥ ७ ॥

दीपिका ।

स्वाभाविक्यशुद्धिर्मलइति तुषकम्बुकवदनादिकालिको मलः । न तु ज्ञानक्रियावदात्मस्वभाव इति । पाशधर्मानुवर्तनादुपचारेण शक्तेः

पाशत्वं न मुख्यतः तदेव ज्ञापकेन दर्शयति तथाहीत्यादि तस्य चानादित्व-मिति। प्रवाहानादितया। तदेवाह यत इत्यादि ननु शुद्धाध्वरूपोऽपि बन्धो विद्यत एव तत्कथं स्वकार्येण कलादिना स्थित इत्युक्तम्। तद्योगस्य पर-मुक्त्यपेक्षया बन्धत्वेऽपि विद्येश्वरादिपदप्राप्तिहेतोरपरमुक्तित्वेन वक्ष्माणत्वात् तस्य पाशत्वेनानुपादानमित्यविरोधः। सहजसामर्थ्यप्रतिबन्धकत्वा-दिति सर्वज्ञत्वसर्वकर्तृत्वनिरोधकत्वात्। संक्षेपादिति मलशक्तीनां प्रत्या-त्मनियतानां कर्मणां मायाकार्याणां च साधारणासाधारणोभयरूपाणामन-न्तत्वाद्विस्तरोक्तिर्न शक्येत्यर्थः। ये धर्मव्यापारा इति स्वरूपावरणति-रोभावनफलजनकत्वशरीरेन्द्रियाद्युत्पादनत्वरूपाः ॥ ७ ॥

वृत्तिः।

अथ पदार्थत्रयोपसंहारः।

**इति वस्तुत्रयस्यास्य**
**प्राक्पादकृतसंस्थितेः।**
**चर्यायोगक्रियापादै-**
**र्विनियोगोऽभिधास्यते ॥ ८ ॥**

इत्थमस्यैव पदार्थत्रयस्य विद्यापादे स्थितस्य चर्या-दिपादत्रयेण विनियोगो विभजनमभिधास्यते। वक्ष्यते। एवंविधेन विधिना पतिः पाशोपशमनं कृत्वा पशूनां कैव-ल्यदो भवतीति प्रतिपादमेषामेव प्रविवेकोऽभिधास्यत इत्यर्थः ॥ ८ ॥

तत्फलकथनायाह ।

**विनियोगफलं मुक्ति**
**र्भुक्तिरप्यनुषङ्गतः ।**
**परापरविभागेन**
**भिद्येते ते त्वनेकधा ॥ ९ ॥**

वृत्तिः ।

तस्य च विनियोगस्य विभजनस्य मुक्तिः फलम् । **अनुषङ्गतः** । अनुनिष्पन्नतया भुक्तिरपि । वक्ष्यमाणभौतिकदीक्षादिभिस्समभिलक्षितभोगोपभोगात्परतः परकैवल्याविर्भावः । तथाचोक्तं रुद्रसंहितायाम् —

"दीक्षापूता गणपतिगुरोर्मण्डले जन्मवन्त-
स्सिद्धा मन्त्रैस्तरुणदिनकृन्मण्डलोद्भासिदेहाः ।
भुक्त्वा भोगान् सुचिरममरस्त्रीनिकायैरुपेता-
स्त्रस्तोत्कण्ठाश्शिवपदपरैश्वर्यभाजो भवन्ति"॥ इति ।

ते भुक्तिमुक्ती परापरविभागेन बहुधा भिद्येते तत्र परा भुक्तिः पातालादिकलान्ताध्ववर्तिविचित्रैश्वर्यसम्पन्नतत्तद्भुवनाधिपत्यम् । तत्तद्भुवनवासित्वमात्रं चापरा एवं परा मुक्तिः परमेश्वरसाम्यम् । अपरा तु मन्त्रमन्त्रेश्वरत्वम् । आसां च यथा बहुभेदत्वं तथाऽग्रे वक्ष्यामः ॥ ९ ॥

दीपिका ।

विभजनस्य मुक्तिः फलमिति परम्परया विनियोगज्ञानादनुष्ठानाच्च मोक्ष इति । अनुनिष्पन्नतया भुक्तिरपीति भौतिकदीक्षायां तु भुक्त्यनन्तरं मुक्तेर्निष्पन्नत्वात् भुक्तिरपि फलमुच्यत इति । एतदुक्तं भवति । मुक्तिरेव दीक्षाया मुख्यं फलम् । भुक्तिस्तु वृक्षसेचनोद्यतस्य शकुन्तादितर्पणमिव दीक्षागताईत्वहेतुबुद्ध्यनुषङ्गसिद्धेति । तदेवाह वक्ष्यमाणेत्यादि ॥ ९ ॥

वृत्तिः ।

अथान्येभ्यो दर्शनेभ्यः कोऽस्य पारमेश्वरस्य ज्ञानस्य विशेष इति मुनिः प्रष्टुमाह ।

**वेदान्तसाङ्ख्यसदस-**
**त्पादार्थिकमतादिषु ।**
**ससाधना मुक्तिरस्ति**
**को विशेषश्शिवागमे ॥ १० ॥**

वेदान्तविदां मतेषु उपनिषदादिशास्त्रेषु । सांख्यमतेषु चतुष्षष्टितन्त्रादिषु सदसद्वादिनामार्हतानां च मतेषु अकलङ्कत्रितयप्रभृतिषु द्रव्यादिपदार्थवादिकाणादादिशास्त्रेषु आदिग्रहणात्सौगतादिमतेष्वपि यतो मुक्तिस्तत्साधनानि च श्रूयन्ते । ततः कोसौ शिवागमे विशेष इति

विशेषजिज्ञासयाऽनध्यवसितस्य मुनेः प्रश्नः । न सन्दिग्धत्वेन । आदावेव विशेषसम्भावनानिश्चयतः श्रोतुं प्रवृत्तत्वात् । नापि विपर्यस्तत्वेन "ते वव्रिरे शिवज्ञान"मित्यभ्यर्थनाप्रवृत्तत्वेन दर्शनान्तरानभिनिविष्टत्वप्रतीतेः । तत्तदागमश्रुता मुक्तिः तत्साधनानि च परस्तात्तेषु तेष्ववसरेषु ग्रन्थकृतैवानुभाष्य दूषयिष्यन्त इति नास्माभिः पृथक् प्रयत्नेन दर्श्यन्ते ॥ १० ॥

दीपिका ।

वेदान्तेत्यादिसूत्रस्य संम्बन्धमाह अथान्येभ्य इत्यादि भोगमोक्षप्रसङ्गात् तद्विशेषजिज्ञासया प्रश्नः अत एव मुक्तिशब्दोऽत्र भुक्तेरप्युपलक्षणत्वेन ज्ञेयः ॥ १० ॥

अत्र सिद्धान्तः ।

वृत्तिः ।

**प्रणेत्रसर्वदर्शित्वा-**
**न्न स्फुटो वस्तुसंग्रहः ।**
**उपायास्सफलास्तद्व-**
**च्छैवे सर्वमिदं परम् ॥ ११ ॥**

प्रणेतारो हि हिरण्यगर्भाद्याः कणादपतञ्जलिकपिलप्रभृतयश्च । ते चासर्वज्ञाः अपरत्वेनाभिमताः स्वप्रमे-

यादूर्ध्ववर्तिनो युक्त्यागमोपपन्नस्य प्रमेयजातस्य तैरनवगमात्। तदुक्तम्--

"स्वभावपुरुषाव्यक्तकर्मकालात्मवादिभिः।
परमेशमदृष्ट्वैव मुक्तिर्मिथ्यैव कल्पिता" इति। तथा--
"सुगतो यदि सर्वज्ञः कपिलो नेति का प्रमा।
अथोभावपि सर्वज्ञौ मतिभेदः कथं तयोः"॥ इति।

तैर्यतः प्रणीतानि शास्त्राणि अत एवैतेषु वस्तुसंग्रहोप्यस्फुटः। पुम्पतिबन्धापवर्गज्ञानमस्पष्टमित्यर्थः। ये चात्रोपायाः पुंप्रकृतिविवेकज्ञाननैरात्म्यभावना ब्रह्माद्वैताभ्यासषोडशपदार्थतत्वज्ञानादयः फलानि च स्वर्गापवर्गलक्षणानि तत्सर्वं तद्वदस्पष्टमेव तथा तथा वक्ष्यमाणवन्निर्वाहासहत्वात्। तस्मात्तेभ्योऽस्य शास्त्रस्यायं विशेषः। यदि वा सर्वं प्रकृष्टम्। यतः पशुपाशातीतगोचरेण निरतिशयसर्वार्थज्ञानक्रियात्मना परमेश्वरेणेदमादिष्टमिति प्रणेतृगतं परत्वमुपायानामपि दीक्षादीनां परिदृष्टसंवादित्वात् परत्वम्। तथाहि यद्दीक्षादिना ब्रह्महत्यादिमहापातकयोगिनोप्यपेतपातकत्वं दृष्टमित्यतो विषस्य मारणात्मकशक्त्यपहरणवत् पाशानां बन्धकत्वव्यपगमास्सिद्धः। तदुक्तम्--

"शुद्धिं व्रजति तुलायां दीक्षातो ब्रह्महत्यतो मुख्यात्।
प्रत्ययतो जानीयात् बन्धनविगमं विषक्षयवत्"॥ इति।

फलं चेहान्यसर्वदर्शनदृष्टात् भोगापवर्गलक्षणात्फलात्प्रकृष्टम् । उक्तं हि मतङ्गे—

"अग्निहोत्रादिभिः पूर्तैस्तथा चान्द्रायणादिभिः ।
लोकत्रयेऽपि मोदन्ते विमानस्था यशस्विनः"॥ इति ।

अथाप्युयुः पदं शाक्रामिष्ट्वा क्रतुशतं विधेः ।
या गतिश्शिवभक्तानां शाठ्येनापि महात्मनाम् ।
न सा यज्ञसहस्रेण प्राप्यते मुनिपुङ्गव"॥ इति ।

अपवर्गोऽप्यस्मिन् दर्शने सर्वान्यागमागोचरत्वात् परमः । तत्तदागमप्रणेतॄणां साञ्जनत्वेनासर्वज्ञत्वात् तदुपदिष्टाया मुक्तेर्मुक्त्याभासत्वात् । उक्तञ्च श्रीमद्भार्गवोत्तरे—

"अन्यतन्त्रेषु ये मुक्ता धर्माधर्मक्षयान्नराः ।
तेऽत्र रुद्राणवः प्रोक्ता गुणत्रयविवर्जिताः ॥" इति ॥३१॥

## दीपिका ।

सिद्धान्तं व्याचष्टे **प्रणेतार** इत्यादि । ननु काणादादिषु शास्त्रेषु कर्तृपूर्वकत्वात्तेषां चानाप्तत्वसम्भावनयाऽस्फुटत्वं सम्भाव्यमिति यदेतेषु तु कर्तृदर्शनाभावात्तद्दोषानधीनत्वाच्च प्रामाण्यस्य कथमस्फुटत्वमत आह **हिरण्यगर्भाद्या** इति अयमभिप्रायः—रचनायाः पटादेरिव कर्तृपूर्वकत्वसिद्धेः वेदानामपि पौरुषेयत्वसिद्धिः तत्सिद्ध्या चास्फुटत्वसम्भावनेति । वेदानां च कर्ता हिरण्यगर्भ एव । यदुक्तमाचार्यैरपि—

"हिरण्यगर्भकपिलमत्स्येन्द्राद्योवेदसांख्यकौलादितन्त्राणाम्" ॥ इति ।

असर्ववेदित्वादिति व्याचष्टे ते चासर्वज्ञा इति। **पुम्पतिबन्धापवर्गज्ञानमस्पष्टमिति।** पुरुषस्य क्षणिकत्वाव्यापकत्वनिर्मलत्वादिधर्मयुक्तत्वेन पत्युरुपादानादिरूपतया बन्धस्य चासामर्थ्येन मोक्षस्य च प्रकृतितत्त्वादिप्राप्तिरूपत्वेन ज्ञानविनाशादिरूपत्वेन चाभ्युपगमा"दिति । **स्वर्गापवर्गलक्षणानीति** भोगमोक्षरूपाणि । न चात्रापवर्गशब्दः पुनरुक्त इत्याशङ्कनीयः । यदुक्तं पूर्वं मोक्षस्वरूपस्यास्फुटत्वमुक्तम् । अत्र तु तत्प्राप्तिपु विसंवाद इति । ननु शैवस्यापि कर्तृपूर्वकत्वात् कर्तुश्चानाप्तत्वसम्भावनया कथं नास्फुटत्वमत आह तस्मात्तेभ्य इत्यादि परमेश्वरस्य तु परमाप्ततया विप्रलम्भो न सम्भवति । तदुक्तमुपोद्घात एवेति तदुपदिष्टाया मुक्तेर्न मुक्त्याभासत्वमिति । यदुक्तम् —

"बुद्धितत्त्वे स्थिता बौद्धा गुणेष्वेवार्हतास्स्थिताः ।
स्थिता वेदविदः पुंसि अव्यक्ते पाञ्चरात्रिकाः ॥" इत्यादि ॥११॥

**वृत्तिः ।**

अथ किं तदन्यदर्शनानामस्फुटत्वमत आह ।

**वेदान्तेष्वेक एवात्मा**
**चिदचिद्व्यक्तिलक्षितः ॥ ११½ ॥**

"आत्मैवेदं जगत्सर्वं नेह नानास्ति किञ्चन" । तथा "एको वशी सर्वभूतान्तरात्मा एकं विश्वं बहुधा यः करोति" । इत्यादिश्रुतिभिः परमात्मैव सकलचिदचिद्भावाविर्भावति-

रोभावप्रकृतिभूतः परिपूर्णषाड्गुण्यवैभवस्स्वतन्त्र एकोपि सन् संसरति । तत्ताद्विविधमनोलक्षणोपाधिभेदस्वभावान्तरानुविधायी यथावदवगतोभ्युदयाय भवतीति वेदान्तविदः प्रतिपन्नाः । स एव हि सत्वात्मन्युपाधौ शान्त इव रजोबहुले तु रागवानिवाऽज्ञानात्मके च तमसि मुग्ध इवाऽऽस्ते । न तु ततोऽन्यत्पृथक्किंचिदवातिष्ठते । तस्यैव तथा तथा वैचित्र्येणावस्थितेरसत्यत्वाद्वैतप्रतिभासस्य द्विचन्द्रादिज्ञानवत् भ्रान्तत्वात् । तथा चाह तत्र भवान् भर्तृहरिः—

"यथा विशुद्धमाकाशं तिमिरोपप्लुतो जनः ।
सङ्कीर्णमिव मात्राभिश्चित्राभिरभिमन्यते ॥

तथेदममृतं ब्रह्म निर्विकारमविद्यया ।
कलुषत्वमिवापन्नं भेदरूपे प्रवर्तते ॥" इति ।

एवं चाभिन्नमेवेदं परं ब्रह्म परमात्मलक्षणं मनसां हि संसारधर्मैस्सुखदुःखादिभिर्योगः । परमात्मा तु सूर्य इवाम्भःप्रतिबिम्बभेदैरुपाधिभिः अभिन्नोऽपि भिन्न इव प्रतिभाति । तथाच श्रुतिः "यथाऽयं ज्योतिरात्मा विवस्वानापो भिन्ना बाथ एकोऽनुगच्छत् । उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजस्त आत्मे"ति ॥ ११ ॥

दीपिका ।

अथाऽन्यदर्शनास्फुटत्वप्रकाशनाय प्रथमं वेदान्तवादिमतस्यास्फुटत्वं सूचयितुं वेदान्तेष्वित्यादि श्लोकार्धेन तन्मतमुपन्यस्यते । तदेव दर्शयति **आत्मैवेदमित्यादि** । अयमभिप्रायः आत्मनो हि व्यापकत्वात् तदव्याप्तस्यान्यस्य परमाणोरप्यसम्भवः तत्सम्भवे तद्धर्मस्वरूपस्याऽव्यापकत्वात्तस्य व्यापकत्वासिद्धिः । विशेषतो व्यापकानामात्मान्तराणां सम्भवेन च व्यापकानामेकस्मिन् संसारे स्थितिरपि न सम्भवति । पटव्याप्तप्रदेशेन पटान्तरस्य स्थितिविरोधादित्येक एव परमात्मेति । तदेवाह **परमात्मैवेत्यादि** कथं तर्हि देवदत्तयज्ञदत्तादिरूपभेदावसरः अत आह **तत्ताद्विविधमनोलक्षणोपाधिभेदस्वभावान्तरानुविधायीत्यादि** एतदेव प्रपञ्चयति **स एव हीत्यादि** । **द्वैतप्रतिभासस्येत्यादि** अविद्यानुबन्धतोऽसत्यरूप एव पशुमृगाद्यनन्तशरीरभेदेन बहुप्रकारोऽयं जीवात्मभिर्दृश्यते । स्वप्न इव स्वप्ने ह्यनन्तपुरुषप्रकाशादिप्रकाशो दृश्यते । ततश्च द्विचन्द्रप्रतिभासवत् द्वैतप्रतिभासोप्यसत्य इत्येक एवात्मा श्रुतितो युक्तितश्च सिद्धः । स च यथावदवगतोभ्युदयाय भवतीत्युक्तमिति ॥ ११½ ॥

वृत्तिः ।

तदेतन्नोपपद्यते यतः ।

**प्रातिज्ञामात्रमेवेदं**
**निश्चयः किन्निबन्धनः ।**
**अथ प्रमाणं तत्रात्मा**
**प्रमेयत्वं प्रपद्यते ॥ १२½ ॥**

ओमित्युपपत्त्यनुपपत्तिपर्यालोचनपरिहारेण यद्येतदङ्गीक्रियते। काममवतिष्ठताम् । न तु प्रामाणिकरीत्या यस्मात्प्रतिज्ञामात्रमेवैतत् । न त्वत्र हेतुदृष्टान्तादिसम्भवः। तदभावान्निश्चयः किन्निबन्धनः किमाश्रयः प्रमाणनिबन्धनो हि निश्चयः तत्तत्प्रमेयव्यवस्थापनसमर्थो भवति। नान्यथा। नन्वत्र प्रमाणमागमस्तावच्छ्रुतिरूपः प्रदर्शित एवेत्याह **अथ प्रमाण**मिति यदि प्रमाणमसत्यरूपं परमार्थतः परमात्मन एव सत्यत्वात्। तथाविधेन प्रमाणेनैतत्प्रमीयमाणं मनोनिर्मितेन प्रदीपेन सन्तमसावस्थितपदार्थप्रविवेचनप्रायम्। अथ सत्यमेव प्रमाणमागमस्तावच्छ्रुतिरूपः एवं तर्हि स परमात्मा प्रमेयत्वेन स्थितः। प्रमाणं हि प्रमेयं परिच्छिन्दत् प्रमाणतामासादयति। इतरथा प्रमाणतैवास्य न स्यात् ।

## दीपिका ।

सिद्धान्तसूत्रमवतारयति तदेतदित्यादि आत्मैकत्वं आत्मज्ञानान्मोक्षश्च नोपपद्यत इति। तदेतदाह **ओमितीत्यादि** नन्वत्र हेतुरुक्तः व्यापकत्वादिति तदयुक्तम्। विपर्ययव्याप्तत्वेन विरुद्धत्वात्। व्याप्यं हि पृथ्वीपर्वतादि व्याप्नुवद्व्यापकस्सिद्धः। सूर्यालोकादिवत् न तु स्वात्मन्येवावस्थितः अनवस्थाप्रसङ्गादिति व्यापकत्वसिद्ध्यैव प्रत्युक्तो द्वैतनिरासः। यदप्युक्तं पटव्याप्तप्रदेशवदेकेन व्याप्ते जगति द्वितीयस्य व्यापकस्यावस्थानं न सम्भवतीति। तत्सत्यं मूर्तानां न त्वमूर्तानां विरोधासिद्धेः। गृहान्त-

र्व्यापकानां शीतधूमालोकादीनामिवेत्यदोषः । यदप्युक्तं अविद्याहेतुको द्वैतप्रतिभास इति । तन्न । अविद्याया विद्यानिवर्त्यत्वेनाभ्युपगमात् विद्यायाश्च तदन्यत्वमिति अद्वैतविरोधात् । ननु विद्यैव सत्यभूता न त्वविद्या यद्येवमवस्तुत्वेनाविद्यायाश्शशविषाणादेरिव नित्यनिवृत्तत्वात् तन्निवृत्त्युपायोऽ"यमात्मा ज्ञातव्यो मन्तव्यो निदिध्यासितव्य" इत्यादि व्यर्थ एव स्यात् शशविषाणादिनिवृत्त्युपायवत् । अथोच्यते आत्मप्रतिपत्त्युपायोऽयं भविष्यतीति । तन्न यतस्तस्याविद्यात्मनः पारमार्थिकस्य बन्धस्याभावात् विद्यात्माधिगत एव । अन्धकाराभावे प्रकाशवदिति तत्रासावुपायो व्यर्थ इति भावः । युक्तित एकत्वमिति प्रतिक्षिप्तम् । अथ श्रुतित एकत्वमिति प्रतिक्षेप्तुमागमप्रमाणेनात्मैकत्वं प्रसङ्गाच्चोदयति । नन्वत्र प्रमाणमित्यादि । **आहेति** उत्तरमाहेत्यर्थः । सिद्धान्तसूत्रं व्याचष्टे **यदीत्यादि** अयमभिप्रायः भेदप्रतिपादकानां श्रुतीनां सम्भवात् एकत्वश्रुतीनां चान्यपरत्वात् तस्याऽऽगमरूपस्याऽपि प्रमाणस्यार्थवत्त्वमिति कृत्वा प्रमाणत्वाभ्युपगमेऽपि तत्प्रमाणं सत्यमसत्यं वा सत्यत्वे स एवाऽद्वैतविरोधो दोषः । असत्यत्वे निष्प्रमाणत्वमिति ॥ १२½ ॥

वृत्तिः ।

किञ्चातः किमन्यत् ।

**यत्रैतदुभयं तत्र**
**चतुष्टयमपि स्थितं ।**
**अद्वैतहानिरेवं स्यात्**
**निष्प्रमाणकताऽन्यथा ॥ १३½ ॥**

भोगसाम्याविमोक्षौ च ।
यौ नेष्टावात्मवादिभिः ॥ १४ ॥

यत्रैतद्द्वितयं प्रमाणप्रमेयलक्षणं तत्र प्रमातृप्रमित्यात्मकमन्यदपि द्वयमन्योन्यसव्यपेक्षत्वात् स्थितमेव । न हि प्रमातारमन्तरेण प्रमाणप्रमेययोः कञ्चित्किञ्चित्करत्वम् । करणकर्मणोः क्रियासिद्धौ कर्त्राश्रयत्वात्प्रमितिरपि क्रियारूपो व्यापारः तेभ्यः पृथगेवान्वयव्यतिरेकाभ्यामुपलभ्यत इति चतुष्टयमवश्यम्भावि । यदाहाक्षपादः। "चतसृषु चैवंविधासु सर्वोऽपि व्यवहारः परिसमाप्यत" इति । किञ्चात इत्याह अद्वैतहानिरिति प्रमाणप्रमेयव्यवहाराङ्गीकरणे सति अद्वैतहानिरेव । अतस्स्वाभ्युपगमविरोधः । तदपह्नवे तु निष्प्रमाणकत्वम् । **भोगसाम्येति** । किञ्च भोगसाम्यमविमोक्षश्चाऽऽत्मवादिभिरनभ्युपगतौ दोषौ प्रसज्येते । सर्वैरेवाऽऽत्मवादिभिः प्रत्यक्षविरोधभीरुभिर्दृश्यमानं भोगवैचित्र्यं अवश्यमभ्युपेयम् । आत्मनां च मुक्तिरेष्टव्या । निश्श्रेयसहेतुतयैव शास्त्राणां प्रवृत्तेः । तदिह "नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः"। तथा "न कर्तृत्वं न कर्माणीत्यभ्युपगमाद्विचित्रफलदायिनां प्रतिनियतजन्तुकृतत्वेन भोगप्रतिनियमकारिणां कर्मणामेवाभावाद्भोगसाम्यप्रसङ्गो दुर्निवारः । आत्मनानात्वे हि

कश्चित्सुखितः कश्चिद्दुःखितः इति भोगवैचित्र्यमुपपन्नम् । नान्यथा यत एव च संसारितायाः प्रभवः तत्रैव निरंशे परमात्मनि यदि लयो मोक्षः तर्हि पुनरपि तत एव प्रादुर्भावः पुनश्च मोक्ष इति सेयं गतानुगतिका न तु मोक्षः । तथाहि तत्रभवानवधूताचार्यः "त्वन्मते परविज्ञाननिष्पन्ना अपि मुक्तयः । भजन्ते नापि संवादमम्भसा इव वृष्टयः" इति ।

ततश्च मोक्षाभावात्तदुपायानां "आत्मा वा अरे श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इत्यादीनामानर्थक्यम् । अपिचास्य परमात्मनश्चेतनाचेतनविश्वोत्पत्तिहेतुत्वे चेतनाचेतनत्वं प्राप्तं कार्याणां कारणस्वभावान्वयात् । यदाहुः—

"तदेतद्रूपिणो भावा स्तदेतद्रूपहेतुजा ।" इति ।

अतश्च विरुद्धयोरन्योन्याभिभवेनैवाऽऽत्मलाभात् भावाभावयोरिवैकस्मिन् काले चेतनाचेतनस्वभावयोः परमात्मन्यवस्थानं नोपपद्यते । यदाह तत्र भवान् खेठकनन्दनः—

"विरुद्धावेककालस्थौ धर्मावेकाश्रयं गतौ ।
इतरेतरनाशात्तौ कुरुतो लोपमात्मनः ।" इति ।

न चास्य अनंशत्वात् केनचिच्चाचेतनत्वं युक्तम् । सांशत्वाभ्युपगमे तु कुड्यकुसूलादिवत् कार्यत्वात् परमकारणताहानिः । किंच यद्यदुपादानकारणं तत्तदचेतनं यथा मृदादि । अचेतनश्चायं परमात्मा उपादानकारणत्वात् । चेतनत्वे नास्योपादानकारणत्वं अस्त्वचेतनं को दोष इति चेत् चेतनानां कारणं स्वयं चाचेतनमिति विचित्रेयमुक्तिः । अचैतन्याभ्युपगमे चास्य बुद्धिमत्कर्त्रधिष्ठितस्य मृत्पिण्डादेरिव न स्वकार्यजनने सामर्थ्यम् । येऽपि च ग्राहकत्वेन स्वसंवेदनसिद्धा आत्मानो भोक्तारस्तत उत्पन्ना इत्युच्यन्ते तेषामुत्पाद्यत्वात् घटादिवदचेतनाः प्रसज्यन्त इति अनेकदोषाश्रयस्य परमात्माद्वैतस्यानुपपत्तिः ॥ १४ ॥

## दीपिका ।

दूषणान्तरमाह किञ्चात इति भोगसाम्यप्रसङ्गमेव द्रढयति तदिहेत्यादि । भोगवैचित्र्याभ्युपगमेन चाऽऽत्मनानात्वं सिद्धमित्याह आत्मनानात्वे हीत्यादि अयमभिप्रायः । भोगो हि सुखदुःखसंवेदनात्मक इत्युक्तं "भोगोऽस्य वेदना पुंसस्सुखदुःखादिलक्षणा" इति । ततश्च भिन्नात्संवेदनात्मकाद्भोगात् भिन्नश्चाऽऽत्मा सिद्धः । एतदुक्तं भवति । यथा परमात्मनश्चिद्रूपत्वेन स्वसंवेदनात्मकत्वादिकत्वं सिद्धं तथा जीवात्मनामपि भिन्नात्स्वसंवेदनादेव भेदस्सिद्धः । यत्स्वसंवेदनेन सिद्धं तत्सत्यमेव । यथा परमात्मन एकत्वम् । स्वसंवेदनसिद्धश्चायं जीवात्मभेदः ततस्सोऽपि सत्य एवेति अद्वैतनिरासः । नचायमसिद्धो हेतुः यतोऽयं स्वात्मपरात्मानुमातृतया

स्वयमाभासते । ननु भेदस्येतरेतराभावग्रहणपूर्वकत्वात् भावविषयेण प्रत्यक्षेण ग्रहणं न सम्भवत्येव । यदुक्तम् "आहुर्विधातृ प्रत्यक्षं न निषेद्धृ विपश्चितः" इति । तदयुक्तम् । सिद्धे हि भेदेऽसावितरेतराभावः अन्यथा पयोऽर्थी पावकमप्यनुधावेदिति सर्वमसमञ्जसमिति । अविमोक्षप्रसङ्गं च दृढयति यत एवचेत्यादि । ततश्च मोक्षस्यासम्यक्त्वात् एतदुपायानामसम्यक्त्वमित्याह ततश्चेत्यादि । इतश्च तज्ज्ञानमसम्यगित्याह किञ्चेत्यादि । विचित्रेयमुक्तिरिति कार्याणां च कारणान्वयादिति भावः । दूषणान्तरमाह येऽपि चेत्यादि ॥ १४½ ॥

वृत्तिः ।

अथैवं वेदान्तवादिनां मते निराकृते कापिलोक्तात्प्रकृतिपुरुषविवेकज्ञानात् निश्रेयसावाप्तिर्भविष्यति । यथा चाहुः "एवं तत्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषात् । ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति" इति । श्रुतिरप्याह "अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम् । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः । इति ॥ एतदपि निराकर्तुमाह ।

**सांख्यज्ञानेऽपि मिथ्यात्वम्**
**कार्ये कारणबुद्धितः ॥ १४½ ॥**

सांख्यज्ञानेऽपि एतदसम्यक्त्वं यत्कार्ये मायोद्भूतकलाजनिते प्रधाने कारणबुद्धिः परमकारणताभ्रमः । मूल-

प्रकृतिरविकृतिरिति तेषामभ्युपगमः । कलादीनां तत्वानां पृथक्पृथगुपलभ्यमानप्रयोजनानां तत्तत्कारणरूपस्य जगन्निधिरूपस्य मायात्मनोऽनुपगमात् । उक्तं च क्वचित् "गुणतत्वोर्ध्वभोग्यस्य कर्मणोऽनुपलब्धितः । कैवल्यमपि सांख्यानां नैव युक्तमसंक्षया"दिति । तदयमर्थः । येयं कापिलैः परमकारणतया परिकल्पिता सत्वरजस्तमोलक्षणगुणत्रयसाम्यात्मिका प्रकृतिः तस्यास्तावन्न गुणेभ्योऽन्यत्वं गुणा एव प्रकृतिरिति हेतुभिः प्रतिज्ञाते गुणेभ्योऽनन्यत्वे चावश्यमनेकत्वमस्याः यच्चाचैतन्ये सत्यनेकं तत्कारणान्तरपूर्वकम् । यथा तन्तवो मृत्पिण्डा वा सति च कारणान्तरपूर्वकत्वे न परमकारणता इदं च ते प्रष्टव्याः । यदुत द्रष्टृदृश्ययोस्संयोगः संसारहेतुः तत्पूर्वकश्च वियोगोऽपवर्गकारणमिति यदुच्यते तत्र संयोगस्तावत्पुंप्रधानयोः द्रष्टृदृश्यलक्षण एव । न परस्पराश्लेषरूपः । उभयोरप्यमूर्तत्वेन तादृशस्यानुपपत्तिः । प्रधानं च न स्वतो दृश्यं अप्रत्यक्षत्वेन तस्येष्टत्वात् । न च महदहङ्कारादिरूपेण परिणतां द्रष्टा तां दृष्टुं शक्नोति ततश्च कथमनयोराद्यस्संयोगः तदभावाच्च कथं तत्पूर्वको वियोगः । एवं च संयोगवियोगानुपपत्तेरकारणत्वमेव पुरुषार्थं प्रति प्रधानस्य । अतश्च मिथ्यात्वमेतदीयस्य ज्ञानस्य ॥ १४½ ॥

## दीपिका ।

अथ सांख्यज्ञानेपीत्यादिसूत्रं व्याख्यातुमुत्सूत्रमेव सांख्यमतं संक्षेपेण दर्शयति । अथैवमित्यादि । एवं तर्हि कापिला मन्यन्ते पुरुषो ह्यकर्ता स्वभावनिर्मलः तस्य विवेकज्ञानात्पूर्वं परार्थप्रवृत्तावस्वतन्त्रत्वात् परमकारणं प्रकृतिरेव महदादिरूपेण सुखदुःखमोहात्मना स्वकार्येणाऽऽत्मानं भोग्यतया दर्शयति स एव संसार इत्युच्यते । न चाचेतनस्य प्रवृत्तिर्न युक्तेति वाच्यं अयस्कान्तादीनामयस्समाकर्षणादौ प्रवृत्तिदर्शनात् । ततश्च तस्य यदा प्रकृतिपुरुषविवेकज्ञानपुरस्सरं सत्वपुरुषान्यताप्रत्ययो भवति तदा तं प्रति प्रधानं भोग्यत्वान्निवर्तते । स एव तस्य मोक्ष इति । यदाहुस्सांख्याः "रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा रङ्गात् । पुरुषस्य तथात्मानं प्रकाश्य विनिवर्तते प्रकृतिः । इति तथा—"प्रकृतेस्सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति । यादृष्टास्मीतिपुनर्न दर्शनमुपैति पुरुषस्य इति । सांख्यज्ञानेपीत्यादि व्याचष्टे सांख्यज्ञानेप्येतदित्यादि कथं पुनस्सांख्यानां भ्रान्तित्वमत आह कलादीनामित्यादि। तानि च तत्वानि स्वस्वकार्यैरनुमानागमतश्च सिद्धानीति वक्ष्यामः । कार्यत्वमेव दर्शयति तदयमर्थ इत्यादि । दूषणान्तरमाह इदं चेत्यादि । पुरुषो ह्यकर्तेति यदुक्तं तद्दूषयितुमाह अतश्चेत्यादि ॥ १४½ ॥

कुत इत्याह ।

**अकर्तृभावाद्भोक्तुश्च**
**स्वातन्त्र्यादप्यचिद्वतः ॥ १५ ॥**

अभोक्तुः पुरुषस्य भोगायतनेन देहेन भोगसाधनैरिन्द्रियैर्भोक्तव्यैरिन्द्रियार्थैर्भोगेन च सुखदुःखवेदनात्मना

फलेन किं प्रयोजनम् । यतश्चास्य भोगस्तदधिकरणतत्साधनसहितोऽस्ति अतो भोक्तृत्वमपहातुमशक्यम् । यश्च भोक्ता स कथमकर्ता । अकर्तरि करणादिसम्बन्धस्य निरर्थकत्वात् । दृक्क्रियात्मकत्वमेव स्वरूपं चैतन्यस्य ततश्च कर्तृत्वनिरासात् ज्ञत्वमपि निरस्तम् संवेदनस्यापि क्रियात्मनः कर्तृत्वानपगमात् । न ह्यकर्तुस्संवेदनं चाप्युपपन्नम् । अतश्च सांख्यज्ञानस्य मिथ्यात्वमित्याह **स्वातन्त्र्यादप्यचिद्वत** इति । अचेतनमपि प्रधानं बुद्धिमत्कर्तृप्रेरणं विना स्वातन्त्र्येण कथं कार्यकरणे प्रवर्तते । न ह्यनुसन्धानशून्यस्य बुद्धिमतोऽपि घुणकीटस्येवाक्षरलेखने प्रवृत्तिर्युक्ता । किं पुनः परिणामिनो जडस्य । यश्चात्र चेतनः पुरुषः स तदधीनो न कर्तेति प्रकृतिस्थानां नेयं मुक्तिरुचिता ॥ १५ ॥

## दीपिका ।

भोक्तृत्वं तावदात्मनः प्रत्यक्षमित्याह **अभोक्तुरित्यादि** । भोक्तृत्वादेव कर्तृत्वं सिद्धमित्याह **यतश्चेत्यादि** । चैतन्याव्यभिचारादेव कर्तृत्वं संवेदनसिद्धमित्याह **दृक्क्रियात्मकमित्यादि** । अयमभिप्रायः । पुरुषस्तु चेतनरूपः कर्ता तस्यैव सर्वान्यकारकप्रवृत्तिनिवृत्तिहेतुत्वेन संवेदनात् । "प्रवृत्तौ च निवृत्तौ च कारकाणां य ईश्वरः । अप्रवृत्तः प्रवृत्तो वा स कर्ता नाम कारकः । इति । ननु क्रियावेशो हि कर्तृत्वं यदि पुंसस्स्यात् परिणामिता भवेत् वाय्वादेरिवेति । तन्न । यतः क्रियावेशो न कर्तृत्वं येनास्य परिणामिता

प्रसङ्गः । अपि तु क्रियायां शक्तत्वमेवायस्कान्तमण्यादीनामिव । न ह्ययस्कान्तमणेः क्रियावेशः । अपि तु तच्छक्त्या अयस एव दृश्यते । तथात्मनः क्रिया अपि तु तच्छक्त्या देहादेरेवानुभूयत इत्यविरोधः । यद्येवं शरीरात्मिकायाः प्रकृतेरेव तत्कर्तृत्वमस्तु । तदयुक्तमिति स्वातन्त्र्यादिनोच्यत इत्याह । अचेतनमपीत्यादि । अयमर्थः । न हि शरीरस्य प्रकृतिस्वभावस्य कर्तृत्वमचेतनत्वाद्घटादिवदिति । नन्वचेतनस्यापि प्रधानस्य कर्तृत्वं पुरुषार्थं प्रति प्रवृत्तिः क्षीरस्येव युक्तम् । क्षीरं हि गवादेर्वत्सादिवृद्ध्यर्थं स्वयमेव प्रवृत्तं दृष्टमेव । यदाहुस्सांख्याः "वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य । पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ।" इति । यद्येवमचेतनं क्षीरं चेतनेन गवादिनाऽधिष्ठितं प्रवर्तमानं दृष्टमिति प्रधानस्याप्यचेतनत्वात् प्रवर्तकेन चेतनेन भावितव्यमिति न स्वातन्त्र्यं प्रधानस्य । पुरुषस्य निर्मलत्वेनाऽभ्युपगमान्न तं प्रति प्रवृत्तिर्युक्ता । प्रवृत्तौ वा सर्वान् प्रति प्रवर्तेत विशेषाभावादिति अनिर्मोक्ष एव सांख्यानामिति । निर्मलत्वं च पुरुषस्य न युक्तमिति वक्ष्यामः ॥ १५ ॥

वृत्तिः ।

इदानीमनेकान्तवादिनिराकरणाय सांख्यातस्तन्मतं पूर्वपक्षयितुमुच्यते ।

**इह सप्तपदार्थास्स्यु-**
**र्जीवाजीवास्रवास्त्रयः ।**
**संवरो निर्जरश्चैव**
**बन्धमोक्षावुभावपि ॥ १६ ॥**

**स्याद्वादलाञ्छिताश्चैते**
**सर्वे नैकान्तिकत्वतः ॥ १६३ ॥**

तत्र तावज्जीवपदार्थः नित्यो जीवास्तिकायसंज्ञया परिभाषितः । त्रिविधश्चासौ अनादिसिद्धमुक्तबद्धभेदात् । अत्रानादिसिद्धोऽर्हन् जीवास्तिकायाख्यः । व्यपेतमोहादिबन्धो मुक्तः । तदावृतस्तु बद्धः । अजीवपदार्थोऽपि पुद्गलाकाशधर्माधर्मास्तिकायैश्चतुर्भिर्भेदैर्भिन्नः । अत्रादिः पृथिव्यादिमहाभूतानि चत्वारि तृणगुल्मलतादिरूपं स्थावरं जरायुजाण्डजस्वेदजोद्भिज्जं जङ्गमं चेति षट्प्रकारोऽयं पुद्गलास्तिकायः । आकाशास्तिकायो द्विरूपः । लोकाकाशास्तिकायोऽलोकाकाशास्तिकायश्चेति ।

"लोकानामन्तराकाशं लोकाकाशमिति स्मृतम् ।
अलोकाकाशकायश्च बहिस्तेषां स कीर्तितः ॥"

धर्मास्तिकायः पुद्गलास्तिकायादन्योऽभ्युदयहेतुः । अधर्मास्तिकायोऽपि तत्प्रतिबन्धकृदिति । अयमसावजीवपदार्थः चतुष्प्रकारः । आस्रवश्चक्षुरादीन्द्रियपञ्चकस्य यथास्वं प्रवृत्तिः । तथाचाहुः "वृत्तिः पञ्च विकल्पा ध्रुवाध्रुवा चक्षुरादिवर्गस्य । सैषा स्रवत्यजस्रं तस्मात्त्वेता इहास्रवः प्रोक्तः । इति । इन्द्रियसंयमलब्धप्रतिष्ठाकध्यान-

मास्रवनिरोधात्मकात्वत् संवृणातीत्यास्रवामिति संवरः। तप्त-शिलारोहणनखकेशोल्लुंच्छनादितपस्संश्चयं निर्जीर्णवीर्यं कर्म निर्जरशब्देनोच्यते । नानाविकारसंसरणकारणं मोहादिरष्टविधो गुणस्स्वातन्त्र्यविघातहेतुत्वाद्बन्धः। उक्तञ्च—

"मोहादिको गुणश्चैष बन्धो जीवस्य कल्पितः ।
लोहपञ्जरसम्बद्धं यथा क्षिप्तं जलाशये ।
अलाबुकमधो याति तद्वज्जीवस्सबन्धनः ॥"

इति । प्रक्षीणसर्वावरणत्वात् स्वातन्त्र्यसम्प्राप्तावूर्ध्वपदासादनं मोक्षः । यदाहुः—

"लोहपञ्जरविच्छेदात्प्लवतेऽलाबुकं यथा ।
आरोहति तथा मोक्षं जीवो मोहादिसंक्षयात् ।
नित्यबोधसुखाद्यैश्च धर्मैर्युक्तस्स तिष्ठति ॥" इति ।

एते च सप्तपदार्थाः । स्याद्वादानुगताः । तथाहि देहग्रहणात्पूर्वं जीवो किमस्ति उत नेति यः पर्यनुयुङ्क्ते तं प्र नेकान्तवादोऽभ्युपगन्तव्यः । स्यादस्ति । स्यान्नास्ति । स्यादस्ति च नास्ति च । स्यादवक्तव्यम् । स्यादस्ति चावक्तव्यम् । स्यान्नास्ति चावक्तव्यम् । स्यादस्ति च नास्ति चावक्तव्यं च । इति । अत्र हि यद्यत्पर्यनुयोज्यं तत्तत्सदसत्तया समाधेयम् । तत्र वाच्यतयाऽवाच्यतयाऽपि च विरोधहानिस्तु घटनीयेति सप्तभङ्ग्य-

मोघब्रह्मास्त्रवतां अजय्यमितीह किं तत्। यत्स्यादस्ति-स्यान्नास्तीतिपुद्गलवाग्भ्राम्यते जगत्सर्वमिति। ननु चानै-कान्तवादिना तावदेकान्तानभ्युपगमान्नियमेनानैकान्तवा-दोऽभ्युपगन्तव्यः। तथा च स एवैकान्त इति कुतस्सर्वत्र सप्तभङ्गी। नैष दोषः। अनेकान्तवादेप्येकान्तानभ्युप-गमात्। यत्स्यादनेकान्तः। स्यादेकान्तः। स्यादनेका-न्तश्चैकान्तश्च। स्यादवक्तव्यः। स्यादेकान्तश्चावक्तव्यश्च। स्यादनेकान्तश्चावक्तव्यश्च। स्यादेकान्तश्चानेकान्तश्चाव-क्तव्यश्च इति ॥ १६$\frac{१}{३}$ ॥

दीपिका।

इहेत्यादिसूत्रस्य व्याख्यातुमवतारयति इदानीमित्यादि। तदेव व्याचष्टे तत्रेत्यादि। नन्वत्रानेकान्तवादिनिराकरणोद्यतस्य सप्तपदार्थो-पवर्णनं "सागरं गन्तुकामस्य हिमवद्गमनोपमम्" इत्ययुक्तम्। तन्न। वस्तुसंग्रहस्योक्तस्यासम्यक्त्वप्रदर्शनपूर्वं तदुपदिष्टाया मुक्तेस्तत्साधनस्या-सम्यक्त्वप्रदर्शनार्थमित्यदोषः ॥ १६$\frac{१}{२}$ ॥

वृत्तिः।

तदेतल्लेशतो दूषयितुमाह।

तदेव सत्तदेवास-
दिति केन प्रमीयते ॥ १७ ॥

स्यादस्ति स्यान्नास्ति चेति यदुक्तं तदसङ्गतम्। नहि यद्यदेव वस्तु अर्थक्रियाकारितया सत्वेनावगम्यते तत्तदानीमेवाऽसत्वेनैकान्ततः कश्चिदप्यवैति। कः किलानुभ्रान्तमतिः पुरः प्रस्फुरद्रूपे सदिति प्रत्ययकारिणि घटादौ नायमस्तीति बुद्धिं कुर्यात्। असति च तस्मिन् प्रख्योपाख्याविरहिणि सत्तानिश्चयानुदयात् विधिनिषेधरूपयोर्भावाभावयोः परस्परपरिहारेणैवात्मलाभात्। अभावो हि तदसंभवलब्धजन्माऽपि यदि तेनैव भावेन सहितः स्यात् तदानीं अभाव एव न स्यात्। तदुपमर्देनैव तस्य स्वरूपसिद्धेः। एवं भावोऽपि यदि स्वप्रतिक्षेपेणाभावेनाऽव्यतिरिक्तः तर्हि भाव एव न भवेत्॥ १७॥

दीपिका।

तदेवेत्यादिसूत्रं व्याचष्टे स्यादस्तीत्यादि। कुतस्स्यादयुक्तमित्याह नहीत्यादि एतदेव प्रपञ्चयति कः किलेत्यादि॥ १७॥

वृत्तिः।

ननु घटरूपेण स्वात्मनाऽस्ति घटः। परात्मना पटरूपेण नास्तीति सदसत्वमुक्तम्। न तद्युक्तम्। किं किलैतावता प्रतिपादितं स्यात्। घटो घटात्मना भवति। घटे पटो नास्तीति। तदेतदभिमतमेव। अतदात्मकत्वेन तत्राविद्यमानत्वात् पटाद्भिद्यमानोऽयं घटोऽन्य एवेति सिद्धं साध्यते तदाह।

सदन्यदसदन्यच्च
तदेवं सिद्धसाद्ध्यता ॥ १७½ ॥

ननु स्वात्मना यथा घटः स्वसामर्थ्यक्रियां करोति एवं पटात्मनाऽपि तत्कार्यं कुर्यात् । न च करोति । अतः पटात्मना नास्ति । यदि स्वात्मनाऽपि पटात्मवन्न स्यात्तदा स्वकार्यमपि न कुर्यात् । तस्मादस्ति च नास्ति चेत्युक्तम् । तदेवं घटत्वमघटत्वं परस्परमभिन्नम् । विभेदे हि तद्बुद्ध्यभिधानानुवृत्तिर्न स्यात् । घटश्चाघटश्चेति सामानाधिकरण्यं च न भवेत् । अस्ति चैतत्तस्मादुभयात्मकोऽसौ क्रमेण तच्छब्दाभिधेयतामुद्वहन् स्याद्धटश्चाघटश्चेत्यविरोधः । एतदप्ययुक्तम् । यतो नास्ति कश्चिदभेदः । तथाहि । अघटशब्दो घटो न भवतीति प्रसज्यप्रतिषेधो वा स्यात् घटादन्यः पटादिरिति वा पर्युदासः । आद्ये पक्षे घटश्चाघटश्च स्यादित्युक्ते घटाघटयोरव्यतिरेकात् घटस्याभाव एव घट इत्यभिप्रेतम् । एवं चेष्यमाणे सूर्याभावोऽपि सूर्य एव स्यात् । तथाच सति सर्पादिवत् तदभावादपि भयं स्यात् । ससर्पविसर्पदेशयोस्सम एवोपलम्भो भवेत् । पर्युदासपक्षेऽपि घटत्वादन्यदघटत्वं भिन्नमेव पटत्वादिकं कथ्यते । तद्धि घटाद्भिन्नम् । अभेदे हि घटादिष्वपि पटबुद्ध्यभिधानानुवृत्तिस्स्यात् । घटादावपि स्पष्टे घटप्रत्ययश्च न स्यात् । तस्मान्न घटाघटयोरभेद इति न सदसतोरेकाश्रयत्वम् ॥ १७½ ॥

दीपिका।

सदन्यदसदन्यच्चेति पूर्वपक्षाशङ्केत्याह नन्वित्यादि। तदुत्तरतया तदेवमित्यादि व्याचष्टे। नन्वित्यादि तद्बुद्ध्यभिधानानुवृत्तिरिति। घटबुद्ध्यभिधानानुवृतिः। सामानाधिकरण्यं च न भवेदिति। घटार्थ- एव भावाभावयोस्सामानाधिकरण्यमित्यर्थः॥ १७½॥

किंच।

असज्जघन्यं सच्छ्रेष्ठ
मित्यपि ब्रुवते बुधाः।
नैकत्र तदपेक्षात
स्स्थितमेवोभयं ततः॥ १८½॥

वृत्तिः।

यदपि सदसच्छब्दाभिधेयं श्रेष्ठाश्रेष्ठरूपं वस्तु तदपि- तद्विदो नैकत्राभिदधति। तस्यापि भिन्नविषयत्वात्। न हि यदेवाश्रेष्ठं तदेव श्रेष्ठमिति वक्तुं शक्यम्। अयमेव हि भावानां भेदः। यद्विरुद्धधर्माध्यासः। अथ मतं यत्तच्छ्रेष्ठा- श्रेष्ठत्वं तदेकत्र सम्भवत्येव अपेक्षाबलात्। यथायं देव- दत्तो यज्ञदत्तसकाशादभिरूपः चैत्रापेक्षया तु नीरूपः इति। एवं तर्हि यज्ञदत्तस्याश्रेष्ठत्वं चैत्रस्य श्रेष्ठत्वमित्युभयम्

तत अपेक्षात एव भिन्नं लब्धम् । यदपि द्वयं तदापेक्षिकत्वादसत्यम् । अपेक्षा हि नाम न वास्तवी । तस्याः किल वस्तुतस्सति सद्भावे किं प्रयोजनं सिद्धसत्ताकत्वेनानपेक्षत्वात् । तथाचाहुः—

"संश्च सर्वो निराशंसो भावः कथमपेक्षत" इति ।

न चालब्धसत्ताके वस्तुनि अपेक्षायाः किमपि करणीयमस्ति । तस्यासत्वादेव तदपेक्षानुपपत्तेः । तदिदमुक्तम् ।

"अपेक्षा न सतां सिद्धेरसिद्धेरपि नासताम्" इति ।

तदेवं न कथं चिदपि सदसतोरभेदोपपत्तिः ॥ १८½ ॥

दीपिका ।

असज्जघन्यामित्यादि व्याचष्टे यदपीत्यादि । "तदपेक्षात इति पूर्वपक्ष्याशङ्क्याह अथ मतमित्यादि" तदुत्तरतया व्याचष्ट **एवं तर्ही**त्यादि ॥ १८½ ॥

**अथ चेत्सदसद्भाव-**
**स्सदा युक्ततरो मतः ।**
**तत्कर्मसंकरभया-**
**दव्यापित्वं च ते जगुः ॥ १९½ ॥**

**सामान्येतरसंबन्ध-**
**ज्ञानाभावादचेतसः ॥ २० ॥**

वृत्तिः ।

तस्य देहात्पूर्वं सदसत्वेनाभिमतस्य व्यापकत्वात्पुद्गलान्तरैस्सह कर्मसङ्करश्शक्यते । व्यापकत्वे हि विप्रकीर्णानां कर्मणां भोक्तृन् प्रति नियमः किङ्कृतः । अव्यापकानां तु तेषां प्रत्येकं व्यवस्थितो मोहादिबन्धपदार्थ एव तन्नियामक इति कर्मसङ्करभयादव्यापकत्वं तेऽचेतसो दुर्बुद्धयो जगुरूचुः । कुत एषां मन्दबुद्धित्वमित्याह **सामान्येतरसंबन्धज्ञानाभावादिति** । सामान्येनानादिकालीनेनाऽऽत्मनोव्यापकत्वेन यस्संबन्धः स सर्वकालभावित्वेन साधारणमस्येतरेण च मुक्तावेव सञ्जातत्वात् तथारूपेण यस्सबन्धस्तयोर्ज्ञानं सम्यगवबोधस्तेषां पुद्गलवादिनां नास्ति । यदि हि तदवबोध एषां स्यात् तदा ते नैवमयुक्तमेव कल्पयेयुः । मोहादिपाशावरुद्धसहजव्यापकत्वस्वभावस्याऽऽत्मनस्स्वभावत एव अव्यापकत्वाभ्युपगमो यस्तस्य विरुद्धत्वात् ॥ २० ॥

दीपिका ।

तत्कर्मेत्यादि व्याचष्टे तस्येत्यादि । एतदुक्तं भवति व्यापकस्य ह्यात्मनस्सर्वत्र संस्थितत्वात्स्वकर्मफलेनेव परकर्मफलेनाऽपि संयोग इति

तदपि भोग्यं स्यात् ततश्च स्वकर्मफलभोक्तृत्वनियमानुपपत्तिः ततस्तदुपपत्त्यन्यथानुपपत्त्या पुद्गलोऽयमविभुत्वेनाभ्युपगन्तव्यः । किञ्च शरीराद्बहिरणुमात्रमपि असंवेदनाच्छरीरावधिक एवात्मा सिद्ध इत्यनेकान्तवादिभिरुक्तम् । तदयुक्तमेव तैरुक्तमित्याह । **अचेतस इत्यादि** । अयुक्तकथने च तेषां कारणमाह । **सामान्येत्यादि** अयमभिप्रायः । अविभुत्वे ह्यात्मनो यद्देशान्तरफलं कर्म काश्मीरस्थस्य दक्षिणापथे भुज्यमानं दृश्यते तन्नोपपद्यते अमूर्तत्वेन तस्याऽऽकाशस्येव गमनासम्भवात् । ननूक्तं –

"कथंचित्पुद्गलो मूर्तो ह्यमूर्तश्च कथं च न ।
स्यादनेकान्तवादोऽस्मिन् दर्शने येन संस्थिते" इति ॥

तदयुक्तं मूर्तत्वामूर्तत्वयोः परस्परपरिहारेणैवाऽवस्थानात् । यदाहुः "विरुद्धावेककालस्थौ धर्मावेकाश्रयं गतौ । इतरेतरनाशाद्यौ कुरुतो लोपमात्मन" इति । कथं पुनश्शरीराद्बहिरसंवेदनमत आह **मोहादीत्यादि** मलावृतत्वाद्यत्र शरीराद्यभिव्यञ्जकसद्भावः तत्रैव अभिव्यज्यत इति । **तस्य विरुद्धत्वादिति** । अव्यापकत्वस्य विरोधात् ॥ २० ॥

तथाहि—

**यः प्रागव्यापकस्सोऽन्ते**
**कथमन्यादृशो भवेत् ।**
**स विकासादिधर्मी चेत्**
**ततो दोषपरम्परा ॥ २१ ॥**

वृत्तिः ।

प्राक् पूर्वं संसारावस्थायामव्यापको यस्स कथं मोक्षे व्यापकः । अव्यापकत्वं च तदानीमभ्युपगन्तुमयु-

क्तम्। एवं हि संसारिमुक्तयोरविशेषः स्यात्। अथ तथा-विधमस्य विकाससङ्कोचधर्मित्वमभ्युपगम्यते। यद्धुत संसृतौ सङ्कोचमेति मुक्तो तु विकासमेति इति। ततोऽपि परिणा-मित्वजडत्वाद्यनेकदोषसन्ततिः प्रसज्यत इति न कथंचि-दपि सदसद्वादिमतमुपस्थापयितुं शक्यम्। २१।

दीपिका।

विरोधमेव दर्शयन् प्रागित्यादि व्याचष्टे प्राक्पूर्वमित्यादि। ननूक्तं कर्मसाङ्कर्यात्फलसाङ्कर्यमिति। तन्न। प्रतिपुरुषं कर्महेतुश्चिकीर्षा भिद्यत एव। तद्भेदात्कर्मभेदस्तत्फलभेदश्च सिद्ध इति यत्किञ्चिदेतत्॥ २१॥

वृत्तिः।

इदानीं पादार्थिकदर्शनप्रदर्शितमुक्तिनिराकरणायाह।

षट्पदार्थपरिज्ञाना-
न्मिथ्याज्ञानं निवर्तते।
रागद्वेषौ ममत्वं च
तद्विशेषगुणास्ततः॥ २२॥

क्रमशो विनिवर्तन्ते
देहसंयोगजा यतः।
सा मुक्तिर्जडतारूपा
ततो मुक्तश्शवो न किं॥ २३॥

द्रव्यगुणकर्मसामान्यविशेषसमवायानां साधर्म्यवैधर्म्यतत्वज्ञानं निश्रेयसहेतुरित्यभ्युपगमात् द्रव्यादिपदार्थषट्कस्य यथावत्ज्ञानादज्ञाननिवृत्तौ रागादिदोषोपशमे बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराणां नवानामात्मगुणानां देहसंयोगजत्वात्क्रमेण निवृत्तौ या मुक्तिस्सा बुद्ध्याद्युपरमे सति आत्मनस्तद्विनाकृतस्य किञ्चित्ज्ञत्वोपरमाज्जडतारूपाऽङ्गीक्रियते । ततश्शवोऽपि किं न मुक्तः कल्प्यते । तस्यापि बुद्ध्यादिगुणविरहेणेच्छाज्ञानादिविनाकृतत्वादिति भावः ॥ २३ ॥

दीपिका ।

ननु ततश्च तदुक्तस्योर्ध्वपदासादनारूपस्य मोक्षस्य तप्तशिलाशयनादेश्च तदुपायस्यासम्यक्त्वं परिकल्प्य तस्यावरणं मलः कल्प्यते भवद्भिः तद्वरं स एव जडोऽस्तु । एवं हि न बह्वदृष्टं कल्पितं भवति । स्यादेतत् । तस्य प्रकृत्यैव चैतन्यं गुणो वह्नेः प्रकाशकत्वमिवेति । तदपि न । यतस्तच्चैतन्यमस्य शरीरेन्द्रियादिसामग्रीसन्निधाने प्रदृश्यते तदभावे च न दृश्यते इति तज्जन्यमेव सिध्यति-कुम्भकारादिसामग्रीजन्यघटादिवदिति स्वभावतो जड एवाऽऽत्मा । तस्य च यावच्छरीरं नात्यन्तिकं सुखदुःखनिवृत्तिः । यच्छ्रूयते "न हि वै सशरीरस्य प्रियाप्रिययोरपहतिरस्ति । अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत" इति । तस्य च निवर्तकधर्मोपगृहीततत्वज्ञानान्मिथ्याज्ञाननिवृत्तौ शरीरादिविरहादात्यन्तिकी दुःखनिवृत्तिरिति । एतदेवाह द्रव्यादीत्यादि । दूषणमाह तत इत्यादि । इह हि शरीरादिविषयसंवेदनसमये तत्प्रकाशको हर्षविषादादिसंवेदनात्मा प्रकाशते वा न वा । न

तावन्न प्रकाशत इति युज्यते वक्तुम् । स्वानुभवविरोधात् । अथ प्रकाशत एव तत्तु बौद्धमेव ज्ञानमिति चेत् तदयुक्तम् । सर्वदा तत्तदर्थप्रकाशकत्वेन सुखादिभोक्तृतया च प्रकाशनात् आत्मैवासौ । एवं रूपत्वात्तस्य । अत एव युगपदिव क्रमेणार्थभेदेऽपि सर्वदा तत्तदर्थग्राहकत्वेन स्थिरतयैव भासमानः । न तत्तदिन्द्रियादिसामग्रीजन्यमस्य ज्ञानम् । अपि तु ज्ञत्वस्वभावतैव तत्तत्सामग्रीवशात्तु तत्तदर्थग्रहणप्रतिनियतस्वभावतेति सर्वदा चिदात्मनैव भासमानोऽजड एवऽऽत्मा सिद्धः तत्तु तस्य चैतन्यं मलावृतत्वाच्छरीरादिविना नार्थेषु प्रवर्तते । यदुक्तं मतङ्गे ।

"चितेश्चित्सहजो धर्मस्स त्वनादिमलावृतः"— इति ।

ततश्च तन्मतेऽपि वस्तुसंग्रहस्यास्फुटत्वं सिद्धम् । तथा बुद्ध्यादिविरहाज्जडरूपा काष्ठादीनामपि सुलभा मोक्षात्संसारावस्थैव तेषां वरेति तदुक्ताया मुक्तेरसम्यक्त्वम् । अत एव तदुपायस्याप्यसम्यक्त्वमिति ॥२३॥

वृत्तिः ।

अथ सौगतमुक्तिनिराचिकीर्षया तन्मतमनुभाव्य दूषयति ।

**चिद्व्यंजकस्य कर्मादेः**
**क्षणिकत्वान्मुहुर्मुहुः ।**
**व्यज्यते जायमानेव**
**क्षणिकेति मता परैः ॥२४॥**

चित् ज्ञानं ग्रहीतृरूपं संवेदनं सा चित् व्यञ्जकस्य व्यक्तिहेतोः कर्मणो व्यापारस्य योगसंग्रहणादेर्यदि

वा कर्मणो ग्राह्यस्य घटपटादेः । आदिग्रहणात्करणस्य चक्षुरादेस्सहकारिण आलोकादेश्चानतिस्थैर्यात्प्रतिक्षणमुत्पद्यमानेव व्यज्यते प्रकटीभवति । अयमर्थः वक्ष्यमाणसत्कार्यवादद्दशाऽभिव्यक्तितिरोभावभाजां भावानां व्यापारभेदेन देशकालादिभेदेन चानतिस्थैर्यात्तत्तज्ज्ञानमपि तत्तदुपाधिभेदान्मुहुर्मुहुर्व्यज्यमानं क्षणिकम् तदेव च प्रमाणमिति परे मन्यन्ते । तदाहुः—

"नित्यं प्रमाणं नैवास्ति प्रामाण्यात् वस्तुसङ्गतेः।
ज्ञेयानित्यतया तस्या अध्रौव्यात्क्रमजन्मनः।" इति ॥

चिदेव हीयं क्षणिका तत्तदर्थप्रकाशरूपा अनुभवसिद्धा नत्वेतद्व्यतिरिक्त आत्मा विद्यते संवेदनव्यतिरिक्तस्य भेदेनाप्रतिभासनात् । यदाहुः "एकमेवेदं संविद्रूपं हर्षविषादाद्यनेकाकारविवर्तं पश्यामः तत्र यथेष्टं संज्ञाः क्रियन्तामिति संवेदन एव क्षणिके जलधाराप्रवाहवत्सदृशपरापरोत्पत्तिभ्रमात् विकल्पेन स्थैर्यमध्यारोप्यत इत्यविद्याजनिता सेयमात्मदृष्टिः । तदुक्तम्—

मिथ्याध्यारोपणार्थं वो यत्नोऽसत्यपि भोक्तरि"इति ।

आत्मग्रहे सति तदन्यत्र परत्वाभिमानात् स्वपरभेदः । ततश्च रागद्वेषाद्यनर्थोद्भवादात्मग्रहो बन्ध इति

भगवता सुगतेन नैरात्म्यभावनोपदिष्टा । यदुक्तं "आत्मनि सति परसंज्ञा स्वपरविभागात्परिग्रहद्वेषौ । अनयोस्संप्रतिबद्धास्सर्वे दोषाः प्रजायन्ते" इति । न चाभ्युपगतस्याऽऽत्मनो नित्यत्वं घटते । यत्सत्तत्सर्वं क्षणिकं अक्षणिकस्य क्रमयौगपद्याभ्यां अर्थक्रियाऽनुपपत्तेः सत्ताया एवासिद्धत्वात् । तदाहुः—

"अर्थक्रियासमर्थं यत् तदत्र परमार्थसत् ।
असन्तोऽक्षणिकास्तस्मात्क्रमाक्रमविरोधत" इति ।

तथाहि नित्यो भावः क्रमेण वा अर्थक्रियां कुर्याद्युगपद्वा । न तस्य तावत्क्रमेण करणमुपपद्यते । यस्मादयमप्रच्युतोऽनुत्पन्नस्थिरैकस्वभावः । स च कालान्तरनिर्वर्त्यामर्थक्रियां तदानीमेव किं न करोति । न ह्यसाववसरान्तरकरणीयं स्वभावान्तरेण कुर्यात् स्वभावस्यैकरूपत्वात् । स्वभावान्यथाभावे हि तद्वतोऽपि तदव्यतिरेकाद्विनाशः ततश्चानित्यत्वम् । अथोच्यते । स पदार्थोऽर्थक्रियां करोत्येव यदि सहकारिणोऽस्य सन्निहितास्स्युः तदसन्निधानादकुर्वाणस्य नास्योपालम्भयोग्यत्वमिति । नैवम् । सहकारिणोऽस्याकिञ्चित्कराश्चेत् किमर्थं तानपेक्षते । किञ्चित्करत्वे तु यत्किञ्चित्कुर्वन्ति तत्ततो व्यतिरिक्तं वाऽव्यतिरिक्तं वा व्यतिरिक्तकरणे किं तस्य तदपेक्षया । तदव्यतिरिक्तकरणे

स एव सहकारिभिः किं क्रियत इत्यायातम् । न चास्य स्थिरस्य करणमुपपन्नं तत्स्वभावस्य सतस्स्वहेतुभ्य एवोत्पत्तेः कृतस्य च कर्तुमशक्यत्वात् । अथ स्थिरस्वभावस्याऽस्य सहकारिणोऽतिशयाधानं कुर्वन्ति येन कालान्तरेऽर्थक्रियां करोतीति । एतदप्यसत् । यस्मादनाहितातिशयस्वभावादाहितातिशयोऽन्य एवेति स्थिरैकस्वभावतैव त्रुट्यति । तथाहि सहकारिभ्योऽतिशयोत्पत्तौ स पूर्वोत्पन्नानाहितातिशयस्वभावस्स्वत एव विनष्टोऽभ्युपगन्तव्यः । तस्यानश्वरस्वभावत्वेन नाशहेतोरपि तत्राकिञ्चित्करत्वात् । विनश्वरोद्भवस्वभावत्वे वा वैयर्थ्यात् तस्य च स्वभावस्याविशेषात् प्रतिक्षणमिति क्षणिकता । तदेवं न नित्यस्य क्रमेणार्थक्रिया । नापि युगपत्करणमुपपद्यते । यस्माद्यौगपद्येन निर्वर्तितार्थक्रियोऽपि तस्मात्स्वभावान्न विरमेत् स्थिरतैकस्वभावत्वात् तत्स्वभावविरतौ स्वभावहानिरिति क्षणिकत्वमेव । अथ नास्य स्वभावान्तरयोगः किंतु न करोत्येवायम् । कार्यस्य त्वयं हि विपाकः । कृतस्य यत्कर्तुमशक्यत्वमेव । तदप्ययुक्तम् । तस्य तावदर्थक्रियामकुर्वतो हि सत्ताया एव दुर्लभत्वात् ।" अर्थक्रियासमर्थं यत् तदत्र परमार्थसदित्युक्तत्वात् । अर्थक्रियाकरणलक्षणात्स्वभावात् तदकरणात्मस्वभावोऽन्य एवेति कथमस्य न स्वभावान्तर योगः । यदि च यौगपद्येनापि कुर्वन्ननवरतं करोति तदा

स्वभावाविशेषात् सर्वदा सर्वार्थक्रियाकरणप्रसङ्ग इति क्षणिकमेवेदं संवेदनं युक्तम्। न तु तद्व्यतिरिक्तनित्यात्मसिद्धिरिति पूर्वः पक्षः ॥ २४ ॥

दीपिका।

चिद्व्यञ्जकस्येत्यादिसूत्रमवतारयति। अथेत्यादि दूषयतीति परैरित्यन्तेन पदेन दूषणमुपक्षिपतीत्यर्थः। योगसंग्रहणादेरिति। योगोऽर्थेंद्रियसन्निकर्षः। संग्रहणमवबोधनादिना तद्रूपपरामर्शः। कर्मादेरित्यादिग्रहणात्सूत्रेऽर्थादि गृह्यते। अत एव रूपान्तरेण व्याचष्टे यदिवेत्यादि एतदेव प्रकटयति अयमर्थ इत्यादि। ननु बौद्धस्य ग्राह्यपरामर्शात्मन एव ज्ञानस्य क्षणिकत्वं न त्वात्मनो ग्राहकरूपस्य। अत एवाऽऽह चिदेवहीत्यादि। न हि द्वावुपलम्भौ स्तः एकोऽर्थस्यापरश्चाऽऽत्मन इत्यर्थः। कथं पुनस्तस्य स्थिरत्वाभासः अत एवाह। संवेदन इत्यादि। ज्ञानव्यतिरिक्ताऽऽत्माभ्युपगमेऽपि न तस्य स्थैर्यमुपपद्यत इत्याह नचाभ्युपगतस्येत्यादि एतदेव प्रपञ्चयति तथाहीत्यादि ॥ २४ ॥

वृत्तिः।

सिद्धान्तस्तु।

**तदसत्कर्मणो भोगा-**
**दतीतानुभवस्मृतेः॥ २४½ ॥**

तदेतत्क्षणिकत्वं संवेदनस्य नैरात्म्यवादाभ्युपगमनं च न युक्तम्। स्वसंवेदनसिद्धस्य स्थिररूपस्यापरोक्षस्याऽऽत्मनः प्रकाशनात्। ननु सदृशपरापरक्षणोत्पत्तिविप्र-

लब्धत्वात् स्थैर्यमध्यारोपितमित्युक्तम् । तदयुक्तं स्वात्मनि क्रियाविरोधात् अध्यारोपानुपपत्तेः । यदपि क्षणभङ्गसाधनार्थं अक्षणिकस्य क्रमयौगपद्याभ्यामर्थक्रियाविरोधात् सत्ताया एवासिद्धत्वात् यत्सत् तत् क्षणिकमिति अनुमानघटनं कृतम् । तत्स्वसंवेदनलक्षणप्रत्यक्षबाधितत्वादयुक्तम् । अक्षणिकस्य सततस्सर्वस्य संवेदनस्यानुभवासिद्धत्वात् अनैकान्तिकश्च । सर्वस्य सतः क्षणिकत्वेन व्याप्तिप्रदर्शने सति अक्षणिकस्य परमार्थसतो वैधर्म्यदृष्टान्तस्यासम्भवात् विपक्षव्यावृत्त्यदर्शनेन हेतोः केवलान्वयिनो गमकत्वाभावात् । विरुद्धश्चायं सत्वाख्यो हेतुः । साध्यविपर्ययेणाक्षणिकत्वेन सर्वदाऽर्थक्रियाकारिणि घटादौ सिद्धव्याप्तिकत्वात् । यदप्येतद्व्याप्तिसाधनार्थं नित्यस्य क्रमयौगपद्याभ्यामर्थक्रियाविरोधात् इति हेत्वन्तरम् । तदप्याश्रयासिद्धत्वादयुक्तम् । न हि नित्यः कश्चिदर्थो भवद्भिरभ्युपगतः । यत्रायं [1]हेतुस्सिद्धस्स्यात् । न चाक्षणिकस्याऽपि मण्यादेरर्थस्य क्रमेणानेकदेशस्थांस्तांस्तान् भावान् प्रकाशयतो युगपच्चैकगृहगतान् घटपटादीनवभासयतः कश्चिद्विरोधः । अपि च न तावत्क्षणिकं संवेदनं अनेकक्षणनिर्वर्त्यार्थक्रियानुष्ठानसमर्थम् । उत्पत्त्यनन्तरध्वंसिनस्तदुपपत्त्याद्ययोगात् । न चारोपितं स्थैर्यं तत्तद्व्यापारानिर्वर्त-

---

१ नित्यस्य क्रमयौगपद्याभ्यामर्थक्रियाविरोधादिति हेतुरित्यर्थः ।

नक्षमम्। तस्य च स्वात्मनि अध्यारोपानुपपत्तेरित्युक्तत्वात्। आरोप्यस्य चाऽवस्तुत्वेनार्थक्रियानुष्ठानासंबन्धः। वस्तुत्वे च स्थिररूपस्यैवावबोधस्याऽऽत्मरूपत्वेनाऽस्माभिरप्यभ्युपगमात् नास्ति भेदः। क्षणिकव्यतिरिक्तश्च सत्तासन्तानो न कथंचिदुपलभ्यते। तस्मात्कर्मानुष्ठानसंबन्धदर्शनान्यथानुपपत्त्या वस्तुसिद्धमेवाऽस्य चिदात्मनःस्थैर्यम्। इतश्चैतत्क्षणिकत्वमयुक्तम्। **कर्मणो भोगात्** क्षणान्तरानन्वयिनि विज्ञाने कर्मभोगानुपपत्तेः। येनैव हि दृष्टं सेवाकृष्यादि कर्म कृतं तमेव तस्य भोक्तारमुपलभामहे दृष्टवच्चादृष्टकल्पना युक्तिमती। यद्युभयजन्मनि शरीरादिभेदेप्यभिन्न एक एव भोक्ताऽभ्युपगम्यते तदा हि कर्मफलभोगो निर्बाधो भवति। अन्यथा चैत्यवन्दनाख्यं कर्म अन्येन कृतमन्यस्यैव तत्फलेन स्वर्गादिना योग इत्यकृताभ्यागमकृतविप्रणाशप्रसङ्गो दुर्निवारः। उक्तं च मतङ्गे—

"कृतमेकेन यत्कर्म तद्विपाकं परः कथम्।
प्राप्नोति युक्तिदौर्बल्यात्"इति। ननु नायं दोषः ऐहिकस्य कर्मणोऽलब्धशरीरेण ज्ञानसन्तानेन परत्र भोगोपपत्तेः। तदयुक्तं अशरीरस्य ज्ञानसन्तानस्य सद्भावे प्रमाणाभावात्। कर्मफलभोगान्यथानुपपत्त्या विज्ञानसन्तानसिद्धिः तत्सिद्ध्या च कर्मफलभोगः इत्यनुपपन्नमस्थैर्यं संवेदनस्य।

अतश्च क्षणिकं संवेदनमित्यसत्। कुत इत्याह **अतीतानुभवस्मृतेरि**ति । अतीतस्समतिक्रान्तो योऽनुभवस्तस्य स्मरणात्। यदा हि स्थिरस्वभाव उभयकालानुसन्धात्रात्माऽभ्युपगम्यते । तदाऽनुभूतविषयसम्प्रमोषरूपं स्मरणमुपपद्यते। न तु क्षणिकत्वे। न हि प्राक्तन[1]क्षणानुभूतसुखदुःखादिसंवेदनं वर्तमानेन कालान्तरभाविना वा क्षणेन स्मर्तुं शक्यं तस्यान्यत्वात्। यथा न देवदत्तानुभूतं तत्पुत्रस्स्मरति। दृश्यते च शैशवाद्यनुभूतं यौवनस्थाविराद्यवस्थासु स्मर्यमाणम्। सा चेयमतीतानुभवस्मृतिः क्षणिकतां विज्ञानस्य निरस्यति न तु स्थिरस्वभावमात्मानमनुमापयति।तस्य स्वसंवेदनासिद्धस्य स्वानुभूत्येकप्रमाणत्वात्। तदेवं कर्मोपभोगादतीतानुभवस्मृतेश्च न क्षणिकत्वमुपपद्यते चितः॥ २४½ ॥

## दीपिका ।

तदसदित्यादिसूत्रं व्याचष्टे **तदेतदित्यादि** संवेदनस्येति गृहीतृरूपस्य न तु बौद्धस्य तस्यास्थिरत्वेनैवाभ्युपगमात्। तदेव दर्शयति **स्वसंवेदनसिद्धस्येति** । ग्राह्यपरामर्शात्मनोऽस्थिराद्बौद्धज्ञानाद्व्यतिरेकेण ग्राहकात्मनोऽनुसन्धानरूपस्य स्थिरस्यैव स्वसंवेदनसिद्धत्वादित्यर्थः। क्षणिकत्वे दूषणमाह **अपिचेत्यादि** अयमर्थः क्षणिकत्वे ह्यात्मनः शास्त्राभ्यासः तदुक्तचैत्यवन्दनादिकर्मानुष्ठानं चासम्भाव्यमिति। ननु क्षणिकत्वेपि विज्ञा-

1. क्षणेनानुभूतमित्यर्थः ।

नस्य तत्सन्तानस्यार्थक्रियोपपद्यत इत्याह क्षणिकत्वव्यतिरिक्तश्चेत्यादि । ततश्चोत्तरक्षणस्य पूर्वक्षणेन संबन्धे स्थिरत्वमेव असंबन्धे अर्थक्रियानुपपत्तिरिति । स्वसंवेदनेन कर्मानुष्ठानान्यथानुपपत्त्या चाऽऽत्मनस्स्थैर्यं प्रसाध्य-कर्मभोगान्यथानुपपत्त्या च स्थैर्यमित्याह इतश्चेत्यादि । अतीतानुभवस्मृते-रितीदं च हेत्वन्तरमवतारयति अतश्चेत्यादि तदेव प्रश्नपूर्वकं दर्शयति कुत इत्यादि । तदेव स्फुटयति यदाहीत्यादि ॥ २४½ ॥

तदेवाह ।

**स्थितिर्निरन्वये नाशे ।**
**न स्मृतेर्नाऽपि कर्मणः ॥ २५ ॥**

सूच्यग्रनिपतत्सर्षपवदनवस्थायित्वात् अविश्रम्यैव विनश्यत्सु विज्ञानक्षणेषु प्रोक्तवन्न स्मृतेरवस्थितेरुपपत्तिः कल्प्यते । नापि कर्मण इत्यलमलीककल्पनाकुलीकृतस्थितिना क्षणभङ्गाभिनिवेशेन ॥ २५ ॥

दीपिका ।

एतदेव स्थितिरित्यादि श्लोकार्धेन प्रपञ्चयतीत्याह तदेवाहेति ॥ २५ ॥

वृत्तिः ।

किंचायमपरोऽत्र दोषः । यदुत ।

**विनाशलक्षणोऽपैति**
**न मुक्तावप्युपप्लवः ।**

न चास्त्यनुभवः कश्चित्
भवावस्था वरं ततः ॥ २६ ॥

शुद्धचित्सन्ततिसमुत्पादो भवतां मोक्षस्स्यात् यदि वा प्रदीपनिर्वाणरूपः ?। आद्ये पक्षे स्वपरिकल्पितस्य प्रतिक्षणविनाशित्वलक्षणस्योपप्लवस्यमुक्तावप्यनुपशमः । द्वितीये तु प्रदीपनिर्वाणरूपत्वात् संवेदनासम्भवतः कश्चिदप्यनुभवो नास्तीति तथाविधात् संवेदनविनाशात्मकात् काष्ठकुड्यादीनामपि सुलभात् मोक्षात्संसारावस्था वरं सौगतानामिति कृतमेवंविधमोक्षलिप्सया ॥ २६ ॥

दीपिका ।

एवं वस्तुसंग्रहस्यास्फुटत्वं प्रकाश्य तदुक्तस्य मोक्षस्यास्फुटत्वं दर्शयितुं विनाशेत्यादिसूत्रमवतारयति किंचेत्यादि अत्रेति बौद्धमते मुक्त्युपायस्य नैरात्म्यभावनादेरस्फुटत्वमात्मस्थैर्यसाधनादेव सिद्धमिति ॥ २६ ॥

वृत्तिः ।

तदियता वेदान्तसांख्यसदसत्पादार्थिकादिमतेषु असर्वदर्शिप्रणेतृकत्वात् वस्तुसंग्रहस्यास्फुटत्वमसंबद्धतां चोद्भाव्य दर्शनान्तराणामप्येषैव वार्तेति तत्तदभिनिवेशिनां न निरतिशयनिश्रेयसयोग इति वक्तुमाह ॥

इत्याद्यज्ञानमूढानां
मतमाश्रित्य दुर्धियः ।
अपवर्गमभीप्सन्ति
खद्योतात्पावकार्थिनः ॥ २७ ॥

शिवशक्तिविद्येश्वरादावुपादेयवस्तुनि कर्ममलमायादौ च हेये परमार्थत येषां नास्त्येव बोधः तेषामज्ञानमूढानां दर्शनान्तरप्रणेतृणां सम्बन्धि मतं शास्त्रमाश्रित्याऽकुशलमतयो मुक्तिमिच्छन्ति ते खद्योतादग्न्यभ्यर्थिनः कीटमणेर्वह्निं लिप्सवः । ते यथा व्यर्थश्रमास्तथा तेऽपि विफलक्लेशा भवन्तीत्यर्थः ॥ २७ ॥

दीपिका ।

इत्यादीति सूत्रं अवतारयति तादियतेत्यादि दर्शनान्तराणामपीति आदिशब्दोपात्तानां पाञ्चरात्रादीनाम् ॥ २७ ॥

वृत्तिः ।

तथाहि ।

यत्कैवल्यं पुंप्रकृत्योर्विवेका-
द्यो वा सर्वं ब्रह्म मत्वा विरामः ।
या वा काश्चिन्मुक्तयः पाशजन्याः
तास्तास्सर्वा भेदमायान्ति सृष्टौ ॥ २८ ॥

यदेतत्कपिलकल्पितं पुंप्रकृत्योर्विवेकात्कैवल्यं या च सर्वं खल्विदं ब्रह्मेति मत्वा द्वैतविकल्पप्रहाणे सति ब्रह्मप्राप्तिः, याश्च पाशजन्याः कैश्चित्पाञ्चरात्रादिभिः मुक्तयोऽभ्युपगताः। यथाहुः "ईशास्तु ते समभवन् प्रकृतेः परस्याः कृष्णानिरुद्धमकरध्वजरौहिणेयाः।" इति। यथावा कालैकवादिनाम्—

"कालस्सृजति भूतानि कालस्संहरति प्रजाः।
कालस्सुप्तेषु जागर्ति कालो हि दुरतिक्रमः" इति।

यथा वा केषाञ्चित्।

"चित्तमेव हि संसारो रागादिक्लेशदूषितम्।
तदेव तद्विनिर्मुक्तं मोक्ष इत्यभिधीयते"॥

एताः किल प्रकृतिकालबुद्ध्यादीनां बन्धकत्वेन पाशरूपत्वात् पाशजन्या मुक्तयस्सर्गारम्भे भेदमायान्ति विनश्यन्ति इत्यर्थः। यदुक्तं मतङ्गे—

"तस्मात्प्रधानशब्देन तत्वमुक्तमचेतनम्।
तस्मात्परं नास्त्यपरं येषां भावः प्रतिष्ठितः"॥

न ते मुक्ता मुनिव्याघ्र पुनरायान्त्यधोगतिम्। इति।

तथा—

"उपादानेषु लीनानां पुनरावर्तनं ध्रुवम्" ॥ इति। तेषां तु तथाविधाभ्यासभाजां न निरन्तरमज्ञानध्वान्तसन्ततिरन्तःकरणमावृणोति। अपि तु ते क्रमेण विवेकप्रथनात्परमेश्वरानुग्रहास्पदतां कस्मिंश्चिदपि काले यास्यन्ति। तथाचोक्तं श्रीमत्पौष्करपारमेश्वरे--

"न मोक्षं यान्ति पुरुषा स्स्वसामर्थ्यात्कदाचन।
मुक्त्वा प्रसादं देवस्य शिवस्याशिवहारिण" इति ॥ २८ ॥

दीपिका।

यत्कैवल्यमित्यादिसूत्रेण एतदेव स्फुटयतीत्याह तथाहीत्यादि तत्र पूर्वार्धेन प्रकृतिलयब्रह्मप्राप्त्युपलक्षितानां प्रोक्तमुक्तीनां निरासोपसंहारः। उत्तरार्धेन पाञ्चरात्रादिमुक्तीनां निरास इति। केषाञ्चिदतीन्द्रियचैतनिकानामेषां च पाञ्चरात्रादिमोक्षाणां पाशजन्यत्वं दर्शयति। एताः किलेत्यादि तत्र किल नारायणाख्यायाः परप्रकृतेरुपादानत्वेनाभ्युपगमात् अचेतनत्वाच्चास्वतन्त्रमेवेत्युक्तम्। कालस्यापि भूतादिरूपतया त्रैविध्येनाचैतन्ये सत्यनेकत्वादनित्यत्वमिति न कारणत्वम्। चित्तस्यापि व्यक्तत्वाद्भूतादिवदचेतनत्वं सिद्धमेवेति तत्तत्त्वप्राप्तानां तत्तत्संहारावधिरेव[1] मोक्षः। ततश्च सृष्टिकाले मलकर्मसद्भावात् पुनरपि संसार इत्यर्थः। यद्येवं न कदाचिदपि तेषां मुक्तिसम्भवः। नेत्याह तेषां त्वित्यादि मलपरिपाके सति तेषामपि शिवप्रसादात् मुक्तिस्सिध्यतीति ॥ १८ ॥

वृत्तिः।

अथैवं मतान्तरोक्ताया मुक्तेः प्रागुक्तवदसत्यत्वे ततः किं तद्वैलक्षण्यमिहेत्यनयोस्सिद्धमुक्त्योरित्याह ॥

१. संज्ञावधिरेवेति पाठभेदः।

शैवे सिद्धे भाति मूर्ध्नीतरेषां
मुक्तस्सृष्टौ पुंवरोऽभ्येति नाधः ।
विश्वानर्थान् स्वेन विष्टभ्य धाम्ना
सर्वेशानानीरितस्सर्वदास्ते ॥ २९ ॥

इह शास्त्रे यस्सिद्धस्स विविधभुवनोपपन्नविचित्रैश्वर्यसम्पादिततत्तद्भोगभाक् सर्वोत्कर्षशाली भवति। तथाचोक्तं बृहस्पतिपादैः "यन्माहात्म्यं भवति परमशिवेऽनुपममव्ययमचिन्त्यम् । तन्माहात्म्यं सिद्धे हतबन्धनमण्डले भवति"। इति। न च दर्शनान्तरप्रतिपन्नब्रह्मलयसंविद्विनाशप्रकृतिपुरुषविवेकाद्यात्मनो मोक्षस्यैवंगुणत्वमित्युक्तम्। यस्त्वस्मिन् दर्शने मुक्तस्स बन्धकारणानां मलकर्ममायापरमेश्वरनिरोधशक्तीनामुपरताधिकारत्वात् पुनस्सर्गप्रारम्भे नाधोभ्येति न संसारी भवतीत्यर्थः। किं तर्हि स करोतीत्याह **विश्वानर्थानिति** आविर्भूतनिरतिशयसर्वार्थज्ञत्वकर्तृत्वतश्शिवसमानमहिमत्वात्स्वतेजसा समधिष्ठितसर्वार्थोऽपि स मुक्तात्मा न किञ्चित्करोति करणीयाभावात्। एवं चेन्मुक्तेः पूर्वमकिञ्चित्करोभूत् मुक्तश्च तद्रूप एवेति कोऽस्य मुक्तौ विशेषः अयं विशेषः। यतस्सर्वेशानेन परमेश्वरेणानीरितोऽप्रेरितः तदानीमसौ भवति। किं

कञ्चिदेव कालमप्रेर्यः नेत्याह सर्वदेति सार्वकालं तं प्रत्य-प्रेरकश्शिवभट्टारको भवतीत्यर्थः ।

इति श्रीभट्टविद्याकण्ठात्मजभट्टनारायणकण्ठविरचितायाम्
मृगेन्द्रवृत्तौ द्वितीयं प्रकरणं समाप्तम् ।

## दीपिका ।

शैवे सिद्ध इत्यादि । शैवे सर्वमिदं परमिति पूर्वोक्तस्यैतच्छास्त्र-सिद्धस्य भोगमोक्षस्फुटत्वस्योपसहारः क्रियते इत्याह । इहेत्यादि न-व-त्रत्याया अपि मुक्तेर्महाप्रलयावसाने पुनरावृत्तिसम्भवः । अत आह बन्ध-कारणानामित्यादि निश्शेषपाशवियोगरूपत्वादस्य मोक्षस्य न पुनरा-वृत्तिरित्यर्थः ।

इत्यघोरशिवाचार्यविरचितमृगेन्द्रवृत्तिदीपिकायाम्
परमोक्षनिरासप्रकरणं समाप्तम् ।

# पतिलक्षणपरीक्षाप्रकरणम् ।

## वृत्तिः ।

तदेवं दर्शनान्तरपरिदृष्टमत्युत्कृष्टं भुक्तिमुक्त्याख्यं फलं तत्साधनोपायाश्चास्मिन् शास्त्रे प्रतिपाद्यन्त इत्युक्तम् । इदानीं "सर्वेशानानीरित" इति प्राक्तनप्रकरणोपसंहारे सर्वेशानशब्देन सूचितं समर्थयन् ईश्वराख्यपदार्थमुपपाद-यितुमाह । अत्र प्रकरणान्तरोपक्रमे पञ्चप्रकारस्सम्बन्धो वाच्यः । तथाचोक्तं श्रीमत्पौष्करे—

"अनन्तरं यत्पटलात् सूत्रं तन्त्रे प्रवर्तते।
वक्तव्यस्तस्य सम्बन्धः पञ्चधा समवस्थितः।

तन्त्रवस्तुत्रयात्सूत्राद्वाक्यात्प्रकरणात्तथा। पटलाच्चेति" तन्त्रवस्तुनः पतिपशुपाशात्मकस्य पदार्थत्रयस्य "त्रिपदार्थं चतुष्पाद"मित्यनेनोपक्रमात् साम्प्रतं पतिपरीक्षालक्षणस्सम्बन्धः। सौत्रस्तु "सर्वकृत्सर्वविच्छिव" इत्यनेनोक्तः। वाक्यात्मकस्तु "तेन स्वभावसिद्धेन भवितव्यं जगत्कृते"त्यादिभिर्वाक्यैः। प्राकरणिकोऽपि विद्यापादाख्येन प्रकरणेन। पाटलिकस्तु पूर्वपटलान्ते सर्वेशानशब्देन सूचितान्वयः। अनेनैव क्रमेण विद्यापादान्तं यावत्संबन्धपञ्चकमनुसन्धेयम्।

**अथोपलभ्य देहादि**
**वस्तु कार्यत्वधर्मकम्।**
**कर्तारमस्य जानीमो**
**विशिष्टमनुमानतः ॥ १ ॥**

अथ शब्दोऽधिकारार्थः। अत्र हि पतिपदार्थपरीक्षाऽधिक्रियत इत्यर्थः। अत्र च तनुकरणभुवनादीनां भावानां सन्निवेशविशिष्टत्वेन घटादिवत्कार्यत्वं बुद्ध्वाऽनुमानेनैषां बुद्धिमत्कर्तृपूर्वकत्वं प्रतीयत इति तात्पर्यम्।

ननु देहस्यैव तावत्कार्यत्वमसिद्धम्। न हि कश्चित्कदाचि-द्देहः केनचित् क्रियमाणो दृष्टः। सत्यम्। केन चित्क्रिय-माणत्वं देहस्य न दृष्टमिति कर्तृदर्शनापह्नवो न युक्तः। तस्यानुमेयत्वेन दर्शनाविषयत्वात् देहस्य क्रियमाणत्वं कथं न दृष्टम्। अभूत्वा भावित्वमेव हि कार्यत्वम्। तच्च देहस्योपलभ्यत एव। शुक्रशोणितकललाद्युपादानात् "दिह उपचये" इति धात्वर्थगत्त्या प्रतिमासोपचीयमानो गर्भ-स्थो देहः प्रतीयत इति कथमेष कार्यतामतिक्रमेत्। किञ्च सन्निवेशविशेषवत्वाद्विनश्वरत्वाच्च देहादेः कार्यत्वमपह्नोतु-मशक्यम्। यद्यत्सन्निवेशविशेषवद्विनश्वरं तत्तत्कार्यम्। यथा घटादि। तथाच एते देहादयः पदार्थाः। तस्मादेतेऽपि कार्याः एवं च साति देहादिवस्तुजातं धर्मि। बुद्धिमत्कर्तृ-पूर्वकमिति साध्यो धर्मः। कार्यत्वात्। यद्यत्कार्यं तत्तद्बु-द्धिमत्कर्तृपूर्वकं दृष्टम्। यथा रथादि। यत्तु नैवंविधं न तत्कार्यम्। यथाऽऽत्मादि। ननु घुणाक्षरे कार्येऽपि न बुद्धि-मत्कर्तृपूर्वकत्वमस्तीत्यनैकान्तिकः कार्यत्वहेतुः। नैवम्। तत्र कार्यताया एवानन्वयात्। यथेष्टचारमात्र एव किल घुणस्य कर्तृता न तु विशिष्टसन्निवेशाक्षरनिर्मितौ। स तु सन्निवेशस्तथा। अन्यथास्य परिसर्पत एष स्वभावत एवो-पपद्यते। ननु तद्भावे भावात् तदभावे चाभावात् घुणकर्तृ-कमेवाक्षरम्। यद्येवं तत्तथाचारित्वे भावात् अतथाचारित्वे

चाक्षरस्यानभिव्यक्तेरव्यवस्थाने[illegible] घुणाक्षरस्य बुद्धिमत्कर्तृ-पूर्वकत्वमस्तीति कुतः कार्यत्वहेतोरनैकान्तिकत्वम्। नचा-यमकृष्टजातैश्शाल्यादिभिर्वनद्रुमादिभिर्वाऽनेकान्तिकः । तेषु कर्त्रभावस्यानिश्चयात् तेषां च पक्षीभूतत्वात्। नन्व-सिद्धव्याप्तिकस्य पक्षीकरणमात्रेण यदि हेत्वाभासतानि-रासः तर्हि न केचन हेतवो हेत्वाभासाः। भवेद्यद्ययं कार्य-त्वहेतुरसिद्धव्याप्तिकस्स्यात्। यावता दृष्टान्तीकृतदृष्टकर्तृ-कघटादिव्यातिरिक्तास्त्रैलोक्योदरवर्तिनस्तनुकरणभुवनादयो भावा धर्मिणः कर्तृपूर्वकाः। कार्यत्वात्। उपलभ्यमानकर्तृ-कघटादिवदित्यनुमाने क्रियमाणे किमन्यदवशिष्यते। यत्र कार्यत्वस्य व्याप्तिर्न सिद्धा स्यात्। ननु चात्रानुमान एव घटादिदृष्टान्तो धर्मी स दृष्टकर्तृकत्वात् न तावत्सिद्ध इष्यते ईश्वरनिर्वर्त्यः। तस्य तु कुम्भकारादिकार्यत्वेनेश-स्याऽसर्वकर्तृकत्वम्। अथेश्वरकर्तृकत्वं दृष्टान्तधर्मिणो घटा-देरिष्टं तत्साध्यावशिष्टो दृष्टान्तः। प्रतीतिबाधश्च। नहि घटादिकमर्थं कुलालाद्यन्वयव्यतिरेकानुविधायिनं ईश्वर-कर्तृकत्वेन कश्चिदप्यवैति। विरुद्धश्चायं हेतुः यादृशो हि घटादेः कर्ता कुलालादिः क्लेशादिभागनीश्वरो विनश्वरश्च तादृक् जगतोऽपि कर्ता प्राप्नोति तदुक्तं जैमिनीयैः—

"कुम्भकाराद्यधिष्ठानं घटादौ यदि चेष्यते।
नेश्वराधिष्ठितत्वं स्यादस्ति चेत्साध्यहीनता" ॥

---

१. सिषाधयिषितइति पाठभेदः ।

"तथा सिद्धे च दृष्टान्ते भवेद्धेतोर्विरुद्धता ।
अनीश्वरविनाश्यादिकर्तृकत्वं प्रसज्यत" इति ।

स्यादेष सर्वदोषावकाशः । यद्यस्माभिरसर्वविषयमीश्वराधिष्ठानमभ्युपगम्यते । यावता येऽपि तु कुम्भादीनां कर्तारः कुलालादयस्तेऽपि तत्प्रत्यवेक्षणानुगृहीतशक्तयस्तत्तत्कार्यनिर्वर्तनसमर्था भवन्तीति ब्रूमः । ननु कुत्रैतद्दृष्टं यत्कुलालतन्तुवायादिसद्भावे भावात्तदभावेचाभावादपि घटादिकार्यजातमीश्वराधिष्ठितमिति । कुत्र वा न दृष्टं किं न श्रुतं भगवता स्वयमादिष्टं सर्वजनप्रसिद्धेष्वपि शास्त्रेषूद्घुष्यमाणं भवद्भिः ।

"समाविश्य तु भूतानि धारयाम्यहमोजसा ।
पुष्णामि चौषधीस्सर्वास्सोमो भूत्वा रसात्मकः" । इति ।

"न तदस्ति विना यत्स्यान्मया भूतं चराचरमिति" । श्रुतावपि "यो रुद्रोऽग्नौ यो अप्सु य ओषधीषु यो रुद्रो-विश्वाभुवना विवेश" इति । अत एव भवदुद्भावितः प्रतीतिविरोधोऽपि निरस्तः ।

"अज्ञो जन्तुरनीशोयमात्मनस्सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा" ॥

इत्येवंविधायाः प्रत्युत प्रतीतेस्सिद्धत्वात्—

नचायं विरुद्धो हेतुः विपर्ययव्याप्त्यभावात् । दृष्टान्तधर्मिणि घटादौ स्वसाध्येन बुद्धिमत्कर्तृपूर्वकत्वेन तद्व्याप्तेस्सिद्धत्वात् । बुद्धिमत्कर्तृपूर्वकत्वविरहिणो विपक्षादात्मादेर्व्यावृत्तत्वात् । स विरुद्ध उच्यते यस्सपक्षनिवृत्तः विपक्षमेव व्याप्नोति । यथा नित्यश्शब्दः कृतकत्वादिति । बुद्धिमत्कर्तृपूर्वकत्वं च घटस्य कुम्भकारकार्यत्वात्सिद्धमिति का साध्यभ्रष्टता । नच सर्वे एव दृष्टान्तधर्मास्साध्यधर्मिणि क्वाप्यनुमाने भवंति । येनानीश्वरविनाश्यादिकर्तृकत्वप्रसङ्गस्स्यात् । तथाहि अनित्यश्शब्दः कृतकत्वात् घटादिवदित्यत्राऽपि शब्दस्य कुम्भकारकार्यत्वलौहित्यपारिवर्तुल्यादयो घटधर्माः किमिति न भवन्तीति भवद्भिर्वक्तव्यमिति न किञ्चिदेतत् । नन्वेते कार्यत्वसन्निवेशादिमत्वादयो हेतवः कार्यस्यानेककर्तृतामपि साधयन्तीति धर्मिस्वरूपविपरीतसाधनत्वाद्विरुद्धाः । तथाचाह मण्डनः ।

"सन्निवेशादिमत्सर्वं बुद्धिमद्धेतु यद्यपि ।
प्रसिद्धसन्निवेशादेरेककारणता कुतः ॥

रथाद्यवयवा नानातक्षनिर्मापिता अपि ।
दृश्यन्ते जगति प्राय उपकार्योपकारकाः ॥" इति

तदप्ययुक्तम् । रथादीनां कार्याणामनेकतक्षविरचितानां-

मपि एकस्थपतीच्छानुवर्तनं विना निष्पत्त्यदर्शनात्। तदेवं कार्यत्वहेतुना जगतो बुद्धिमत्कर्तृपूर्वकत्वसिद्धौ योसौ तत्तद्वैचित्र्यसम्पादकेच्छाज्ञानक्रियाशक्तियुक्तः कर्ता स इत्यस्मदादिकार्यविलक्षणक्षित्यादिकार्यविशेषजनककारण - विशेषावगमो युक्तः। न चैतदप्रसिद्धम्। यस्माद्वैशिष्ट्यं कार्यवैशिष्ट्याद्दृष्टं लोकस्थितावपि लोकव्यवहारेऽपि विशिष्टकार्यं दृष्ट्वा विशिष्टमेव कारणमनुमीयते यथा विचित्रभुवनादिवस्तुचित्रलेपादिकलाकलापस्यामुख्यताममध्यत्वमनु - पमसौन्दर्यसम्पन्नत्वं च दृष्ट्वा तत्कर्तुरपि तद्गतवैलक्षण्याद्वैशिष्ट्यमवसीयते ॥ १ ॥

## दीपिका।

### अथ।

### पतिलक्षणपरीक्षाप्रकरणप्रारम्भः।

अथेत्यादिपटलमवतारयति **तदेवमित्यादि** प्रासङ्गिकशास्त्रोक्त[१]विषयशिवप्रश्नप्रतिवचनावसाने पूर्वोदितेषु पतिपशुपाशेषु पतिपदार्थस्तावत्परीक्ष्यत इति। ननु किमस्य पञ्चविधसम्बन्धकथनस्य प्रयोजनम्। उच्यते। पटलानां परमेश्वरप्रणीतत्वेन प्रामाण्यप्रदर्शनार्थम्। संबन्धविरहिणां तु पटलानां न पारमेश्वरत्वमिति। अनुमानद्वयमनेन सूत्रेण संगृह्यते इत्याह **अत्र चेत्यादि** देहस्य तावदनित्यत्वेऽपि केनचित्क्रियमाणत्वं नोपलभ्यत इति चोदयति **नन्वित्यादि** परिहरति **सत्यमित्यादि** ननु "न कदाचिदनीदृशं जगदि"ति न्यायाद्भुवनादीनां कार्यत्वमेव तावदसिद्धं अभूत्वा

१ शास्त्रोत्कर्षविषयप्रतिवचनेति पाठभेदः।

भावित्वं च तेषां न दृश्यते यतः। तन्न। जीर्णमठकूपादिभिरनेकान्तात्। तेषामपि क्रियमाणत्वं न दृश्यते यतः। अनुमाननिराकृतश्चायं पक्ष इत्याह **किञ्चेत्यादि** ननु न कदाचिदनीदृशं जगदित्युक्तत्वात् असिद्धं विनश्वरत्वम्। तन्न। "कोटिशो मरणं दृष्ट्वा" इत्यादिना भुवनानां विनश्वरत्वस्य वक्ष्यमाणत्वात्। यद्येवं करणानां शक्तिरूपतयैवाभ्युपगमात् असिद्धं सन्निवेशवत्त्वमिति कथं कार्यत्वोपलम्भः। तेषां करणत्वाच्छस्त्रादिवत् कार्यत्वमिति ब्रूमः। एवं चेदादिशब्दोपात्तानां परमाणूनां कथं कार्यत्वं पांस्वादिवन्मूर्तत्वादिति ब्रूमः। किञ्च तेषामचैतन्ये सत्यनेकत्वात् कार्यत्वमिति वक्ष्यति—

"यदनेकमचित्तु दृष्टमुत्पत्तिधर्मकम्" इति। श्रीमत्पराख्येऽप्युक्तम्—

"अचेतनमनेकं यदवश्यं कारणं नयेदि"ति। इत्थमनुमानत्रयेण एतेषां कार्यत्वोपलम्भः। तद्यथा—यद्यन्मूर्तं तत्तत्कार्यम् यथा पांस्वादि। यत्र तु कार्यत्वं न भवति तत्र मूर्तत्वमपि नास्ति। यथाऽऽत्मादि। मूर्ताश्च उभयवादिसिद्धाः परमाणवः। ततस्तेऽपि कार्या इत्येकः प्रयोगः द्वितीयस्तु यद्यत्सावयवं तत्तत्कार्यं यथा घटादि। यत्र तु सावयवत्वमपि न भवति तत्र कार्यत्वमपि नास्ति यथा आत्मादि। सावयवं चैतत्क्षित्यादि भुवनजातं ततस्तदपि कार्यमिति। तृतीयोऽपि यद्यत्करणं तत्तत्कार्यं यथा शास्त्रादि। यत्र तु कार्यत्वं नास्ति तत्र करणत्वमपि नास्ति। यथाऽऽत्मादि। करणं चैतच्चक्षुरादि। ततस्तदपि कार्यमिति। इत्थं देहादेः कार्यत्वमुपपाद्य बुद्धिमत्कर्तृत्वं दर्शयति। **एवं च सतीत्यादिनचायमित्यादि** सावयवत्वादेव तेषां घटादिवत् कर्तृपूर्वकत्वं सिद्धमिति भावः। **ये पितु कुम्भादीनामित्यादि** कुलालादयः प्रयोज्यकर्तारः। ईश्वरस्तु प्रयोजककर्तेत्यर्थः। इदानीं देहादेः कर्तृपूर्वकत्वसिद्धावपि नैकोपि विश्वकर्ता सिध्यतीति चोदयति **नन्वेत इत्यादि** यद्येवमनेकास्सन्तु कर्तार इति चेत्तदयुक्तम्। यतस्तेषा-

मनेकत्वात् परिदृष्टकर्तृनृपतीनामिव न क्रमः कार्ये सम्भवति । यौगपद्येऽभ्युपगम्यमाने कार्यस्यासम्भव एव । तदिदमुक्तम् ।

"बहवो यत्र नेतारस्सर्वे पण्डितमानिनः ।
तथा महत्वमिच्छन्ति तद्व्यक्तमवसीदति ।" इति ।

सिद्धान्तमाह **तदप्ययुक्तमित्यादि** अयमर्थः कार्यं हि कर्तारं विना न सम्भवतीति व्याप्तेर्निश्चयात् कार्योपपत्त्या तत्कर्तृत्वं कस्यचित्प्रतीयते । कार्यं चेदं जगल्लक्षणम् । परस्पराङ्गत्वेन व्यवस्थितत्वात् एक एव प्रसादादिवत् तस्य ह्येकेन स्थपतिना विना न परस्पराङ्गभावोऽवयवसन्निवेशस्योपपद्यत इति जगतोप्येक एव कर्ता सिद्ध्यतीति । ततश्चैकस्यैव विश्वकर्तुः क्रमायौगपद्येन च कार्यकरणमुपपद्यत इति वक्ष्यामः । "क्रमाक्रमसमुत्पत्तेः क्रमाद्युत्पत्तिशक्तिमत्" इत्यत्र । अत एव कार्यवैशिष्ट्यात् कर्तृवैशिष्ट्यं सिद्धमित्याह । **तदेवमित्यादि** । न चैतदप्रसिद्धमिति कार्यवैशिष्ट्यात्कर्तृवैशिष्ट्यानुमानमेतदेव वैशिष्ट्यमित्यादिना सूत्रार्धेनोच्यत इत्याह **यस्मादित्यादि** ॥ १ ॥

वृत्तिः ।

अतश्च ।

**यद्यथा यादृशं याव-**
**त्कार्यं तत्कारणं तथा ॥ १½ ॥**

यत्कार्यं धूमादि **यथे**ति येन प्रकारेण गिरिगुहागतत्वेन तदुत्सङ्गवर्तितया तदपरपार्श्ववर्तित्वेनचोपलब्धम् । **यादृशं** च तार्णपार्णादिना स्वरूपेण विशिष्टं यावत्परिमाणं

तनुतररेखाकारमम्बुदनिवहबहलं वा । तत्कारणं वह्न्या-दिलक्षणम् । तथेति पर्वतोत्सङ्गस्थं वा तच्छिखरनिविष्टं वा तत्पश्चाद्भागगतं वा तादृशं च तार्णपार्णादिरूपं च तावत्प्रमाणकं वाऽल्पत्वबहुत्वेन यथाऽनुमीयते एवं जग-ल्लक्षणकार्यस्य तत्तत्प्राकाराकारवैचित्र्यमुपलभ्य तत्तद्वि-शेषविषयनिरतिशयज्ञानक्रियाशक्तियुक्तं कारणमनुमी-यते ॥ १½ ॥

दीपिका ।

एतदेवोत्तरार्धेन प्रपञ्च्यत इत्याह अतश्चेत्यादि ॥ १½ ॥

वृत्तिः ।

तच्च ।

**नित्यं कालानवच्छेदा-**
**द्वैतत्यान्न प्रदेशगम् ।**
**क्रमाक्रमसमुत्पत्तेः**
**क्रमाद्युत्पत्तिशक्तिमत् ॥ २½ ॥**

यस्याभूत्वा भवनं भूत्वाचाभवनं तस्य काले-नावच्छेदादनित्यत्वम् । यत्तु पूर्वापरकोटिद्वयविरहात् का-लानवच्छिन्नमतो नित्यम् । किञ्च न तत्क्वचिदवस्थितं अपितु वैतत्यात् महत्त्वादिग्देशानवच्छिन्नत्वात् सर्वगम् ।

सर्वत्र तत्कार्योपलब्धेश्च विभुः। तथा क्रमयौगपद्याभ्यां तनुकरणादिकार्यस्योत्पादनात् क्रमेण युगपच्चोत्पादिकया शक्त्या युक्तम् ॥ २½ ॥

दीपिका।

"नित्य"मित्यादिसूत्रमवतारयति **तच्चेत्यादि** कर्तृलक्षणं जगत्कारणमिति शेषः। **यस्येत्यादि**। अनित्यत्वे जगत्कर्तुरनवस्थेति भावः। **किञ्चेत्यादि**। अनुमानागमाभ्यां सर्वगतमर्थसिद्धमित्यर्थः। **तथेत्यादि** अयमभिप्रायः। येन कारणेनैकस्य कर्तुर्देवदत्तादेर्युगपच्च गमनेषु भक्षणसङ्कथा भारोद्वहनादिकार्यमनेकं दृश्यते स्नानभोजनशयनादिकं क्रमेणापीति तेन कारणेन शरीरादीनां केषाञ्चिद्युगपत्केषाञ्चित्क्रमेणोत्पत्तिदर्शनात् तत्कर्तुरीश्वरस्यापि क्वचिद्यौगपद्येन कर्तृत्वं क्वचिच्च क्रमेणाऽपि प्रतीयत इति क्रमेण युगपच्चोत्पादिकया शक्त्या युक्तमिति ॥ २½ ॥

वृत्तिः।

ननु जगत्सृष्टिस्थित्यादिका तत्क्रिया नाकरणिका। क्रियात्वात्। छिदिक्रियावत्। अतस्तस्याऽपि करणेन भवितव्यमित्याह।

तस्याऽस्ति करणं येन
दृष्टा नाकरणा कृतिः।
अनागामि च तज्ज्ञेयं
कार्यस्यानादि संस्थितेः ॥ ३½ ॥

यस्मादकरणिका क्रिया न सम्भवति अतस्तस्य भगवतः किमप्यवश्यं करणमस्ति । तच्च कृत्यस्य सर्गादेरनादित्वेनावस्थानादनागामि अनागन्तुकम् ॥ ३१/२ ॥

दीपिका ।

तस्येत्यादिसूत्रं व्याख्यातुमाशङ्कामाह । नन्वित्यादि करणाभावादीश्वरस्याकर्तृत्वप्रसङ्ग इति भावः । तन्न । यतः कर्तृत्वान्यथानुपपत्त्यैव तस्य करणमप्यस्तीति प्रतीयत इत्याह यस्मादित्यादि तच्च शक्तिरूपमित्यनन्तरमेव वक्ष्यति । "करणं च न शक्त्यन्य"दिति । अयमर्थः । क्रियाशक्तिरेवेश्वरस्य करणं सर्वकर्तृत्वात् योगिन इव योगिनश्च सर्ववादिसिद्धाः चार्वाकैरपि विषग्रहचिकित्साकारित्वेन मण्यौषधादिवन्नाक्षेप्तुं शक्याः । यदाहुः "अचिन्त्यो हि मणिमन्त्रौषधादीनां प्रभाव" इति । अतश्चेश्वरसमवायिनी क्रियाशक्तिरेवात्र साध्या न ज्ञानशक्तिः । तत्सामर्थ्यसिद्धत्वात्तस्या इति वक्ष्यामः—

"सर्वज्ञस्सर्वकर्तृत्वात्साधनाङ्गफलैस्सह ।
यो यज्जानाति कुरुते स तदेवेति सुस्थितम् ।" इति ।

नापि परिग्रहवर्तिनी महामायात्मिका शक्तिः[1] । तस्या उपादानत्वात् । अतश्च समवेतशक्त्यैव करणभूतयासौ तद्भुवनादिकार्यं करोतीत्याह तच्च कृत्यस्येत्यादि ॥ ३१/२ ॥

वृत्तिः ।

अथ किं तत्करणमित्युच्यते ।

**करणं च न शक्त्यन्यत्**
**शक्तिर्नाचेतना चितः ।**

---

१. करणमिति शेषः ।

**विषयानियमादेकं**
**बोधे कृत्ये च तत्तथा ॥ ४½ ॥**

शक्तिरेवास्य विश्वेशितुः करणं तयैव तत्तत्क्रियानिष्पादनात्। सा चेच्छादिरूपेति वक्ष्यामः। उक्तं च किरणे—

"इच्छैव करणं तस्य यथा सद्योगिनो मता" इति।

शक्तिश्च वेदनरूपा। न हि चित्स्वभावस्याचिद्रूपा शक्तिर्भवति। यच्चैतच्छक्त्यात्मकं करणम्। **विषयानियमादेकं** इति यस्य ज्ञेयानां करणीयानां चाऽऽनन्त्यं तस्मात्तस्य करणैरप्यनन्तैर्भवितव्यम्। अपरिमितविषयं च परमेश्वरस्य ज्ञानं कृत्यं च यद्वक्ष्यति "शाङ्करं ज्ञानमित्युपक्रम्य—

"तदेकं विषयानन्त्याद्भेदानन्त्यं प्रपद्यते।
कर्तृत्वं तदभिन्नत्वात् तद्वदेवोपचारत" इति।

तस्माद्विषयस्य ज्ञेयस्य करणीयस्य चानियतत्वात् अनवच्छिन्नत्वात् एकमपि तच्छक्तिरूपं करणं बोधकविषये कृत्यविषये च तथेति अनवच्छिन्नं अनन्तमेवेत्यर्थः ॥ ४½ ॥

## दीपिका ।

तदेव "करणं चे"त्यादिना प्रपञ्च्यते इत्याह शक्तिरेवाऽस्येत्यादि । नन्वीश्वरः कर्ता न भवति । इन्द्रियरूपकरणरहितत्वात् यो यः कर्ता स स इन्द्रियकरणयुक्तः यथा कुलालादिरिति । तन्न । विशेषशक्तियुक्तत्वाद्भगवानयस्कान्तवत्सन्निधिमात्रेणैव कार्यजनकः । यद्येवमयस्कान्तोऽचेतनस्तथेश्वरोऽपि स्यात् । नैवमात्मना सवित्रादिभिश्चानैकान्तात् । विशिष्टशक्तियुक्तत्वात् सन्निधिमात्रेणैव कार्यजनकः । स्वदेहस्पन्दादौ चेतनात्मवत् । किञ्च सविता यथा स्वशक्त्यात्मकैरेव करणैः कमलकुमुदादीनां विकाससङ्कोचकर्ता न व्यतिरिक्तेन करणेन । तथायमीश्वरोऽपीति । ननु सवितुश्शरीराद्यस्त्येव । सत्यम् । स्वशक्तिमात्रकरणतयाऽत्रानैकान्तिकविषयत्वेनास्योपादानादित्यविरोधः । नहि सर्वथा दृष्टान्तस्सम्भवतीत्युक्तम् । तथाच सति पक्षसपक्षविभागाभावेन हेतोर्व्याप्तिग्रहणासम्भवात् सर्वानुमानोच्छेदप्रसङ्ग इति । ननु दृष्टे कर्तरि आदित्यादाविव शक्तिः करणत्वेनाऽस्तु । अदृष्टे तु कर्तरि द्वयोरपि तच्छक्त्योः कार्यान्यथानुपपत्तिकल्पनीयत्वात् कर्तृकल्पनयैव तदुपपत्तेः कथमन्यथा शक्तिः कल्प्यते । तदिदमुक्तं प्राभाकरैः "कल्प्यं पुनर्निरुणद्धि कल्पनाम्" इति । अत्रोच्यते त्वयाऽपि जैमिनीयपक्षस्थितेन रूपदर्शनान्यथानुपपत्त्या कल्पितस्याऽपि त्वगेकदेशविशेषलक्षणस्य चक्षुषोऽन्यस्य कल्प्यत्वात् विपुलोऽयमनेकयोजनलक्ष्यव्यवहितध्रुवतारकादेरर्थस्य ग्रहोऽनुपपद्यत इति कल्पितस्यापि शक्तिः कल्प्यते यथा प्रमाणबलात्तथाऽतीन्द्रियस्याऽपि तस्य कर्तुः कल्पितस्य पूर्वोक्तानुमानेन अतीन्द्रिया शक्तिः कल्प्यत इति समानोऽयमुपपत्तिनिश्चयस्साध्यवस्तुना इति न प्रागुक्तदोषः इति । ननु शक्त्या विनेश्वरस्याऽपि कर्तृत्वासम्भवाच्छक्तिरेव जगत्कारणत्वेन कल्प्यताम् । तन्न । शक्तेर्धर्मत्वेन धर्मिणमन्तरेण स्थित्यसम्भवात् । तदुक्तं मतङ्गे—

"गुणा गुणिनमाश्रित्य विचेष्टन्ते स्वके स्वके ।
विषये न निराधारा" इति ।

तस्मादग्नेरौष्ण्यमिव ईश्वरस्याऽपि शक्तिरविनाभूतेति । इत्थं शक्तिरूपं करणं प्रसाध्य तस्य ज्ञेयकार्यभेदादौपचारिकमानन्त्यमित्याह । यच्चेत्यादि ॥ ४½ ॥

वृत्तिः ।

अथ मतान्तरनिरनुभाषणेनेश्वरास्तित्वमेव दृढयति ।

**कार्यं न स्थितिजन्मादि**
**बीजस्य प्रकृतेरणोः ।**
**पारिशेष्यान्महेशस्य**
**मुक्तस्य शिव एव सः ॥ ५½ ॥**

ननु किमत्र करणापेक्षेणेश्वरेण कल्पितेन तस्मिन् कर्मनैरपेक्ष्येण कर्तृत्वानभ्युपगमात् । तच्चरितानि कर्माण्येव सृष्टिस्थित्यादिकारणतया भवन्त्विति जैमिनीयाः । यदाहुः—

"कस्यचिद्धेतुमात्रस्य यद्यधिष्ठातृ नेष्यते ।
कर्मभिस्सर्वजीवानां तत्सिद्धेस्सिद्धसाधनम् । इति ।

यद्वा बीजमिवाङ्कुरादीनां कलादिकार्याणामुपादानं मायैवान्यानपेक्षिणी सृष्ट्यादिकृद्भवतु । प्रकृतिरेवाऽव्यक्ताख्या एतत्कर्तृत्वेनाऽस्तु । यां विना तस्येश्वरस्याऽपि

तत्कार्यानिष्पत्तिरुपलभ्यते क्षित्याद्यात्मना पारार्थ्यप्रवृत्ता-न्यानपेक्षिणी प्रकृतिरेव । अतः किमीश्वरेणेति कापिलाः । तथाहि—

"यद्यथा परिणामैकस्वभावं तत्र तत्तथा ।
अन्यानपेक्षिबीजादिसामग्री यद्वदङ्कुरे ।
महदादिविकारौघपरिणामस्वभावकम् ।
त्रिगुणात्मप्रधानं च तेन सांख्यमनीश्वरमिति" ।

यदि वा "पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम्" इति । अणोः पुरुषादेव विवर्ततया चिदचिल्लक्षणविश्वप्रादु-र्भावो भविष्यति किमीश्वरेणेति तदसत् । बहिर्बीजभूतानां कर्मणां मायादीनां चाचेतनानां बुद्धिमदधिष्ठितानां सृष्ट्या-दिकृत्यमुपपन्नमित्युक्तत्वात् । प्रकृतेरप्यौत्सुक्यानिवृत्यर्थं कार्येषु प्रवृत्तिर्नितरामयुक्ता तस्या अचैतन्यादौत्सुक्यस्य च चेतनधर्मत्वात् पुरुषस्यापि परिणामित्वाद्यनेकदोषोपनि-पातात् स्वतन्त्रस्य चाभिरुचितहानेरनिष्टोपनिपातस्य चोप-पत्तेरस्ववशत्वात् स्थितिजन्मप्रलयकर्तृत्वनिरासे सति पारि-शेष्यान्महेश्वरस्यैव तत्स्थितिजन्मादिकार्यमिति पारिशेष्या-नुमानमनवद्यमिति गमकमेतत् । इदमिदानीं विविच्यते यदि तावत्परमेश्वरः कारुण्यात्संसारिजनोज्जिहीर्षया जगतां स्थितिजन्मादौ प्रवर्तते तत्किमर्थं प्रत्युत सांसारिकेषु

१. कर्तृत्वेनास्त्विति पूर्वेणान्वयः ।

दुःखेषु वराकानिमान्प्राणिनो नियोजयति। अथ तस्यैवंविध एव स्वभावः स मुक्तमपि जन्तुं किं न संसारयतीत्याह **मुक्तस्य शिव एव सः** सत्यं कारुण्यादेव भगवान् प्राणिनोऽनुगृहीतुं प्रवर्तते। यद्दुःखमोहादिना निरयाद्युपभोगेन वा तान् संयोजयति तन्निजकर्मानुरूपवशात्। न च कर्मापेक्षितया ईश्वरस्य स्वातन्त्र्यहानिरित्याशङ्कनीयं करणापेक्षया कर्तुस्स्वातन्त्र्यव्याघातादर्शनात्। भाण्डागारिकापेक्षस्य राज्ञः प्रसादादिदानवत्। यदुक्तं सिद्धगुरुभिः।

"स्वातन्त्र्यान्याप्रयोज्यत्वं करणादिप्रयोक्तृता।
कर्तुस्स्वातन्त्र्यमेतद्धि न कर्माद्यनपेक्षिता॥ इति।

न चाभुक्तस्य कर्मणः क्षयो भवति। तत्तद्योनिशरीरोपभोगभुक्तविचित्रकर्मक्षयतः तत्साम्याद्वाऽत्युत्कटमलपरिपाकवशप्रवृत्तशक्तिपातापसारितमलस्यावाप्तानुग्रहस्य जन्तोर्निरस्तसमस्तपाशत्वात् आविर्भूतसर्वार्थज्ञत्वकर्तृत्वस्य मुक्तात्मनस्संसार्यताहेतोः पशुत्वस्याभावात् शिवस्वरूप एव भगवान् भवति। न तु पशोरिवास्य कुत्सितभवभोगोपभोगहेतुर्भवतीति भावः॥ ५१॥

दीपिका।

"कार्यं न स्थितिजन्मादि"सूत्रमवतारयति। **अथेत्यादि** तदेतद्व्याख्यातुमाशङ्काप्रकारानाह **नन्वित्यादि** परिहरति **तदसदिति** तत्र

बीजशब्देन कर्मोच्यत इत्याह **बहिर्बीजभूतानां कर्मणामिति** । अयमभिप्रायः (किञ्च तत्कृष्यादिकर्मवदचेतनत्वाद्योजकं तत्र कर्मैव कारणमस्त्विति यदुक्तं तन्न वस्तुप्रतिबन्धमूलत्वेनास्यानुमानस्य धूमाद्वह्न्यनुमानस्येवोक्तत्वात् वह्निकार्यो धूम इवाकर्तृकं कार्यं न सम्भवत्येव यतः)। किञ्च कृष्यादिकर्मवदचेतनत्वाद्योजकं संविधातारमपेक्षते। न च तस्य तनुकरणजननादावस्य पुंसोऽशक्तत्वात् संविधातृत्वं सिद्धमिति तद्व्यतिरिक्तस्येश्वरस्य सिद्धिः । **मायादीनां चेत्यादि** प्रकृतिशब्देनात्र बिन्दुमायाप्रधानात्मकं प्रकृतित्रयमुच्यत इत्यर्थः । **बुद्धिमधिष्ठितानामिति** मायादयः पाशाः पुरुषं प्रति चेतनशक्त्यधिष्ठिता एव प्रवर्तन्ते । अचेतनत्वाद्रज्वादिवदित्युक्तं प्रागेवेति । ननु "यद्यथा परिणामैकस्वभावं तत्र तत्तथा। अन्यानपेक्षबीजादिसामग्री यद्वदङ्कुरे" इत्युक्तत्वात् प्रकृतिरेव महदाद्यात्मना पारार्थ्यात्पुरुषं प्रति प्रवर्तत इत्युक्तमत आह **प्रकृतेरपीत्यादि** मृदादिवदचेतनत्वात्प्रकृतेः कर्तृत्वमयुक्तं कर्तुः करणान्तरप्रवृत्तिनिवृत्तिहेतुत्वेन चैतन्याव्यभिचारात् । यदाहुः—

"प्रवृत्तौ च निवृत्तौ च कारकाणां य ईश्वरः ।
अप्रवृत्तः प्रवृत्तो वा स कर्ता नाम कारक.। इति।

नन्वचेतनमपि अयस्कान्तादि स्वयं प्रवर्तमानं दृश्यते । तन्न । यतोऽयमयस्कान्तोऽपि योक्तारमपेक्ष्यैव प्रवर्तत इत्युक्तम्। नन्वचेतनमपि क्षीरं गवादेर्वत्सादिविवृद्ध्यर्थं स्वयं प्रवर्तमानं दृश्यते। यदाहुस्सांख्याः "वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य । पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ॥" इति । यद्येवं विरुद्धोऽयं हेतुः । दृष्टान्तेऽस्मिन् साध्यविपर्येयेण सह दृष्टव्याप्तिकत्वात् । अचेतनं हि क्षीरं चेतनगवाधिष्ठितं प्रवर्तमानं सिद्धमिति प्रधानस्याचेतनत्वात् प्रवर्तकेन चेतनेन भवितव्यमिति ईश्वर-

१. एतदधिकपाठःपुस्तकान्तरेनास्ति ।

स्सिद्धः। पुरुषस्याप्युपादानत्वे परिणामित्वादिदोष इत्युक्तमित्याह **पुरुषस्यापीत्यादि** किञ्चास्वातन्त्र्यादिदर्शनात्तस्य सृष्ट्यादिकर्तृत्वं च नोपपद्यत इत्याह **अभिरुचितहानेरित्यादि**। अतश्च परिशेषानुमानादपि ईश्वरसिद्धिरित्याह **पारिशेष्यादित्यादि**। "मुक्तस्य शिव एव स" इति व्याख्यातुं प्रासङ्गिकीमाशङ्कामाह **इदमिदानीमित्यादि** तत्र प्रथमचोद्यस्य परिहारः। **सत्यमित्यादि** यद्येवं कर्मापेक्षित्वादीश्वरस्य स्वातन्त्र्यहानिरत आह **न च कर्मापेक्षितयेत्यादि** अत एव द्वितीयचोद्यमपि परिहृतमित्याह **तत्तद्योनीत्यादि** अस्य च समासपदस्य जन्तोरित्यस्यानन्तरमन्वयः। समस्तकर्मक्षयस्य दीक्षानिर्वर्त्यत्वात्। विज्ञानयोगादिजन्यस्याऽपि विज्ञानकेवलत्वमात्र एव हेतुत्वात्। यदुक्तं "धर्माधर्मक्षयकरी दीक्षा" इति। तथा "अन्यतन्त्रेषु ये मुक्ता धर्माधर्मक्षयान्नराः। तेऽत्र रुद्राणवः प्रोक्ता" इति। तत्साम्याद्वेत्येतत् कर्मसाम्यं मोक्षस्य हेतुरिति वादिभिः प्रक्षिप्तमित्युपेक्षणीयम्। तस्य संसारावस्थायामपि भावात्। विरुद्धकर्मक्षयमात्र एव चरितार्थत्वाच्च न मलपरिपाकादिहेतुत्वमिति वक्ष्यामः। **अपसारितमलस्येति** परिपाकवशादपसरणोन्मुखमलस्येत्यर्थः। अपसरणं तस्य दीक्षयैव। अत आह **अवाप्तानुग्रहस्येति** प्राप्तदीक्षस्यैव। यदुक्तं स्वायम्भुवे—

"दीक्षैव मोचयत्यूर्ध्वं शैवं धाम नयत्यपि" इति।

ततश्चायमर्थः। मलपरिपाकशक्तिपाताभ्यां दीक्षया सर्वकर्मक्षयात्। तयैव मलमायारोधशक्तीनां तद्बन्धकत्वस्य निवृत्तेरवाप्तशिवत्वस्य परमेश्वरो न संसारहेतुर्भविष्यतीति ॥ ९३ ॥

वृत्तिः।

पुनरपीश्वरकर्तृकत्वमेव जगतो घटयितुमनुमानं प्रतिसमाधातुमाक्षिपति।

सम्बन्धाग्रहणाद्बाधा
मानस्याभ्येति कस्यचित्।
सा परस्याऽपि धूमाग्न्यो
र्गिरौ माहानसाद्यतः ॥ ६[१/२] ॥

नन्वस्य स्थितिजन्मादेः कार्यस्याविनाभावलक्षण-सम्बन्धो यदि कदाचिज्जगत्कर्त्रा सह केनचिदपि गृहीत-स्स्यात् तदैतदनुमानं सिध्येत्। सम्बन्धस्यैवत्वग्रहणात् कथं नास्य बाधेति यदि कस्यचिन्मतं स्यात् तदिदमप्यसौ प्रत्यनुयोज्य इत्याह। सापरस्यापीति सैषा बाधा सर्वस्या-प्यनुमानवादिनः प्रसक्ता। तथाहि महानसादिगतानां विशिष्टदेशकालकारिणामेव धूमाग्निव्यक्तीनां सम्बन्ध-ग्रहणे धूममात्राच्च पर्वतादौ वह्निमात्रानुमानमिति अगृही-तसम्बन्धैव धूमव्यक्तिः कथं तथाविधवह्निव्यक्तिं गमये-दिति सम्बन्धग्रहणपर्यनुयोगस्समानः। ततश्च—

"यत्र स्यादुभयोर्दोषः परिहारोऽपि वा समः।
नैकः पर्यनुयोक्तव्यस्तादृगर्थविनिश्चये"[1] इति।

नैतदस्माकमेव चोद्यम्। अथ धूममात्रस्य वह्निमा-त्राविनाभावलक्षणस्संबन्धो गृहीतः तदिहापि कार्यमात्रा-

---

१ विचारण इति पाठभेदः।

त्कर्त्रनुमानं दृष्टम् । अन्यथा सर्वानुमानमात्रोच्छेद एव स्यात् । तदुक्तम् —

"साध्यसाधनसामान्येनाविनाभावनिश्चयात् ।
प्रवृत्तिरनुमानस्य तदभावस्तदन्यथा" इति ।

इत्थं च विचित्रतत्तत्कर्माशयाधिवासितभोक्तृभोगतत्साधनतदुपादानादिविशेषज्ञः कर्ताऽनुमानान्तरेणानुमीयत इति न कश्चिद्दोषः। तदिदमुक्तं तत्रभगवद्बृहस्पतिपादैः "भवभोक्तृभोगसाधनतदुपादानादि यो विजानाति । तमृते भवेन्नहीदं पुंकर्माशयविपाकज्ञम्" इति ॥६३ ॥

दीपिका ।

इत्थं प्रासङ्गिकचोद्यद्वये निराकृते प्रकृतमेवानुमानं सम्बन्धेत्यादिनाऽऽक्षिपतीत्याह पुनरपीत्यादि कस्यचिदित्यनेन प्रमाणपरामर्शेनाऽपि तद्वादिपरामर्श इत्याह कस्य चिन्मतं स्यादित्यादि कार्यमात्रस्य कर्तृमात्रेण सम्बन्धग्रहणं कुम्भकारादौ सिद्धमिति कृत्वा साध्यधर्मिण्येव संबन्धग्रहणेऽभ्युपगम्यमाने सर्वानुमानानां बाधा प्रसज्यत इति। "सा परस्येत्यादि नोच्यत इत्याह। तदिदमप्यसावित्यादि। अथ धूममात्रस्येत्यादि अत एव यदुक्तं वल्मीकादिसन्निवेशाद्विसदृशो भूधरादिसन्निवेश इति । तदप्ययुक्तम् । सन्निवेशमात्रस्य कार्यमात्रेण व्याप्तिसिद्धेः । तदिदमुक्तमस्माभिः पाषण्डापजये —

"सन्निवेशादिमात्रादि कार्यमात्रेण सङ्गतम् ।
कार्यमात्रं तथा व्याप्तं कर्तृमात्रेण निश्चित"मिति ॥ ६३ ॥

वृत्तिः ।

अस्तु तर्हि ईश्वरः कर्ता । स तु न तावदशरीरः प्रत्येतव्यः । "कार्यं शरीरयुक्तेन कर्त्रा व्याप्तं सदैव यत्"। इत्यादिना देहविरहिणः कर्तृत्वायोगस्योक्तत्वात् । तथाहि—

**लोके वपुष्मतो दृष्टं**
**कृत्यं सोऽप्यस्मदादिवत् ॥७॥**

**लोके वपुष्मतो दृष्टमिति** लोके वपुष्मतो दृष्टं कृत्यं घटपटादिकार्यं शरीरवतैव क्रियमाणं दृष्टम् । नाशरीरेणेति । किञ्चातः **सोऽप्यस्मदादिवदिति** क्लेशादियुक्तोऽसर्वज्ञः परिमितशक्तिर्देशाद्यवच्छिन्नस्सोपीश्वरश्शरीरवत्वात्प्राप्नोतीति पूर्वः पक्षः ॥ ७ ॥

दीपिका ।

लोक इत्यादिप्रश्नसूत्रमवतारयति अस्तु तर्हि इत्यादि ।

वृत्तिः ।

सिद्धान्तस्तु ।

**मूलाद्यसम्भवाच्छाक्तम्**
**वपुर्नैतादृशं प्रभोः ॥ ७½ ॥**

अशरीरस्याऽपि तावत्स्वदेहस्पन्दादौ कर्तृत्वं दृष्टमिति । "कार्यं शरीरयुक्तेन कर्त्रा व्याप्त"मित्युक्तमभ्युपगम्याऽपि ब्रूमः । शरीरवत्त्वेऽपि भवतो न प्रागुक्तदोषप्रसङ्गः । कुत इत्याह **मूलाद्यसम्भवादिति** मूलं मलः सर्वानर्थमूलत्वात् । "अविद्यावृतिरुग्ग्लानिपापमूलक्षयादिभिः ।" पर्यायैर्वक्ष्यमाणत्वाच्च । आदिग्रहणात्कर्माणि रोधशक्तिश्च । तदसम्भवात् नहि परमेश्वरस्य मलकर्मादिपाशजालं सम्भवति । यन्निमित्तं प्राकृतं वपुः कल्प्यते । अपि तु शाक्तमिति शक्तिस्वरूपैस्सद्योजातादिभिः पञ्चभिर्मन्त्रैस्स्वेच्छानिर्मितं परिमितसामर्थ्यं दिग्देशकालाकारव्यवच्छिन्नमनुपममभिमतं शरीरम् । न त्वस्मदादिशरीरसदृशम् ॥ ७½ ॥

दीपिका ।

लोकेऽपि न शरीरयुक्तस्यैव कर्तृत्वमित्याह **अशरीरस्यापीत्यादि** एतच्च पूर्वमेवोक्तमिति । सशरीरस्यैव कर्तृत्वाभ्युपगमेऽपि तच्छरीरस्यैव शाक्तत्वात् नास्मदादिशरीरवत् क्लेशादिहेतुत्वमित्याह **शरीरवत्त्वेऽपीति** अयमर्थः । अस्मदादीनां मलावृतशक्तित्वात् केषुचित्कार्येषु शरीराद्यपेक्षित्वम् । भगवतस्त्वनावृतशक्तित्वाच्छक्तिरेवोपचारात्सर्वकार्यं कुर्वतीति शरीरमित्युच्यते । शक्तिश्च कार्यकरीत्युक्तं प्रागेवेति । अन्यत्र धूमादावपि कार्येऽग्न्यादिशक्तय एव कारकं न द्रव्यम् । तत्सत्तामात्रेण कार्योत्पत्तिप्रसङ्गादिति । मूलाद्यसम्भवादित्यादिनैतदेव प्रपञ्च्यत इति प्रश्नपूर्वं दर्शयति **कुत इत्यादि** अत एव सृष्ट्यादिकृत्यभेदभिन्नाभिर्मननत्राणरूपाभिरीशानादिभिश्शक्तिभि-

रूपेतत्वात्पञ्चमन्त्रतनुर्भगवान् कथ्यते । तदीयाभिरष्टत्रिंशत्कलाभिर्युक्त-त्वात्सकल इति ॥ ७½ ॥

अत एव हि ।

**तद्वपुः पञ्चभिर्मन्त्रैः**
**पञ्चकृत्योपयोगिभिः ।**
**ईशतत्पुरुषाघोर**
**वामाजैर्मस्तकादिकम् ॥ ८½ ॥**

यथाक्रममनुग्रहतिरोभावादानरक्षणोत्पत्तिलक्षणे कृत्यपञ्चके अवश्यमुपयोग येषां तैरीशानादिभिः पञ्चभिर्मन्त्रैस्तन्मूर्धादिवपुर्देवस्योच्यत इत्यध्याहारः । वरैः पुष्णाति ध्यायिन इति वपुश्शब्दस्यान्वर्थता । भक्तानुग्रहणाय तत्तदाकारग्रहणस्याऽऽगमेषूपदिष्टत्वात् । तथाचोक्तं पौष्करे "साधकस्य तु लक्ष्यार्थं तस्य रूपमिदं स्मृतम् ॥ ८½ ॥

दीपिका ।

तद्वपुरित्यादिसूत्रैरेतदेव व्यस्तसमस्तत्वेन दर्शयितुमुपचारतस्तेषामीशानादीनां मूर्धाद्यवयवरूपत्वं प्रोक्तमुच्यत इत्याह । अत एवेत्यादि अत एवाऽऽगमेनापीश्वरसिद्धिरिति भावः । योगिप्रत्यक्षगम्यत्वं चोपोद्धात एव प्रदर्शितमिति । कथं पुनर्हेमाळिहिमरत्नाभेत्यादिना पञ्चवक्त्रदशभुजाकारं वपुरीश्वरस्य वक्ष्यति अत आह वरैः पुष्णाति ध्यायिन इत्यादि ध्याना-

---

१ क्रियापादे सदाशिवध्याने इति शेषः ।

र्थमेवेश्वरस्याऽऽकारकल्पनं न परमार्थतः। निराकारे ध्यानपूजाद्ययोगात्। यदाहुः—

"आकारवांस्त्वं नियमादुपास्यो न वस्त्वनाकारमुपैति बुद्धिः"। इति। वक्ष्यति च।

"वपुषो विद्यमानत्वाद्यद्यत्कृत्यं करोति सः।
तत्र तत्रास्य तत्कर्तृवपुषाऽनुकृतं वपुः"। इति।

अत एव वपुश्शब्दोप्यत्र दीक्षाशब्दवत् तत्र नीत्या वरं पुष्णातीति पदैकदेशोपादानेन ज्ञेय इति ॥ ८½ ॥

वृत्तिः।

अथ कथं भगवत ईशानादिमूर्धत्वमित्याह।

**ईष्टे येन जगत्सर्वं**
**गुणेनोपरिवर्तिना।**
**स मूर्धसमदेशत्वात्**
**मूर्धा नावयवस्तनोः ॥ ९½ ॥**

येन गुणेन मन्त्रेण सर्वस्रोतोऽनुस्रोतसामूर्ध्वस्थितत्वात्सर्वानुग्रहहेतुत्वाद्वोपरि वर्तिना जगच्चिदाचिदात्मकं विश्वमीष्टे। स उत्तमाङ्गवत् सर्वोर्ध्वस्थितत्वान्मूर्धेव मूर्धा न परमार्थतो देहावयवः ॥ ९½ ॥

वृत्तिः।

तत्पुरुषवक्त्रं व्याचष्टे।

**तस्य तस्य तनुर्या पू-**
**स्तस्यां[1] वसति येन सः ।**
**तत्राणाद्व्यञ्जनाच्चापि**
**स तत्पूरुषवक्त्रकः ॥ १०½ ॥**

तस्य तस्यामरनरादेर्या पूः पुरी तनुः तस्यां पुरि-यजमानस्वरूपतया अधिष्ठातृभावेनोषितस्तत्पुरुषः । तदुक्तं "स्वात्मैवायं वसति सकलप्राणिनामीश्वरोन्त"रिति तत्पुरुष इति। यस्माद्व्यनक्ति ज्ञानक्रिये त्रायते तज्जन्मादिभयात्ततः तत्पुरुषवक्त्रम् ।

"व्यञ्जनत्राणरूपत्वाद्वक्त्रमित्यभिधीयत" इति श्रुतेः ॥ १०½ ॥

वृत्तिः ।

अघोरहृदयं व्याचष्टे ।

**हृदयं बोधपर्याय-**
**स्सोऽस्याघोरश्शिवो यतः ।**
**परिग्रहस्य घोरत्वा-**
**द्घोरोक्तिरुपचारतः ॥ ११½ ॥**

---

१. मातृकासु तस्यामुषतीति पाठो विद्यते ।

हृदयमाशयो बोध इति पर्यायः। अघोरः शिवो बोधो[1] यस्माद्भगवतः तस्मादघोरहृदयः। ननु घोरमश्रेयोरूपं यदुच्यते तद्घोररूपता कथं देवस्येत्याह **परिग्रहस्य घोरत्वादिति** येयं परमेश्वरस्य घोररूपोक्तिः सा न वास्तवी। किंतु परिग्रहस्य स्वशक्त्युत्तेजितसामर्थ्यस्याशुद्धाध्वाधिकारिनिकुरुम्बस्य घोरत्वात्। घोरशक्तिर्देव उपचारादुच्यते। तथाचोक्तम्—

"विषयेष्वेव संलीनानधस्सम्पातयन्त्यणून्।
रुद्राणून् यास्समालिङ्ग्य घोरतर्योऽपरास्स्थिताः" ॥

इति ॥ ११½ ॥

वृत्तिः।

वामदेवगुह्यत्वमभिधत्ते।

**वामास्त्रिवर्गवामत्वात्**
**रहस्यश्च स्वभावतः।**
**वामं[2] धाम परं गुह्यं**
**यस्यासौ वामगुह्यकः ॥ १२½ ॥**

धर्मार्थकामलक्षणेन त्रिवर्गेण प्रलोभ्य वमति अधो निक्षिपतीति वामः। स्वभावेन रहस्यो गुह्यो भावः कथ्यते।

---

१. देवे घोरोक्तिरिति पाठभेदः।
२. वामं धाम च यस्यासौ देवस्तस्माद्वामगुह्यकः। इति पाठभेदः।

इत्थं पृथगनयोः पदयोरर्थं प्रदर्श्य विग्रहं करोति । वामं धामेति दिवेर्धातोर्द्युत्यर्थत्वात् देवशब्देन तेजोऽभिमतम् । तेन वाममधस्तनेऽध्वनि वमनशीलं यत्तेजस्तद्गुह्यमप्रकटमस्येति वामदेवगुह्यः परमेश्वरः ॥ १२½ ॥

वृत्तिः ।

सद्योजातमूर्तित्वं निरूपयति ।

**सद्योऽणूनां मूर्तयस्सम्भवन्ति**
**यस्येच्छातस्तेन सद्योऽभिधानः ।**
**सद्यो मूर्तीर्योगिनां वा विधत्ते**
**सद्योमूर्तिः कृत्यशैघ्रयान्न मूर्तेः ॥ १३½ ॥**

पत्युरिच्छया हि कर्मप्रक्षयाय क्षिप्रमेवात्मनां तास्ता-मूर्तयो जाता इति सद्योजातमूर्तिर्देवः । यद्वक्ष्यति दीक्षा-प्रकरणे—

"सद्येन जनयेत्सद्यो नानानिष्पन्नविग्रहम्" । इति ।

यद्वा योगिनां तत्तत्समाधिभाजां सद्यस्तत्क्षणं मूर्ती-र्विधत्ते । प्रोक्तवन्मन्त्रमयस्वमूर्तिसदृशीं तनुं सम्पादय-तीत्यचिरात्स्वसमाधिव्यञ्जकत्वात् सद्योमूर्तित्वम् । नतु शीघ्रसञ्जातस्वदेहत्वादित्यर्थः ॥ १३½ ॥

वृत्तिः ।

एतदेव दृढयति ।

**इत्थं शक्तिः कुर्वती देहकृत्यं**
**देहाभावादुच्यते देहशब्दैः ।**
**तस्या भेदा येऽपि वामादयस्स्यु-**
**स्तेऽपि प्रोक्ताः कृत्यभेदेन सद्भिः ॥ १४½ ॥**

परमार्थतः परमेश्वरस्याशरीरत्वात् शक्तिरेव देह-कार्यं कुर्वतीति देहाख्ययोक्ता तस्याश्चैकस्या अपि कृत्यभेदाद्वामादिभेदभिन्नत्वम् । यथा वह्निशक्तेर्दाह्यप्रकाश्यपाच्यार्थविषये दाहप्रकाशपाककरणात् गौणमनेकत्वम् । वस्तुत एकत्वात्तस्याः ॥ १४½ ॥

इति श्रीभट्टविद्याकण्ठात्मजभट्टनारायणकण्ठविरचितायां
मृगेन्द्रवृत्तौ तृतीयं पतिपदार्थसाधनं प्रकरणम् ॥

---

दीपिका ।

इत्थं शक्तिरित्यादिपूर्वार्धेन शरीरतयोक्ताया ईशानादिभेदभिन्नायाश्शक्तेरुपसंहार इत्याह परमार्थत इत्यादि उत्तरार्धेन तु करणरूपेण प्रागुक्ताया वामादिभेदभिन्नाया उपसंहार इत्याह । तस्याश्चेत्यादि कथं पुनरेकस्या एवानेकत्वमिति चेत् ज्ञेयकृत्यभेदेनोपचारादित्युक्तम् । एतदेव दृष्टान्तेन दृढयति यथेत्यादि ।

इति अघोरशिवाचार्यविरचितायां श्रीमन्मृगेन्द्रवृत्तिदीपिकायां
पतिपदार्थसाधन तृतीयं प्रकरणम् ।

---

## अथ चतुर्थं पतिस्वरूपनिरूपणं प्रकरणम् ।

वृत्तिः ।

तदेवमन्वयव्यतिरेकाभ्यां पतिपदार्थं प्रसाध्य तत्स्वरूपनिरूपणाय मूलसूत्रोपक्रान्तं सर्वकृत्पदं तावत्प्रपञ्चयितुं पटलान्तरमारभते । अस्य चानन्तरपटलसूचितकृत्यनिरूपणार्थत्वात् विद्यापादाख्यप्रकरणानुषङ्गाच्च पाटलिकप्राकरणिकौ सम्बन्धौ ज्ञेयौ । पदार्थादिसम्बन्धास्तु प्राग्वदनुसन्धेयाः ।

**स इत्थंविग्रहोऽनेन**
**करणेनाहतौजसा ।**
**करोति सर्वदा कृत्यं**
**यदा यदुपपद्यते ॥ १ ॥**

इत्थं इत्यनेनोक्तप्रकारेण मन्त्रात्मको विग्रहो यस्य स भगवानित्थंविग्रहः । अनेनेति "करणं च न शक्त्यन्य"दिति प्रागुक्तेन शक्त्यात्मनाऽप्रतिहतसामर्थ्येन करणेन स्थित्यादिकार्यजातं सार्वकालं सर्वं निर्वर्तयति । न परं युगपत्करोति । यावद्यदा यदुपपद्यते तत्तदा करोति

क्रमेणापि सर्वकार्याणि करोतीत्यर्थः । तदुक्तं प्राक् "क्रमाक्रमसमुत्पत्तेः क्रमाद्युत्पत्तिशक्तिमत्" । इति ॥ १ ॥

दीपिका ।

अथ चतुर्थे पतिस्वरूपनिरूपणं प्रकरणम् ।

"तदेवमित्यादिना "स इत्थंविग्रह इत्यादिप्रकरणं सम्बन्धयति । **पदार्थादिसम्बन्धास्त्वित्यादि** तत्र पदार्थसम्बन्धः पतिपदार्थतया । सौत्रश्च सर्वकृदिति पदेन । वाक्यात्मकस्तु "तद्वपुः पञ्चभिर्मन्त्रै पञ्चकृत्योपयोगिभि" रित्यादिभिरनेकविध । इत्थमित्यादिनेश्वरस्य सामान्यतः पञ्चविधकृत्यकारित्वमुच्यते इत्याह । **इत्थमित्यादि** । **सर्वं निर्वर्तयतीति** पञ्चविधमित्यर्थ **सर्वकार्याणीति** सृष्ट्यादीनि ॥ १ ॥

वृत्तिः ।

अथ प्रथमतः परमेश्वरः किंकरोतीत्याह ।

**तत्रादौ केवलाणूनां**
**योग्यानां कुरुतेष्टकम् ।**
**वामादिशक्तिभिर्युक्तं**
**सप्तकोटिपरिच्छदम् ॥ २ ॥**

**तत्रेति** एवं स्थिते सतीत्यर्थः । एकस्या एव शक्तेः वामादिकृत्यवशाद्वामादिभेदभिन्नत्वमित्युक्तम् । सा च शक्तिस्सर्वज्ञानाक्रियारूपा शिववत्सर्वाणूनां विद्यत एव ।

तेषां चानाद्यविद्यावरुद्धत्वाच्छिवानुग्रहं विना न तत्समाना भवन्तीति प्रक्षीणकार्ममायीयबन्धानां विज्ञानकेवलाना-मञ्जनपरिपाकाद्यनुसारेण तत्पदयोग्यानामष्टकं मन्त्रकोटि-सप्तकपरिवारं वामादिशक्तिनवकयुक्तं च करोति ॥ २ ॥

## दीपिका ।

तत्र सृष्टिक्रमं दर्शयितुं तत्रेत्यादिसूत्रमवतारयति । **अथेत्यादि एकस्या एवेत्यादि** यदुक्तं प्राक् — "विषयानियमादेकं बोधे कृत्ये च तत्तथा" इति । श्रीमत्पराख्येऽपि "तद्भेदः कृत्यभेदेन न भेदः परमार्थतः" इत्युपक्रम्य "वामा ज्येष्ठा च रौद्री च काळी कलविकरिणी परा । बलविकरिणी बलप्रमथिनी-दमनी च मनोन्मनी । वामयत्युद्धिरत्याशु यया सर्गं त्रिधा स्थितम् । साऽस्मिन् वामा समुद्दिष्टा" इत्यादि । **सा चेत्यादि** । तदुक्तं प्राक्— "चैतन्यं दृक्क्रियारूपं तदस्त्यात्मनि सर्वदा" इति । केवलाणूनामिति व्याचष्टे **प्रक्षीणेत्यादि** अत एवाऽऽगमसिद्धत्वाद्विज्ञानकेवलिनो न प्रतिक्षेप्याः । युक्तिसिद्धत्वाच्च । पशवः कर्ममायात्मकबन्धातीता[1] अपि केवलमलयुक्तास्सम्भवन्ति । तद्व्यतिरिक्तस्य मलस्य च बन्धत्वेनाभ्युपगमात् । यो यद्बन्धव्यतिरिक्तो येषां बन्धस्तदभावेऽपि तेषां बन्धस्सिद्धः । निगला-दिवदिति । नन्वियं सर्वज्ञत्वाभिव्यक्तिरनुग्रहविशेष एव । यद्वक्ष्यति "यान् विमोचयति स्वापे शिवास्सद्यो भवन्ति ते । संहृतौ वा समुद्भूतावणवः पतयोऽथवेति" । श्रीमन्मतङ्गेऽपि "मोक्षस्सप्तप्रकारोऽयम्" इति । सत्यम् । अत एव शुद्धाध्वोत्पादनपूर्वं विद्येश्वरादीनां तदुपादानशरीराद्युत्पादनमे-वाऽत्र सर्गत्वेनोच्यते न सर्वज्ञत्वाद्यभिव्यक्तिमात्रम् । एतदेवाह "**मन्त्रकोटि-**

---

१. मायात्मिका बन्धिता इति पाठभेदः ।

**सप्तकपरिवार**"मिति अमूर्तानामात्मनां व्यापकत्वेन परस्परं परिवृतत्वा-सम्भवात्तेषां वास्तवश्शरीरयोग इति। अत एवाऽऽगमसिद्धस्य विद्येश्वरा-दीनां शरीरस्य निराकरणायाऽत्र यः केनचित्प्रयोगः कृतः। विद्याविद्येश्वरा अपि न वास्तवशरीरयोगिनः। असर्वज्ञत्वप्रसङ्गात्। देवदत्तादिवदिति। स मायागर्भाधिकारिभिर्नैकान्तिकः। तेषां श्रीकण्ठादीनां सशरीरत्वेऽपि सर्वज्ञत्वस्योक्तत्वात्। यदुक्तं प्राक्---

मन्त्रेश्वराणामूर्ध्वाध्वस्थितेशोपमतेजसाम्"। इति। योगिभिश्चा-नेकान्तिकः। योगिनां च सशरीराणामेव सर्वज्ञत्वं श्रूयते यतः। असिद्ध-श्चायं हेतुः सशरीरत्वादिति। तथाविधशरीरस्य तत्रासम्भवात्। यदुक्तं किरणे---

"शुद्धयोनिमयं तस्य वपुरुक्तमकर्मजम्" इति। **वामादिशक्ति-नवकयुक्तं** इति वामादिशक्तियोगात्पञ्चविधकृत्यकरणक्षममित्यर्थः। अत एव विद्येश्वराणां पञ्चविधकृत्यकारित्वं मन्त्राणामनुग्रहकरणत्वमिति भेदः॥२॥

**वृत्तिः।**

अथैतेषामपि सप्तकोटिसंख्यातानां मन्त्राणामन-न्तेशादय एवाष्टावीशितार इति वक्तुमारभते॥

**तेषामनन्तस्सूक्ष्मश्च**
**तथाचैव शिवोत्तमः।**
**एकनेत्रैकरुद्रौ च**
**त्रिमूर्तिश्चामितद्युतिः॥३॥**

---

१. अत्र अनुमानप्रयोगस्त्वीदृशः। विद्याविद्येश्वराः वास्तवशरीरयोगाभाव-वन्तः। सर्वज्ञत्वात्। शरीरवति देवदत्ते सर्वज्ञत्वाभावस्य विद्यमानत्वात् व्यतिरेक-दृष्टान्तोऽयं देवदत्तः॥

२ भिर्नानैकान्तिक इति पाठभेदः।

**श्रीकण्ठश्च शिखण्डी च**
**राजराजेश्वरेश्वराः ।**
**ईषदप्राप्तयोगित्वात्**
**नियोज्याः परमेष्ठिनः ॥ ४ ॥**

राजानो लोकेशा इन्द्रादयः तेषां राजानश्शतरुद्राः तदीश्वराणां मण्डलिप्रभृतीनामप्येते ईश्वराः प्रभवः। विद्या-महेश्वरा इति यावत्। एते च **ईषदप्राप्तयोगित्वादिति** अधिकारमलांशावशेषात्किञ्चिदनवाप्तपरमेश्वरसाम्या इत्यस्य एते प्रेर्याः ॥ ३-४ ॥

दीपिका ।

एतदेव प्रकटयितुं उत्तरसूत्रे तेषामिति पदं ईश्वरपदाध्याहारेण व्याख्येयमित्याशङ्कापरिहारमवतारिकाव्याजेनाह **अथैतेषामपीत्यादि** न परमेते मन्त्रेश्वराणां महेश्वराः यावन्मण्डल्यादीनामपीत्याह **राजान इत्यादि** ननु पञ्चविधकृत्यकारित्वात्किमेते शिवसमाः। नेत्याह। **एते चेति** ॥ ३-४ ।

वृत्तिः ।

अथैषामष्टानामपि सर्वज्ञत्वसर्वकर्तृत्वसम्भवात् किं-स्विदभिन्नरूपत्वमुत कश्चिद्विशेष इत्याह ।

**सर्वज्ञत्वादियोगेऽपि**
**नियोज्यत्वं मलांशतः ।**

१. विद्येश्वरा महेश्वरा इति पाठः ।

**परस्परं विशिष्यन्ते**
**मन्त्राश्चैवमधस्स्थिताः ॥ ५ ॥**

यद्यपि सर्वे सर्वार्थदृक्क्रियाः तथाप्येकैकस्य स्वस्वाधोवर्तिनो नियोज्या इति प्रेर्यतालक्षणमलांशावशेषादधोऽवस्थितानामेषामूर्ध्वस्थमपेक्ष्य कलया कर्तृत्वस्य न्यूनत्वमिति परस्परविशेषः । तदुक्तम् —

"योहि यस्माद्गुणोत्कृष्टस्सतस्मादूर्ध्वमिष्यते" इति । न केवलमेत एव विशिष्यन्ते यावत्तदधोवर्तिनो मन्त्रा अप्येवमेव परस्परविशेषभाजः ॥ ५ ॥

दीपिका ।

कलया कर्तृत्वस्य न्यूनत्वमिति । सर्वज्ञत्वं तु तेषां समानमिति भावः । तदधोवर्तिन इति । विद्येश्वरसृष्ट्यनन्तरं मन्त्रसृष्टिरिति भावः ॥५॥

वृत्तिः ।

तानेव मन्त्रान् विशिनष्टि ।

**ते च मन्त्रेश्वरव्यक्त-**
**शिवशक्तिप्रचोदिताः ।**
**कुर्वन्त्यनुग्रहं पुंसां**
**यदा येषां स युज्यते ॥ ६ ॥**

ते च मन्त्राः परापरमन्त्रेश्वरव्यक्तया शिवशक्त्या व्यापारिताः योग्यतानुरूपेण कदाचित्केषांचिदनुग्रहं कुर्वन्ति । न तु योग्यतानपेक्षम् । अतिप्रसङ्गात् ॥ ६ ॥

दीपिका ।

केषाञ्चिदित्यादि अनुग्रहं प्रति करणत्वं प्रयान्तीत्यर्थः ॥ ६ ॥

वृत्तिः ।

**प्रयोक्तृदेहसापेक्षं**
**तदर्धमखिलेऽध्वनि ।**
**कृत्वाधिकारं स्थित्यन्ते**
**शिवं विशति सेश्वरम् ॥ ७ ॥**

**विनाधिकरणे नान्यत्**
**प्रधान विकृते रधः ।**
**कृत्वाधिकारमीशेष्ट**
**मपैति स्वाध्वसंहृतौ ॥ ८ ॥**

तेषां सप्तकोटिसंख्यातानां मन्त्राणामर्धं प्रयोक्तृणामनुग्रहकर्तॄणां देहं शरीरमाश्रयत्वेनापेक्षमाणमीशमपेक्षत इति । तत्सापेक्षमाचार्याधिकरणेश्वरापेक्षम् । **अखिले** मायीयेऽध्वनि स्वमधिकारमनुग्राह्यानुग्रहलक्षणं

निर्वर्त्य स्थितिकालस्यान्ते मायेयस्याध्वनोऽप्युपरमसमये **सेश्वरमिति** मन्त्रेश्वरैस्सहितं शिवसायुज्यं गच्छति। अथ प्रथमस्यार्धस्य का वार्तेत्याह **विनाधिकरणेनेति** **अन्यत्** अपरमर्धम्। **ईशेष्टमिति** यत्र यत्र परमेश्वरस्यानुग्रहेच्छा तत्र तत्र तदिच्छयैव **विनाधि करणेनेति** आचार्यलक्षणमधिकरणमनपेक्ष्यैव। प्रधाना चासौ विकृतिश्चेति **प्रधानविकृतिः** शुद्धविद्या। अस्या अधः सर्वत्र मायीये चाध्वनि समधिकारं कृत्वा स्वस्वाध्वनोऽनुग्रहमार्गस्य **संहृतौ** समाप्तौ **अपैति** अपवृज्यते। तदुक्तं तत्रभवद्भिस्सद्योज्योतिपादैः। "जगति कृते तत्रार्धं मन्त्राणां शिवसमाहृतान् पुंसः। अनुगृह्य याति हि विना देशिकमूर्तिं प्रयुक्तमीशेन" इति।[1] ८॥

दीपिका।

एतदेव प्रपञ्चयितुमुत्तरसूत्रद्वयं व्याचष्टे। तेषामित्यादि अयमर्थः। तेषां सप्तकोटिसंख्यातानां मन्त्राणां मध्ये ये परिणतमलाः सार्धकोटित्रयसंख्याताः ते सृष्टिकालावसाने स्वकारणानन्तानुज्ञयैव विमुक्ता भवन्ति। इतरे तु महाप्रलय इति। यथोक्तं मतङ्गे—

"तेतस्स्वाचारवर्तिन्यो भर्तुराज्ञानुपालिकाः।
स्थितास्त्वर्धेन सेनाया गताश्शिष्टाः परस्परम्॥ सम्प्रधार्ये"[2]ति॥८॥

वृत्तिः।

इत्थं मन्त्रानुक्त्वा मन्त्रेश्वरान् वक्तुमाह।

---

१. अष्टप्रकरणान्तर्गत तत्वसंग्रहस्थः ३३-तमश्श्लोकः।
२. विद्यातत्वपदलस्थः १४-तमश्श्लोकः।

**ततोऽनन्ताद्यभिव्यक्तः**
**पतीना ग्रन्थितत्वतः ।**
**कलाद्यारब्धदेहाना**
**करोत्यष्टादशं शतं ॥ ९ ॥**

"तच्च सात्मकमाक्रम्य विश्वमायावतिष्ठते" इत्यन्तविश्रान्ताणुसङ्घातं मायातत्वं वक्ष्यमाणं तस्माद्ग्रन्थितत्वतः तद्गर्भाधिकारिणां कलाद्यारब्धशरीराणां मण्डल्यादीनां[1] पतीनामष्टादशाधिकं शतमनन्ताद्यभिव्यक्तः परमेश्वरः करोति कलाद्यारब्धदेहत्वमेषां करोतीत्यर्थः। ननु च "अष्टादशाधिकं चान्यच्छतं मायाधिकारिणाम्। विद्येश्वराणा" मित्यादिना साक्षात्परमेश्वरानुगृहीतत्वमेषामुक्तम्। इह त्वनन्ताद्यभिव्यक्तस्य भगवतः तत्कारणत्वमुच्यत इति विरोधः। नैवम्। यतोऽनन्तादीनामेव कलादियोगकरणे कर्तृत्वम्। न तु परमेश्वरस्य। "शुद्धेध्वनि शिवः कर्ता प्रोक्तोऽनन्तोऽसिते प्रभुः" इतिश्रुतेः। स तु कलादियोगिनो भोगभुजस्तान् साक्षादनुगृह्णातीति न कश्चिद्दोषः ॥ ९ ॥

दीपिका ।

इत्थं शुद्धाध्वविषयां साक्षाच्छिवसृष्टिमुक्त्वाऽनन्तादिद्वारामशुद्धाध्वविषयां तत्सृष्टिं वक्तुं तत इत्यादिसूत्रमवतारयति । **इत्थमित्यादि**

1 कलामस्तकस्था मण्डलिनोष्टौ । गुणतत्वस्थश्श्रीकण्ठ एकः । क्रोधादयो गुणमस्तकस्थाः ब्रह्माण्डाधारका रुद्राश्शतम् । शतरुद्राधिष्ठाता वीरभद्र एकः । आहत्य अष्टादशाधिकशतं भवति ।

तस्माद्ग्रन्थितत्वत इत्यादि वक्ष्यमाणनयेन मलपरिपाकतारतम्यवशात् प्रळयाकलेषु मध्ये येषां परमन्त्रेश्वरपदाधिकारः तेषामनन्ताधिष्ठानेन तत्सृष्टिपुरस्सरं कलादिशरीरयोगं करोतीति। यतोऽनन्तादीनामिति परमेश्वरात्साक्षात्तेषां सर्वज्ञत्वाद्यभिव्यक्तिः कलादिशरीरयोगित्वं तु अनन्ताधिष्ठानेनेत्यर्थः। स तु कलादियोगिन इत्यादि ननु सकलत्वाद्भोक्तृत्वाच्चैषामस्मदादिसादृश्यप्रसङ्गः। तन्न अधिकारनिबन्धनयोश्शरीरभोगयोरावश्यकत्वात्। परमेश्वरेण प्रकटीकृतदृक्क्रियत्वाच्च। यदुक्तम्। "कलायोगेऽपि नो वश्याः कलानां पशुसङ्घवत्" इति ॥ ९ ॥

वृत्तिः।

तेऽप्यन्येषां विनियोक्तार इत्याह।

**तानप्याविश्य भगवान्**
**सांजनान् भुवनाधिपान्।**
**येभ्यस्सर्वमिदं येषां**
**शक्तिः कर्मनिबन्धना ॥ १० ॥**

तानपि मण्डलिप्रभृतीनष्टावधिष्ठाय परमेश्वरोन्यानपि ब्रह्मप्रभृतीन् समलान् भुवनेशान् उत्तेजितदृक्क्रियाशक्तीन् करोतीति पूर्वेणैव सम्बन्धः। किंविधानित्याह **येभ्यस्सर्वमिदमिति** येभ्यस्सर्वमिदं जगत् स्थावरजङ्गमलक्षणमाविर्भवतीति शेषः। **येषां शक्तिः कर्मनिबन्धनेति** कार्मः पाशो येषामुपरोधकत्वात् न निवृत्तः सकलानामेवैषां परमेश्वरादनुग्रहो यतः ॥ १० ॥

---

१. अष्टप्रकरणे मोक्षकारिकायां ८३-तमः।

दीपिका ।

**ब्रह्मप्रभृतीन् समलानिति** यदुक्तम् "अन्ये प्राधानिका मन्त्रा ब्रह्मविष्ण्वादयः पराः । साञ्जनास्तेऽण्डमध्यस्था" इत्यादि । **उत्तेजितदृक्क्रियाशक्तीनिति** स्वस्वाध्वपर्यन्त एव । एतदेवोत्तरार्धेन प्रोच्यत इत्याशङ्कापूर्वकं व्याचष्टे **किंविधानित्यादि** । **स्थावरजङ्गमलक्षणामिति** चतुर्दशविधभूतसर्गात्मकमित्यर्थः । यदाहुस्सांख्याः । "अष्टविकल्पो दैवस्तिर्यग्योनिश्च पञ्चधा भवति । मानुष्यश्चैकविधस्समासतो भौतिकस्सर्गः" । इति । कर्मपारतन्त्र्याच्च स्वाध्वावधिकमेव तेषामैश्वर्यमित्याह **कार्मः पाश इत्यादि** ॥ १० ॥

वृत्तिः ।

न परमेतानेव करोति । किन्तु ।

**प्रणेतॄन् पशुशास्त्राणां**
**पशूंस्तदनुवर्तकान् ।**
**स्वसाध्यकारकोपेतान्**
**कालधामावधिस्थितान् ॥ ११ ॥**

पशुशास्त्राणामार्हतसांख्यपाञ्चरात्रादीनां प्रणेतॄनर्हन् कपिलप्रभृतीन् तदधिष्ठातॄंश्च[1] पशून् स्वसाध्येन तत्तच्छास्त्रोपदिष्टेन फलेन तत्साधनहेतुभिः कारकैश्च युक्तान् कालाग्निभुवनान्तं यावत्करोतीति पूर्वेणैव सम्बन्धः ॥११॥

---

१. ते अधिष्ठातारः येषामित्यर्थः ।

दीपिका ।

कालाग्निभुवनान्तं यावत्करोतीति परम्परया ईश्वर एव विश्वं सृजतीति ॥ ११ ॥

वृत्तिः ।

अथैतान् सृष्ट्वा देवः किङ्करोतीत्याह ।

**स्थितौ सकारकानेतान्**
**समाक्रम्य स्वतेजसा ।**
**युनक्ति स्वार्थसिद्ध्यर्थं**
**भूतैरनभिलक्षितः ॥ १२ ॥**

एतान् कारकैर्भोगसाधनैस्तत्वभावभुवनादिभि र्युक्तान् स्वतेजसा निजेच्छाशक्त्या सम्यगधिष्ठाय **स्वार्थसिद्ध्यर्थ-मिति** स्वस्य आत्मीयस्य व्यापारस्य सम्पत्तये। यद्वा स्वैरा-त्मभिरर्थ्यंत इत्यर्थः भोगापवर्गलक्षणः पुरुषार्थः तस्य निष्पत्त्यर्थं नियोजयति। न तु उन्मत्तवत्। नाप्यप्रयो-जनम्। प्रयोजनानुद्देशेन मन्दस्याप्यप्रवृत्तेः। न च क्री-डार्थम्। रागादिविरहिणस्तदसम्भवात्। नाप्यात्मनि-मित्तम्। परिपूर्णत्वात्। भूतैः प्राणिभिरविद्यावशादविदि-ततत्क्रियः॥ १२ ॥

इत्थं सृष्टिमुक्त्वा "स्थितिं वक्तुं स्थितौ सकारकाणि"त्यादिसूत्रमवतारयति। अथेत्यादि एतानिति भोक्तॄनात्मनः। स्वार्थसिद्ध्यर्थमिति पदं तत्वादिविषयतया व्याचष्टे स्वस्येति अचेतनानां चेतनानाधिष्ठितानां न प्रवृत्तिरित्युक्तम्। भोक्तृविषयतया चान्यथा व्याचष्टे यद्वेत्यादि भोगोऽपि पुरुषार्थं न स्वतः प्रवर्तते। अमूर्तत्वात् द्रव्यवदित्यर्थः। पुरुषश्चास्वतन्त्रत्वान्न स्वयं भोगार्थं प्रवर्तत इत्युक्तम्। न तु स्वस्य सर्गादिव्यापारस्य प्रयोजनस्य वा सम्पत्त्यर्थ मिति व्याख्येयमित्याह नाप्यात्मनिमित्तमित्यादि ॥ १२ ॥

वृत्तिः ।

तदियता सृष्टिस्थिती उक्त्वा संहारं वक्तुमाह—

**भोगसाधनमाक्षिप्य**
**कृत्वा कारणसंश्रयम् ।**
**तच्च सात्मकमाक्रम्य**
**विश्रमायावतिष्ठते ॥ १३ ॥**

**भविनां भवखिन्नानाम् ।**
**सर्वभूतहितो यतः ॥ १३½ ॥**

स्थित्यन्ते भोगसाधनं तनुकरणभुवनाद्युपसंहृत्य कारणे मायाख्ये लीनं कृत्वा तच्च मायाख्यं कारणमन्तर्निहितात्मव्रातमधिष्ठाय संसारिणां भवाध्वभ्रमणश्रान्तानां विश्रमार्थं अवतिष्ठते। निरुद्धव्यापारांस्तान् करोती-

त्यर्थः । कुत इत्याह सर्वभूतहितो यतः इति यस्मात्सर्वेषां भूतानां हिताय प्रवृत्तः परमेश्वरः खेदापनोदाय विश्रान्तिं स्वापलक्षणामेषां करोति ॥ १३½ ॥

दीपिका ।

भोगसाधनमित्यादिना संहारः प्रोच्यत इत्याह तदियतेत्यादि ॥ १३½ ॥

वृत्तिः ।

ततस्तु ।

स्वापावसानमासाद्य
पुनः प्राग्वत्प्रवर्तते ॥ १४ ॥

वक्ष्यमाणकालपरिमाणस्य स्वापस्यान्ते भूयः पूर्ववदहर्मुखे परमेश्वरश्चेष्टते ॥ १४ ॥

वृत्तिः ।

तत्स्वापेऽपि क्रियादिशक्तयस्तत्तत्कार्यनिष्पादनोद्युक्ता भवन्तीत्याह ॥

स्वापेऽप्यास्ते बोधयन् बोधयोग्यान्
रोध्यान् रुन्धन् पाचयन् कर्मिकर्म ।
मायाशक्तीर्व्यक्तियोग्याः प्रकुर्वन्
पश्यन् सर्वं यद्यथा वस्तुजातम् ॥ १५ ॥

जाग्रदवस्थायामिव स्वापावस्थायामपि मलपरिपाक तारतम्यापेक्षया प्रबोधनार्हान् प्रबोधयन् रोधनार्हान् रोधशक्त्या निरुन्धन् कर्मिणां कर्माणि पाचयन् परिणामयन् मायाशक्तीश्च प्रसवाभिमुखीः कुर्वन् सर्वं चिदचित्तत्वभावभूतभुवनात्मकं यथावदवलोकयन्नास्ते । यद्यथेति न त्वस्मदादिवदयथावस्थितवस्तुस्वभावोऽप्यस्य भवतीति वक्ष्यामः । तदियता जगत्सृष्टिस्थितिध्वंसलक्षणं कृत्यत्रयमिहोक्तमिति प्रकरणोपसंहारः ।

इति भट्टविद्याकण्ठात्मजश्रीभट्टनारायणकण्ठविरचितायां
मृगेन्द्रवृत्तौ तुरीयं प्रकरणम् ।

---

## दीपिका ।

नन्वात्मव्रातवत्स्वापे काले परमेश्वरोऽपि निर्व्यापार एवेत्येतत्परिहारार्थं "स्वापेप्यास्ते" इत्यादिसूत्रमित्याह । तत्स्वापेपीत्यादि कथं पुनरीश्वरस्य लयभोगाधिकारभेदः । बिन्द्ववस्थाविशेषाधिष्ठानेनोपचारादिति ब्रूमः । यदुक्तम् "अधिकारी स भोगी च लयी स्यादुपचारतः" । इति । अत एव निवृत्त्यादिभुवनाधिष्ठानात् उपचारेणेश्वरस्यैव निवृत्तिमत्वादिव्यवहार इति वक्ष्यति । "निवृत्तिरिति तत्स्थानं तत्रेशोऽपि निवृत्तिमान्" इत्यादिनेत्यविरोधः । दीक्षादिना तत्तत्पदप्राप्तानां आत्मनां तु भेदो वास्तव एवेत्युक्तं स्वायम्भुवे "यो यत्राभिलषेद्भोगान् स तत्रैव नियोजितः । सिद्धिभाङ्मन्त्रसामर्थ्यादिति । रोधार्हान् रोधशक्त्या रुन्धन्निति ननु रोधो नाम तिरोभावः यथोचितभोगादप्रच्यवनमित्युक्तम् । संहारावस्थायां च

रोधाभाव एव। तत्कथं रोध्यान् रुन्धन्निति। नैष दोषः। रोधनार्हान् विश्रमणेन रोधयोग्यान् कुर्वन्नित्यत्रार्थः। मायाशक्तीश्चेति मायास्थाः कार्यशक्तीरित्यर्थः। अत्रैव प्रकरणोपसंहारे हेतुमाह तदियतेत्यादि लोकप्रसिद्धं तावत्सृष्ट्यादिकृत्यत्रयमिहोक्तम्। शास्त्रसिद्धं तु कृत्यद्वयं प्रकरणान्तरे प्रदर्श्यत इति भावः।

इत्यघोरशिवाचार्यविरचितायां मृगेन्द्रवृत्तिदीपिकायां
पतिकृत्यत्रयनिर्णयप्रकरणं चतुर्थं समाप्तम्।

---

## पञ्चकृत्यप्रकरणं पञ्चमम्।

अथ मूलसूत्रोपात्तसर्वकृत्पदाक्षिप्तपतिपदार्थस्य अनुग्रहतिरोभावाख्यं कर्मद्वयमवशिष्टमभिधातुं प्रकरणान्तरम्। अत्र च सौत्रपादार्थिकसबन्धौ स्पष्टौ। प्राकरणिकस्तु विद्यापादाख्येन प्रकरणेन ज्ञेयः। वाक्यात्मकोऽपि "जगत्सृष्टिस्थितिध्वंसतिरोभावविमुक्तयः। कृत्य"मित्यादिभिर्वाक्यैः। पाटलिकः पुनः "बोधयन् बोधयोग्यानि"ति पूर्वपटल एवोपक्रान्तः।

**तमश्शक्त्यधिकारस्य**
**निवृत्तेस्तत्परिच्युतौ।**
**व्यनक्ति दृक्क्रियाऽनन्त्यं**
**जगद्बन्धुरणोश्शिवः॥ १॥**

---

१. अप्रसिद्धं तु इति पाठभेदः।

**तमश्शक्त्येत्यादि** तमसो मलस्य शक्तेश्च भगवतस्संबन्धिन्या वामाख्याया यो वाऽधिकारो न्यग्भावनमावृतित्वं तस्य निवृत्तेर्विरामाद्यासौ परिच्युतिः कैवल्याभिमुखीभावः। तथाचोक्तं श्रीमत्स्वायम्भुवे "क्षीणे तस्मिन् यया सा स्यात् परं निश्श्रेयसं प्रति"। इति। अस्यां तत्परिच्युतौ सत्यां जगदुद्धरणप्रवणः परमेश्वरः दृक्क्रियानन्त्यमणोरात्मनः प्रकटीकरोति। सत्योरेवानन्तयोर्दृक्क्रिययोर्मलावच्छिन्नत्वादावृतानन्त्ययोस्तत्परिणतेरावरणापगमादभिव्यक्तिः क्रियते नतु अपूर्वोत्पाद इत्युक्तम्। वक्ष्यामश्च सत्कार्यवादे ॥ १ ॥

## दीपिका ।

### अथ पञ्चकृत्यप्रकरणम् ।

तमश्शक्त्यधिकारस्येत्यादिप्रकरणमवतारयति **अथेत्यादि**। ननु सर्वज्ञस्सर्वकर्तृत्वादित्यादिना पत्युस्सर्वज्ञत्वमप्यनेन प्रकरणेनाभिधास्यते। तत्कथं कृत्यद्वयमभिधातुमित्युच्यते। प्रथमभावित्वादुपलक्षणत्वेनोक्तमित्यदोषः। अत एव पञ्चविधस्सम्बन्धोप्यत्रोपलक्षणत्वेनोक्तो ज्ञेयः। तथा "पाचयन् कर्मिकर्मे"त्यादीनां पूर्वं पटलान्तसूचितानां कर्मपाकादीनां अनुग्रहतिरोभावार्थत्वात् तत्प्रतिपादकानां सूत्राणां पृथक् सम्बन्धोपयोगः। सर्वज्ञत्वप्रतिपादकानां तु सूत्राणां सम्बन्धः कथ्यते। तत्र प्राकरणिकपादार्थिकौ सम्बन्धौ प्रोक्तवदेव। सौत्रस्तु सर्वविदिति पदेन। वाक्यात्मकोऽपि "ज्ञेयमस्मै तदेव हि" इत्यादिभिरनेकविधः। पाटलिकश्च "पश्यन् सर्वं" इत्यनेन सूचितः। तत्र रोधस्य तिरो-

भावात्मनो भोगभोजनरूपत्वेनोक्तत्वात् तच्च सृष्ट्यादिकरणेनार्थ-सिद्धमिति सूत्रकारेण न पृथक् प्रतिपादितम्। अनुग्रहस्तु "तमश्शक्त्य-धिकारस्ये"त्यादिना प्रोक्त इत्याह। तमश्शक्त्यादीति तत्परिच्युताविल्ये-तत्पदं अणुसम्बन्धितया व्याख्येयमित्याह यासावित्यादि तस्मान्मलाधि-कारादिति शेषः। परिच्युतिश्चात्र तत्परिजिहीर्षयैवेत्याह कैवल्याभिमुखी-भाव इति। अस्यामित्यादि अत एव भक्तिश्रद्धादिभिर्लिङ्गैश्च शक्तिपात-निश्चयानन्तरमेवाऽऽचार्यैरस्य दीक्षा कर्तव्येति। अणोरिति पदं जातावेक-वचनम् ॥ १ ॥

वृत्तिः।

**यान् विमोचयति स्वापे**
**शिवास्सद्यो भवन्ति ते।**
**संहृतौ वा समुद्भूता-**
**वणवः पतयोऽथवा ॥ २ ॥**

स्वापावस्थितान्यान् परमेश्वरोऽनुगृह्णाति ते तु तत्काल एव शिवास्सम्पद्यन्ते। न त्वधिकारिणो भव-न्ति। तेषां मलांशावशेषतः प्रेर्यत्वेन शिवत्वायोगात्। तदानीं चाधिकारिणामनुपयोगात्। किंच संहारे सृष्टौ वा यान् विमोचयति तेऽपि सद्य एव शिवास्सम्पद्यन्ते। न व्यतिरेकेण। अथवेति अनयोस्सृष्टिसंहारकालयोरञ्जन-

परिपाकवैलक्षण्यतः तत्क्षणं शिवत्वव्यक्त्या निरधिकार-मुक्तिभाजस्साधिकाराः पतित्वयोगिनो वाऽऽत्मानो भवन्ति इत्यर्थः । तत्र संहारे येषामधिकारवान्[1]नुग्रहः ते तदानीं रुद्राणवः । सृष्टौ त्वधिकारिणो भवितारः । सर्गारम्भे तु साधिकारानुग्रहानुगृहीताः पतय इति परापरविद्येश्वराद्य-धिकारभाजो भवन्तीति । अथ सृष्टिसंहारकालयोरश्रुतमपि कथमनुग्राह्याणां शिवत्वं लभ्यत इति चेत् लभ्यत एव मलपरिपाकस्य परमेश्वरानुग्रहस्य चानियतकालत्वात् ॥२॥

दीपिका ।

तेषामिति अधिकारिणामित्यर्थः । न व्यतिरेकेणेति । निर्विघ्नमि-त्यर्थः । अयं चानुग्रहो निरधिकरणेन भगवता क्रियते ॥ २ ॥

वृत्तिः ।

अथैवं सर्गसंहारस्वापकालेष्वनुगृहीतानां मुक्ति-विशेषमुक्त्वा स्थितिकालानुगृहीतानां तद्विशेषमाह ।

**रुद्रमन्त्रपतीशान-**
**पदभाजो भवन्ति ते ।**
**स्थितौ याननुगृह्णाति**
**गुरुमास्थाय चिद्रतः ॥ ३ ॥**

---

१. अधिकारपदानुग्रहः इति पाठभेदः ।

**गुर्वधिकरणः** परमेश्वरस्स्थितिकाले **च्चिद्गत इति** तदनुध्यानवशात्परापरनिश्श्रेयसविषयया प्रशस्यया चिता युक्तान् यानणूननुगृह्णाति ते मन्दतीव्रादिशक्तिसम्पात-वैलक्षण्यात् पञ्चाष्टकादिरुद्राणां सप्तकोटिसंख्यातानां मन्त्राणां तत्पतीनां च विद्येश्वराणामीशानस्य चेश्वरसदा-शिवशान्तलक्षणस्य सम्बन्धि पदं भजन्त इति तत्पदभाजः तत्सालोक्यादिपदयोगिनो भवन्ति इत्यर्थः ॥ ३ ॥

दीपिका ।

स्थितिकालेऽपि साधिकरणेनापीत्याह **गुर्वधिकरण** इत्यादि **तत्प-तीनां च विद्येश्वराणामिति** अपरमन्त्रेश्वराणाम् । नत्वनन्तादीनां तत् "द्वयोर्व्यतिकर" इत्यादिनैतत्पदप्राप्तानां च्युतिसम्भवस्य वक्ष्यमाणत्वात् । अनन्तादिपदप्राप्तानां च न च्युतिस्सम्भवति । मायोत्तीर्णत्वेन कर्माद्यसम्भ-वात् । उक्तञ्च रौरवे "भुक्त्वा भोगान् सुचिरममरस्त्रीनिकायैरुपेतास्स्वस्तो-त्कण्ठाश्शिवपदपरैश्वर्यभाजो भवन्ति" इति । अत एव **ईश्वरसदाशिवशा-न्तलक्षणस्येति** ईश्वरशब्दस्यानन्तवाचिनो विद्येश्वरपदलक्षणत्वात् तेषां सदाशिवादिभुवनाधिष्ठानकृत्ययावस्थस्य[1] परमेश्वरस्येत्यर्थः ॥ ३ ॥

वृत्तिः ।

ननु शक्तिपातविशेषात् तत्पदभाजश्चेत् तर्हि तद्वि-शेषः कथं ज्ञेय इत्याह ।

---

१ धिष्ठातुर्लयावस्थस्येति पाठभेदः ।

येषां शरीरिणां शक्तिः
पतत्यविनिवृत्तये ।
तेषां तल्लिङ्गमौत्सुक्यं
मुक्तौ द्वेषो भवस्थितौ ॥ ४ ॥

भक्तिश्च शिवभक्तेषु
श्रद्धा तच्छासके विधौ ।
अनेनानुमितिश्शिष्ट-
हेतोस्स्थूलधियामपि ॥ ५ ॥

अशरीरिणां तावद्गुरुभिश्शक्तिपातस्य दुर्लक्ष्यत्वात् शरीरवतां येषां पारमेश्वरीशक्तिरपुनराविर्भावाय पतति, तेषां तत्पाते मुक्त्युत्कण्ठा संसारे द्वेषः परमेश्वरभक्तिपरेषु भक्तिः तच्छासके शास्त्रे श्रद्धा चेति लिङ्गं चिह्नं अनेनैव चिह्नेन प्रकर्षवताऽवशिष्टस्य संसारस्थितिहेतोः पाशजालस्यासूक्ष्म बुद्धीनामप्यनुमानम् । पूर्वोक्तानां च चिह्नानामेव मन्दत्वे सति पशोः पाशशैथिल्यमान्द्यं मन्दमतयोऽप्यनुमिन्वन्ती-ति भावः ॥ ४-५ ॥

दीपिका ।

येषामित्यादिसूत्रमवतारयति नन्वित्यादि प्रसङ्गादनुग्रहशेषशाक्तपात-लिङ्गानि प्रदश्यन्त इत्यर्थः ॥ ४-५ ॥

वृत्तिः ।

ननु किमनेनात्यन्तापूर्वेण शक्तिपातनिश्चयेन । सकलदर्शनप्रसिद्धं तावदिदं कैवल्यप्राप्तिकारणं लिङ्गत्वेन किं न निश्चीयते । यदुक्तं "न हृष्यत्युपकारेण नापकारेण कुप्यति । यस्समस्सर्वभूतेषु जीवन्मुक्तस्स इष्यते" । इति तत्राह ।

**पशुदृग्योगसिद्धानां**
**कर्मव्यक्तिद्वयं समम् ।**
**ज्येष्ठादिफलयोग्यानां**
**साधिकारासु मुक्तिषु ॥ ६ ॥**

**उपायादरवैशिष्ट्या-**
**न्मृग्यते तत्रयं पुनः ।**
**द्वयोर्व्यतिकरः कश्चि-**
**च्च्युतिसिद्धिविलक्षितः ॥ ७ ॥**

पशुदृग्भिः पाशवैर्ज्ञानैस्तदुक्तेन च कपिलपतञ्जलिप्रभृतिप्रणीतेन योगेन ये सिद्धाः सत्वगुणप्रसादान्माध्यस्थ्यं प्राप्तास्तेषां यत्कर्मभ्यामुपकारापकाररूपाभ्यां चेष्टाभ्यां प्रसादक्रोधलक्षणं व्यक्तिद्वयं सममिति नापकारिणि

१. इदमिति । उपकारापकारयोर्हर्षविषादाभाव इत्यर्थः ।

क्रोधव्यक्तिः । नाप्युपकारिणि प्रीतिव्यक्तिः । माध्यस्थ्या-देवैतद्भवतु । नास्माभिर्निषिध्यते । इह पुनरयं विशेषः यदधिकारवतीषु मुक्तिषु विषये उपायस्य दीक्षादेः "लोक-धर्ममयी दीक्षा शिवधर्ममयी तथा" इत्यादिना वक्ष्यमाणा-द्वैशिष्ट्यादादरस्य च तत्तत्पदप्राप्तिप्रीतिश्रद्धात्मनो वैलक्ष-ण्यात् । यथोक्तं श्रीमत्सूक्ष्मस्वायम्भुवे "यो यत्राभिलषेद्भो-गान् स तत्रैव नियोजितः । सिद्धिभाङ्मन्त्रसामर्थ्यादि"ति । तस्मादुपायादरवैलक्षण्यान्मन्त्रमहेश्वरादिपदप्राप्तिलक्षणज्ये-ष्ठफलयोग्यतां मन्त्रेश्वरपदप्राप्त्यात्मकमध्यफलार्हत्वं पञ्चा-ष्टकाद्यपराधिकारिपदयोजनायोग्यतां च निश्चेतुं कर्मव्य-क्तित्रयं मृग्यते अन्विष्यते । भक्तिश्रद्धाभिव्यक्तितारतम्या-दुत्कृष्टमध्यमापकृष्टरूपसाधिकारापवर्गपदभाज इत्यनुग्रा-ह्या भवन्तीत्याशयः । यच्चैतत्साधिकारमुक्तित्रयं दर्शितम् । ततः । द्वयोर्व्यतिकर इति मध्यमापकृष्टयोर्मुक्त्योरुपर्य-धोवर्तिनः पदस्य प्राप्यतया स्वस्मात्पदात् च्युतिसम्भवेन सिद्ध्यतिशयसम्भवेन च कश्चिद्व्यतिकरोऽन्तरायः । न त्वनन्तरमेवापवर्गस्य प्राप्तिः तृतीयस्यां तु तत्पदाधि-कार्यधिकारसमाप्तिसमनन्तरेणैव तल्लाभः ॥ ६-७ ॥

## दीपिका ।

पशुद्वगित्यादि सूत्रमवतारयितुं मतान्तरेण चोदयति । नन्वित्यादि-तत्रयमिति तच्छब्देन कर्मव्यक्तिः परामृश्यत इत्याह **कर्मव्यक्तित्रयमि**

त्यादि कर्माणि चात्र पूर्वोक्तानि भक्त्यादीन्येव विवक्षितानीत्याह **भक्तिश्रद्धेति** नन्वेवं चेदत्र न द्दृष्यतीत्युपप्रोक्तकर्मण्यक्तिद्वयमनपेक्ष्यमेव । न । एतद्योगे भक्तिश्रद्धादीन्यप्यधिकान्यपेक्षणीयानीति भावः । द्वयोरित्यादि-सूत्रमवतारयति यच्चैतादित्यादि । च्युतिसम्भवेनेति तत्तद्भुवनप्राप्तिरूपाणां मोक्षाणां महाप्रलयान्तमेवावस्थानात् पुनस्सर्गारम्भे कर्मशेषेणाऽधोगतिस्स-म्भवत्येव । नन्वेवं चेदनयोर्मुक्त्योर्मुक्तित्वमेव हीयते । सत्यम् । अनयो-र्मुक्तित्वं मुक्त्याभासत्वमेवेत्यविरोधः । सिद्ध्यातिशयसम्भवेनेत्युपलक्षणं मुक्ति-सम्भवेनचेत्यर्थः । यतो मलपरिपाकवशात्तत्राऽपि दीक्षया मोक्षस्सम्भवत्येव।[1] भुवने भुवने गुरवः प्रतिवसन्ति ॥ ६-७॥

वृत्तिः ।

अथ किंनिमित्तमेतच्चिह्नवैचित्र्यम्। यद्वशान्नित्वं साधिकारमुक्तेरित्याह ।

**ईषदर्धनिवृत्ते तु**
**रोधकत्वे तमःपतेः ।**
**भवन्त्येतानि लिङ्गानि**
**किञ्चिच्छिष्टे च देहिनाम् ॥८॥**

तमःपतेः दृक्क्रियानिरोद्धुर्वामदेवनाथस्य यद्रोधकत्वं तस्मिन् किञ्चिन्निवृत्ते अर्धनिवृत्ते मनागवशिष्टे च सति एतच्चिह्नतारतम्यं शरीरिणां भवति ॥ ८ ॥

---

१. यस्माद्भुवने भुवने गुरवः प्रतिवसन्ति तस्मात्तत्राऽपि गुरुभिः कृतया दीक्षया मोक्षस्सम्भवतीत्यर्थः ।

दीपिका ।

ईश्वरस्य तिरोधानशक्त्यधिकारविराम एवानुग्रहस्य शक्तिनिपातस्य चिह्नोत्पत्तेश्च हेतुरित्याह अथेत्यादि ॥ ८॥

वृत्तिः ।

अत एव ।

**योग्यतात्रयमप्येतत्**
**समतीत्य महेश्वरः ।**
**स्वापेऽणुमनुगृह्णाति**
**साऽधिकारमिदं यतः ॥ ९॥**

एतद्योग्यतात्रयमनपेक्ष्यैव स्वापेऽणुमनुगृह्णाति । अणुमिति जातावेकवचनम् । योग्यतावैचित्र्येणानुग्रहणमणूनां तदानीं न करोतीति भावः । अत्रैव हेतुमाह **साधिकारमिदं यतः** यस्माद्योग्यतात्रयमधिकारापेक्षम् । न च तदानीमधिकारोपयोगः । तस्मान्नापेक्षते ॥ ९ ॥

दीपिका ।

अधिकारमलस्य[2] च मलपरिणतिरेव हेतुरित्युक्तं एतद्योग्यतात्रयमित्यादि । पूर्वपूर्वक्रुतं च । न त्वत्यन्तमलपरिपाकात्मकमपि योग्यत्वम् । अतिप्रसङ्गात् । स्वाप इत्युपलक्षणं[1] स्थितिकालेप्यत्यन्तमलपाकात् निरधिकरणानुग्रहस्य च सम्भवात् शान्तलक्षणस्य चेत्युक्तत्वाच्च ॥ ९॥

---

१. स्थितिकालस्यापीतिशेषः ।

२. अधिकारविरामस्येति पाठभेदः ।

वृत्तिः ।

**सर्गमूले तृतीयायाम् ।**
**स्वापवद्भूतसंहृतौ ॥ ९½ ॥**

भविष्यति सर्गारम्भे संहारोपान्ते वक्ष्यमाणलक्षणायां तृतीयस्यां च भूतसंहृतौ याननुगृह्णाति ते शिवास्सम्पद्यन्ते । स्वापावस्थानुगृहीताणुवत् ॥ ९½ ॥

दीपिका ।

तृतीयस्यां च भूतसंहृताविति महाप्रळयात्मिकायाम् । त्रैलोक्यप्रळयस्य मध्यमप्रळयस्य च वक्ष्यमाणत्वात् ॥ ९½ ॥

वृत्तिः ।

स्वापेणुमनुगृह्णातीति यत्प्रागुक्तं ततोऽणुशब्दं लक्षयितुमाह ।

**स यद्व्यपास्य क्रियते ।**
**तादृग्धो योणुरुच्यते ॥ १० ॥**

स इत्यनन्तरोक्तस्सर्गादौ तृतीये च भूतसंहारे स्वापे वा योऽनुग्राह्यस्सः यद्व्यपास्य अपनीय तादृग्विधः क्रियते अभिव्यक्तशिवभावस्सम्पद्यते सोऽणुशब्दवाच्यो ज्ञेयः । अणुस्सन्नपवृज्यत इति यावत् ॥ १० ॥

दीपिका ।

स यद्यपास्येति सूत्रं सम्बन्धयति स्वापेणुमित्यादि सयद्यपास्येति मलादिकमिति शेषः । यदिति यस्मादर्थे तद्विध इति तच्छब्देनानुग्राह्य परामृश्यत इत्याह अभिव्यक्तशिवभाव इति पाशरहितत्वेन सूक्ष्मत्वादणुरुच्यत इति भावः ॥ १० ॥

वृत्तिः ।

तदेवं "बोधयन् बोधयोग्यानि"ति यत्प्रागुक्तं तदृक्रियानन्त्यव्यक्त्या प्रदर्शितम् । यदपि रोध्यान् रुन्धन्नित्यादि सूचितं तत् "यान्विमोचयति स्वाप" इत्यनेन केषाञ्चिदेव तथाविधानुग्रहभाक्त्वे सति अन्येषामर्थाक्षिप्तो रोध इति कृत्वा प्रपञ्चितम् । इदानीं तु "पाचयन् कर्मिकर्मे"त्युक्तं निर्वर्णयितुमाह ।

**तथा बीजं शरीरादेः ।**
**पाचयत्यानिवेशनात् ॥ १०½ ॥**

भगवतश्शक्तयस्सर्वकार्येषु प्रसृताः । ताभिश्शरीरेन्द्रियजात्यायुर्भोगकारणं कर्म देहभाजां तत्स्वापे पाचयति फलदानोन्मुखमापादयति ॥ १०½ ॥

दीपिका ।

तथेत्यादिसूत्रं सम्बन्धयति तदेवमित्यादि अत एव रोधस्यार्थाक्षिप्तत्वात् शेषभूतं कर्मपाकादि तथेत्यादिनोच्यते इत्याह इदानीमित्यादि । आनिवेशनादितिव्याचष्टे । तत्स्वाप इति उपलक्षणं चैतत् ।

स्थितिकालेऽपि तदारम्भणीयशरीरादिसृष्टिसमयो यावत् तावत्तत्कर्म पाचयतीत्यर्थः ॥ १०१ ॥

वृत्तिः ।

यस्मात् ।

न योग्यतांगमभजत् ।
सद्यस्स्यादौषधादिवत् ॥ ११ ॥

योग्यताया अर्हत्वस्य सम्पादकमङ्गं पाकाख्यं संस्कारमभजत् अनासेव्यमानं तत्कर्म सद्यस्तत्क्षणहारीतक्याद्यौषधमिव न स्यात् न भवेत् फलदमिति शेषः । यदाहुः "अप्राप्तपाकं हारीतक्यादि द्रव्यं सदपि स्वकार्यसम्पादनाशक्तं योग्यताङ्गस्य पाकस्यानासादना"दिति । एवं सदपि कर्मापक्वं तत्फलदानाशक्तं अतः पाकापेक्षम् ॥ ११ ॥

वृत्तिः ।

पाकश्चास्य न स्वतस्सम्भवतीत्याह ।

पाकार्हमपि तत्पक्तुं
नेशत्यात्मानमात्मना ।
धर्मस्सामान्य एवायं
सर्वस्य परिणामिनः ॥ १२ ॥

पाकयोग्यमपि तत् स्वयमात्मानमात्मना न पाचयितुमीशम् । सर्वस्य हि परिणामिनो वस्तुनः क्षीरादेरिवाऽयं साधारणो धर्मः यत्किमप्यवेक्ष्य परिणामित्वं नान्यथा । परिणामित्वाच्च कर्मणोऽप्यन्यापेक्षो विपाकः। अनेन "मायाशक्तीर्व्यक्तियोग्याः प्रकुर्वन्नित्येतदपि प्रकाशितम् । तस्या अपि परिणामित्वात् । नचैषां मलमायाकर्मणां परिणामित्वमनीशेन सुशक्तमित्युक्तम् । ईशतीत्यदुष्टम्। ईश इवाऽऽचरति इत्यर्थे "सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः इति क्विप्स्मरणात् ॥ १२ ॥

दीपिका ।

**पाकयाग्यमपीत्यादि** अचेतनत्वात्स्वात्मनि क्रियाविरोधाच्चेति भावः । अयं च न्यायो मायादीनामपि तुल्य इत्याह **अनेनेत्यादि न चैषामित्यादि** पुरुषस्यास्वतन्त्रत्वात् न तत्परिणामकत्वमित्यर्थः ॥ १२ ॥

वृत्तिः ।

तदियता तावत् सर्वकर्तृत्वं परमेश्वरस्य प्रतिपादितम् । अत एव चास्य सर्वज्ञत्वं सिध्यतीत्याह ।

**सर्वज्ञस्सर्वकर्तृत्वा-**
**त्साधनाङ्गफलैस्सह ।**
**यो यज्जानाति कुरुते**
**स तदेवेति सुस्थितम् ॥ १३ ॥**

सर्वकर्तृत्वादेवेश्वरस्य सर्वज्ञत्वम् । सर्वविषयज्ञानं विना सर्वकर्तृत्वानुपपत्तेः । यो हि यत्क्रियासिद्धिं तदङ्गानि तत्फलानि च जानाति तस्यैव विचित्रतत्कारकोपयोगाभिसन्धानवतः तत्तत्कर्तृत्वं घटते । कुविन्दादेरिव पटादिकृतौ । अतः यस्तु तत्राज्ञस्स तत्कार्यकरणाय नालम् । बालिश इव न्यायविद्याद्युपन्यासे इति । **एतत्सुस्थितमिति** अव्यभिचारीत्यर्थः ॥ ३३ ॥

## दीपिका ।

सर्वज्ञ इत्यादिसूत्रमवतारयति तदियतेत्यादि तदेव व्याचष्टे **सर्वकर्तृत्वादेवेत्यादि** । यत्क्रियासिद्धिमिति क्रियासिद्धिहेतुमुपादानम् । तदयमर्थः । पटादिकर्ता हि स्वकार्यस्य पटादेः यत्साधनं तन्त्वादि यच्चाङ्गं सहकारितयोपकारकं तुरीवेमादि यच्च फलं प्रावरणादि तैस्सार्धं तत्कार्यं विजानाति । कर्ता च भगवानस्य सर्वस्यैव शुद्धाशुद्धात्मनो जगतः तत्तस्य यदुपादानं माया महामायात्मकं यच्चेह सहकारि कर्म ईश्वरसेवात्मकं च कर्म यच्च फलं शुद्धाशुद्धाध्वविषयोपभोगः मोक्षश्च तैस्सार्धं साधुकृत्वात्तत्कार्यं जानातीत्ययं सर्वज्ञस्सिद्धः । एतदेव सर्वं यतो यत्सहाधारेण कार्यं कुर्वन् न लक्ष्यते तन्निराधारं करोति । यथा दीपप्रकाशादिकम् । ननु शरीरलक्षणाधारयुक्तमेव सर्वं विज्ञानं स्वकार्यं कुर्वदुपलक्ष्यते । तथापीश्वरे प्रागेव शरीरस्य प्रतिषेधात् निराधारं तदभ्युपगम्यमाने स्वकार्येणासर्वविषयावगत्यात्मनोपलक्षित इति अज्ञ एवेश्वरः प्रसज्यत इति । तन्न । वायुनानैकान्तिकत्वात् वायुर्हि शरीरलक्षणेनाधारेणास्मिन् संसारे श्वसनं कुर्वन्नुपलक्ष्य-

१. कार्येण सर्वेति पाठभेदः ।

माणोऽपि वृक्षकम्पादिकं निराधारः करोत्येवेति । एवं ज्ञानमपि तथैव करिष्यतीति तन्निराधारत्वादत्र सर्वज्ञत्वसिद्धिरिति ॥ १३ ॥

तच्चास्याऽऽवृतिशून्यत्वात्
न व्यंजकमपेक्षते ।
तन्न सांशयिकं तस्मात्
विपरीतं न जातुचित् ॥ १४ ॥

वृत्तिः ।

शिवस्य तत्सर्वज्ञत्वं अनाद्यावरणशून्यत्वात् न व्यञ्जकापेक्षम् । नापि संसारिण इव संशयविपर्ययानध्यवसाययुक्तं अत एव हेतोः ॥ १४ ॥

दीपिका ।

अत एव नास्मदादीनां ज्ञानसदृशमीश्वरज्ञानम् । अनावृतत्वादित्याह **शिवस्येत्यादि** एतच्चोपलक्षणं क्रियाया अपि ॥ १४ ॥

वृत्तिः ।

तथाहि ।

यानि व्यंजकमीक्षन्ते
वृतत्वान्मलशक्तिभिः ।
व्यंजकस्यानुरोधेन
तानि स्युर्व्याहतान्यपि ॥ १५ ॥

यानि किल ज्ञानानि मलशक्त्यावृतत्वात् भोगनिष्पादनाय व्यञ्जकं कलाद्यपेक्षन्ते तानि व्यञ्जकस्य कलादेस्स्वल्पप्रकाशकरणात् तथाविधव्यञ्जनभाजि ज्ञेयविषये व्याघातवन्त्यपि भवन्ति। नचैश्वरं ज्ञानमेवंविधं पूर्वोक्तादेवावृतिशून्यत्वात्कारणात्। तथाचोक्तं श्रीमत्किरणे "अनादिमलमुक्तत्वात्सर्वज्ञोऽसौ ततश्शिवः इति ॥१५॥

वृत्तिः।

यतश्चैवमतः।

**नाध्यक्षं नापि तल्लैङ्गं**
**न शाब्दमपि शांकरम्।**
**ज्ञानमाभाति विमलं**
**सर्वदा सर्ववस्तुषु ॥ १६ ॥**

अक्षसव्यपेक्षं हि ज्ञानं प्रत्यक्षम्। अक्षव्यापाराणां तत्पाटवापाटवानुविधायित्वात् तद्भावाभावानुविधायित्वाच्च व्याहतमपि स्यात्। नचैवं शाम्भवं ज्ञानमतो न प्रत्यक्षम्। नाप्यानुमानिकम्। तस्य प्रत्यक्षाधीनवृत्तिकत्वात्। शाब्दं तु दूरापास्तम्। अत्यन्तपरोक्षार्थविषयत्वात् तस्य। न च किञ्चिद्भगवतः परोक्षम्। अतस्सर्वविषयं तस्य ज्ञानं प्रकाशते। ननु पञ्चवक्त्रस्त्रिपञ्चदृगि-

त्यादिना श्रूयत एवाऽऽगमेष्वपीश्वरस्य शरीरेन्द्रिययोगः । तत्सद्भावेऽपि कस्मान्न तत्सव्यपेक्षे ईश्वरस्य ज्ञानक्रिये । नास्य ज्ञानक्रियोपयोगी शरीरेन्द्रिययोगः । स्वभावत एव सर्वार्थदृक्क्रियाशक्तिमत्वात् इच्छामात्रेणैव सर्गस्थित्यादि-करणक्षमत्वात् । भक्तानुग्रहणार्थं चाऽऽकारग्रहणम् । अन्यथा निराकारे ध्यानपूजाद्ययोगात् । यदुक्तं श्रीमत्पौष्करे "साधकस्य तु लक्ष्यार्थं तस्य रूपमुदाहृतम् । सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम् इति ॥ १६ ॥

दीपिका ।

अत एव चोदयति नन्वित्यादि परिहरति नास्येत्यादि शरीरेन्द्रिययोग आगमेषूक्त इति शेषः ॥ १६ ॥

**तदेकं विषयानन्त्या-**
**द्भेदानन्त्यं प्रपद्यते ।**
**कर्तृत्वं तदभिन्नत्वात्**
**तद्वदेवोपचारतः ॥ १७ ॥**

वृत्तिः ।

यथाऽवस्थितवस्त्ववभासात्मनस्तावत् तदीयस्यैकस्य ज्ञानस्य ज्ञेयानन्त्यात् उपाधिभेदात्कृतमौपचारिकमानन्त्यं शास्त्रात्मनोऽपि स्रोतोभेदादध्येतृभेदात् प्रवर्तयितृभेदात्तेषां

च परापरत्वाद्गौणमेवाऽऽनन्त्यम् । "सर्वज्ञानक्रियारूपा शक्तिरेकैव शूलिनः" इत्यनया दृशा तस्माज्ज्ञानादभिन्नत्वात् कर्तृत्वमपि तथैवोपचारात् आनन्त्यं प्रपद्यते ॥ १७॥

दीपिका ।

एतच्च पूर्वमेवोक्तमिदानीं तयोः पूर्वोक्तमौपचारिकमनेकत्वं "तदेक"मित्यादिना प्रपञ्च्यत इत्याह यथावस्थितेत्यादि ॥ १७ ॥

वृत्तिः ।

अथ निर्वर्णितार्थोपसंहाराय व्याख्येयोपक्षेपाय चायं श्लोकः ।

**सत्तास्वरूपकरणार्थविधेयदृग्भि-**
**र्लेशोदिताभिरिति ये विदुरीशतत्वम् ।**
**ते मोचयन्ति भविनो भवपंकमग्ना-**
**न्नो विस्तरेण पुरुषाः पशुपाशरूपम् ॥१८॥**

"अथोपलभ्य देहादि वस्तु कार्यत्वधर्मकम् । कर्तारमस्य जानीम"इत्यादिना तावदीश्वरस्य सत्ता साधिता । "नित्यं कालानवच्छेदाद्व्यैतत्यान्न प्रदेशगम् । क्रमाक्रमसमुत्पत्तेः क्रमाद्युत्पत्तिशक्तिमत्" इति ! तत्स्वरूपमुक्तम् । "करणं च न शक्त्यन्यच्छक्तिर्नाचेतना चितः" इत्यनेन करणं कथितम् । विनियोगफलं मुक्तिः भुक्तिरप्यनुषङ्गतः"

इत्यमुनार्थं प्रयोजनमुपवर्णितम् । "जगज्जन्मस्थितिध्वंस-तिरोभावविमुक्तयः । कृत्य"मित्यनेन पञ्चविधं विधेयमुक्तम् । दृक् चास्य ज्ञानम् "नाध्यक्षं नापि तल्लैङ्गम्" इत्यादिना निर्णीतमित्येताभिस्सत्तास्वरूपकरणार्थविधेयदृग्भिस्संक्षेपेणोक्ताभिरीशतत्वं ये विदुर्जानन्ति ते पुरुषास्संसारकर्दममग्नान् संसारिणो मोचयन्ति । नतु विस्तरेण पशुरूपं पाशरूपं वा ईश्वरं ये विदुः । यथा "आत्मैवेदं सर्वं" "पुरुष एवेदं सर्वं" एवंविधपुरुषरूपेश्वरवादिनः कर्म कालाव्यक्तादिपाशरूपेश्वरवादिनो वा । पशूनां स्वयमेवानाद्यज्ञाननिमग्नत्वेनाकिञ्चित्करत्वात् । पाशानां च तत्पाशन एव चरितार्थत्वात् तत्तत्संयोगवियोगादौ निगलादिवत् परापेक्षत्वे सति अनीश्वरत्वात् तथाविधेश्वरावबोधात् पाशमोचनं सकललोकोपहासावहं यतः । पशुशब्दश्चात्र समनन्तरप्रकरणोपक्रम्यमाणात्मतत्वोपक्षेपायोपहृतः ॥ १८ ॥

इति भट्टविद्याकण्ठात्मजभट्टनारायणकण्ठविरचितायां
मृगेन्द्रवृत्तौ पञ्चकृत्यप्रकरणं पञ्चमं समाप्तम् ।

---

## दीपिका ।

एवं स्थितस्य च महेश्वरस्य परिज्ञानं निष्प्रयोजनमित्यत आह **इत्येताभिरित्यादि** अत एव आचार्येण ज्ञानिना भवितव्यमित्युक्तं यदुक्तमाचार्यैः "दीक्षाव्याख्यात्योः कर्तुराचार्यस्य ज्ञानं प्रधानमिति" । एतच्च

प्रयोजनं दर्शनान्तरसिद्धेश्वरज्ञानिनां न सम्भवतीत्याह **ननु विस्तरेणेत्यादि** तेषां पशुपाशरूपत्वेनावान्तरपूर्वकत्वात्तज्ज्ञानादेतत्प्रयोजनं न सम्भवत्येव। तथाहि प्रकृतिरेव परब्रह्मवाच्यः नारायणो वा कैश्चिदध्यात्मविद्भिः पाञ्चरात्रैश्चेष्यते। तस्योपादानकारणत्वात् तन्त्वादिपटप्रकृतेरिव अवश्यं धात्रन्तरेण भवितव्यम्। यो हि "हिरण्यगर्भस्समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्"। इत्यादिश्रुत्यर्थतया हिरण्यगर्भाख्यस्तस्याः प्रकृतेर्विकारोऽध्यात्मविद्भिर्दैरीश्वरः प्रोक्तः। पाञ्चरात्रिकभेदैर्वा चातुरात्म्यलक्षणः। यदुक्तम् "ईशास्तु ते समभवन् प्रकृतेः परस्याः कृष्णानिरुद्धमकरध्वजरौहिणेयाः। इति। तस्याप्युत्पत्त्यपवर्गयोगित्वात् ब्रह्मेन्द्रादेरिव धात्रन्तरेण भवितव्यम्। यश्चापि बुद्धिसंयोगादीश्वरः पातञ्जलैरुक्तः। मनस्संयोगाच्च नैयायिकवैशेषिकैरिष्टः तस्यापीश्वरत्वोपायभूतोऽसौ संयोगस्संयोगत्वादेव घटपटादिसंयोगवदनित्योऽव्यापकश्चेति न सर्वत्र सर्वदा चेश्वरत्वम्। अतो भुवनेश्वराणामपि धात्रन्तरेण भावितव्यम्। यश्चैवं सर्वेषामेव धाता स एवास्माभिर्महेश्वरत्वेनाभ्युपगतः। तस्यैव धातृपूर्वकत्वासिद्धेः। ननु दर्शनान्तरसिद्धानामीश्वराणां लोकवेदसिद्धत्वात् कथं महेश्वरत्वं प्रतिक्षिप्यत इति चेत्तन्न वेदादिशास्त्रतो लोकप्रसिद्ध्या चास्यैव महेश्वरत्वप्रदर्शनात्। तथाच श्रुतिः "एक एव रुद्रो न द्वितीयायतस्थे" इति। अत्रावधारणेन द्वितीयनिषेधेन च रुद्रस्यैव महेश्वरत्वं ख्याप्यते। रुद्रेष्वपि "महेश्वराय शितिकण्ठाय साम्बकाय नम" इति। पुराणेष्वपि "नौषधीभिर्महेशानो मन्त्रैर्न नरसाधनैः। प्राप्यते कुशलं तादृक् ऋते त्वन्नामकीर्तनात्"। इति। भारतादावपि वासुदेवार्चनकृतेषु स्वप्नशतरुद्रीयादिस्तोत्रेषु तस्यैव महेश्वरत्वेन प्रसिद्धिः। अत एव भगवद्गीतासु दशमेध्याये "यो मामजमनादिं च वेत्ति लोकमहेश्वरम्"। इत्यात्मनो नारायणभट्टारकः परिमितमेव भूरादिसप्तलोकविषयमहेश्वरत्वमाह। नतु सर्वतत्वभुवनादिविषयमिति। कथं तर्हि भारते न

देवः केशवात्पर इत्युक्तम् । अत एव भौतिकसर्गविषयात् पिशाचादिपितामहान्तादष्टविधात् देवयोनिवर्गादसौ परः प्रोक्तः । न तु महेश्वरादिति को विरोधः । यदुक्तं "अष्टविकल्पो दैवस्तिर्यग्योनिश्च पञ्चधा भवति । मानुष्यश्चैकविधस्समासतो भौतिकस्सर्गः" इति । एवमेव च "ब्रह्म च ब्राह्मणाश्चे"त्यादावप्यवसेयम् । यदुक्तं "अग्निर्वै देवानामवमो विष्णुः परम" इति । लोकेऽपि ब्रह्मविष्ण्वादीनां चक्रस्वामिमधुरास्वामीति पदैः स्वामित्वेन प्रसिद्धिः । भगवत एव प्रयागादिस्वयंभूक्षेत्रेषु महेश्वरस्थानेषु भीमेश्वरभूतेश्वरादिभिः पदैः प्रतिष्ठास्थानेष्वपि ब्रह्मेश्वरसोमेश्वररामेश्वरादिभिः[1] । अतश्च यद्यपि स्वामिन्यैश्वर्य इति पठ्यते तथाऽपि अनुदेवतत्स्वाम्यं पदप्राप्तबालादावभिधानादिकेऽस्य दृश्यते । अन्यच्चेश्वरत्वं प्रभुरूपं यत्प्रचण्डतरनृपत्यादौ सिद्धमिति । लोकप्रसिद्ध्यापि स एव महेश्वरस्सिद्धः । उक्तं च श्रीमत्पराख्ये "ईश्वरो रूढितो गम्य" इति । नचाप्रमाणं प्रसिद्धम् । यदाहुः "द्रव्यजातिक्रियाशब्दो गुणजातिस्तथापरः । यौगिको योगरूढश्च प्रसिद्ध्यैव व्यवस्थितः । सूर्यो गौश्चलनं शुक्लः पङ्कजः पङ्कजो यथा । तत्तदर्थाभिधायित्वाच्छब्दः प्रोक्तस्तु तद्विधः" इति । ननूक्तं प्रसिद्धिर्वटयक्षवत् अप्रमाणमिति जैमिनीयभेदाः । तदप्ययुक्तम् । यतः प्रसिद्धिनिबन्धनो हि सर्वः पदपदार्थसम्बन्ध इत्युक्तम् । तस्याश्चाप्रामाण्ये वेदार्थस्याप्यप्रतिष्ठेति सर्वमसमञ्जसमिति शास्त्रतो लोकतस्स एव महेश्वर इति सिद्धः । उक्तं चास्माभिः पाषण्डापजये "श्रुतिभिस्स्मृतिभिः पुराणवाक्यैर्मुनिमुख्यैरपरैश्च घुष्यमाणाम् । प्रभुतामवतार्य चन्द्रमौलेः कथमेवं मनुजाः पुनर्विमूढाः । इति ॥ १८ ॥

इत्यघोरशिवाचार्यविरचितायां मृगेन्द्रवृत्तिदीपिकायां
अनुग्रहादिविचारप्रकरणं पञ्चमम् ।

---

१. पदैरीश्वरत्वेन प्रसिद्धिरित्यर्थः ।

## अथ पशुलक्षणप्रकरणं षष्ठम् ।

अथ विश्वनिमित्तस्य
प्राप्तं लक्षणमात्मनः ।
तदीशोक्तौ गतप्रायं
तथाप्युद्देश उच्यते ॥ १ ॥

वृत्तिः ।

अथेदानीं पाश्चात्यपटलान्तसूचिताभिधानस्याऽऽत्मनो लक्षणमुच्यत इति पाटलिकप्राकरणिकौ सम्बन्धौ ज्ञेयौ । सौत्रादयस्तु प्राग्वदुन्नेयाः । प्रतिपटलमुच्यमाना अतिपौनरुक्त्यमावहन्ति । विश्वस्य जगतो निमित्तं प्रवर्तनहेतुरात्मा । तद्भोगसाधनाय तनुकरणभुवनानामुत्पत्तेः । तस्यात्मनो लक्षणमीश्वरोक्त्यनन्तरमवसरप्राप्तं कथ्यते । तच्च यद्यपि—"तेन स्वभावसिद्धेन भवितव्यं जगत्कृते"त्यत्रेश्वरसिद्ध्यनुषङ्गेण । "चैतन्यं दृक्क्रियारूपं तदस्त्यात्मनि सर्वदा । सर्वतश्च यतो मुक्तौ श्रूयते सर्वतो मुखं" इत्यादिनोक्तप्रायं कथितकल्पम् । तथाप्युद्देशस्सोपपत्तिकतत्स्वरूपसंक्षेप उच्यते ॥ १ ॥

दीपिका ।

अथ पशुलक्षणप्रकरणं षष्ठम् ।

"अथ विश्वनिमित्तस्ये"त्यत्र अथ शब्द आनन्तर्यार्थ इत्याह अथेदानीमित्यादि । सौत्रादयास्त्वित्यादि सौत्रसम्बन्धोऽणोरिति पदेन ।

पदार्थसम्बन्धः पशुपदार्थतया। वाक्यात्मकस्तु "चैतन्यं दृक्क्रियारूपं तदस्त्यात्मनि सर्वदा" इत्यादिभिर्वाक्यैः। ननु कथितकल्पं चेदात्मलक्षणं किमेतेन प्रकरणेनात आह सोपपत्तिकेत्यादि अस्यात्मनश्चेतनत्वमात्रं साधितम्। अत्र तु युक्तिपूर्वकं देहान्यत्वादि प्रतिपाद्यत इति ॥ १ ॥

**कार्यं क्षित्यादि कर्तेश-**
**स्तत्कर्तुर्नोपयुज्यते।**
**न स्वार्थमप्यचिद्भावात्**
**नानर्थ्यं कर्तृगौरवात् ॥ २ ॥**

वृत्तिः।

कार्यत्वं तावत् क्षित्यादेरेव सन्निवेशादिमत्त्वेन प्राक्कथितम्। तस्य च कर्ता प्रागुक्ताभिर्युक्तिभिरीशस्सिद्धः। तत्तु कार्यं तदुपयोगि स्वोपयोग्यनुपयोग्यन्योपयोगि चेति चत्वारः पक्षाः। तत्र न तावदीश्वरोपयोगि। न हि पृथिव्यादिभिस्तस्य स्वात्मन्यर्थक्रिया काचित्क्रियते। नित्यपरिपूर्णस्वरूपत्वात्। नच तत्क्षित्यादि कार्यं क्षित्याद्यर्थमेव क्रियते। तेषामचैतन्यात्करणीयस्याभावात्। चेतनस्य हि धर्मादिचतुर्वर्गप्रेप्सोः करणीयं सम्भवति न घटादेः। न चैतत्कार्यमनर्थकम्। कर्तृगौरवात्। सामान्येनापि कर्त्रा यत्कार्यं क्रियते तन्नानर्थकं भवति। किं पुनः परमेश्वर-

ऽर्व्यापारितैर्जगत्कर्तृभिर्ब्रह्मादिभिः। तत्कार्यकरणे च प्रयोजनं प्राक् प्रदर्शितम् ॥ २ ॥

दीपिका।

अत्र तावत् कार्यत्वमित्यादिना परिशेषानुमानेनाऽऽत्मास्तित्वं साधितमित्याह **कार्यत्वं तावदित्यादि**। ननु "तदसत्कर्मणो भोगा"दित्यादिना **परमोक्षनिरास एव नैरात्म्यवादः** प्रतिक्षिप्तः। सत्यम्। अत एवात्र चार्वाकादिनिराकरणाय देहान्यत्वादि साध्यत इति न पौनरुक्त्यम्। **तत्र न तावदित्यादि**। ननु एकाकी न[2] रमाम्यहमिति न्यायेन परमात्मन एकत्वात्तेन परमात्मलक्षणेनेश्वरेणात्मनः क्रीडार्थं क्षित्यादि कार्यमुत्पाद्यत इति क्रीडाब्रह्मवादिनः। तन्न। आत्मबहुत्वस्य वक्ष्यमाणत्वात् पूर्वमेव साधितत्वाच्च। किञ्च क्रीडापक्षे राज्ञः पशुभिरिव तस्य ब्रह्मणः सर्वशक्तेर्जीवात्मभिरिच्छाविघातस्य कर्तुमशक्यत्वात् समस्तपुरुषानवैयात्येन "आत्मा ज्ञातव्य" इत्यादेरपि मुक्त्युपायस्य निष्फलत्वात् मुक्तेर्न सम्भवः॥ चित्रब्रह्मपक्षेऽपि स्वभावस्य वह्नेरौष्ण्यस्येवानुच्छेदकत्वान्मुक्तेरसम्भव एव। शान्तब्रह्मपक्षे अद्वैतहानिरित्यादिदोषाः प्रोक्ता एवेति। **नचैतत्कार्यमित्यादि** यदुक्तं "प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते" इति। **प्रयोजनं प्राक् प्रपञ्चितमिति** "मुक्तस्य[3] शिव एव सः" इत्यत्रेत्यर्थः॥ २॥

# पारिशेष्यात्परार्थं तत् क्षेत्रज्ञस्स परस्तयोः ॥ २½ ॥

---

१. परमेश्वरस्य कार्यकरणे तत्तद्व्यापारितैरिति पाठभेदः। २. नमाम्यहमिति मातृकासु पाठो विद्यते। ३ पतिलक्षणपरीक्षाप्रकरणे ५½ श्लोकः।

वृत्तिः ।

तत् क्षित्यादिकार्यम् । कश्चात्र पर इत्याह क्षेत्रज्ञ इति । कर्तृकार्ययोः परोऽन्यः प्रस्तुताभिधानः क्षेत्रज्ञः पशुश्चात्मेत्यर्थः ॥ २$\frac{1}{2}$ ॥

वृत्तिः ।

अत्र चार्वाकच्छायया ऽऽत्मनिरासायेदमाशङ्क्यते ।

**परो देहस्तदर्थत्वात् ।**
**परार्थाः क्ष्मादयो ननु ॥ ३ ॥**

ननूपलभ्यमानप्रयोजनानां क्षित्यादीनां परार्थत्वमस्तु स त्वत्र परः काय एव । यस्यारम्भकाश्चोपयोगिनश्च पृथिव्यप्तेजोवायवः । तस्माच्च क्षित्यादीनां परार्थत्वेनाऽऽत्मानुमानम् ॥ ३ ॥

वृत्तिः ।

अत्रोत्तरम् ।

**कायोऽप्यचित्वादन्यार्थं**
**सुतरां प्रतिपद्यते ॥ ३$\frac{2}{1}$ ॥**

देहोऽपि परार्थ एव अचैतन्यात्पृथिव्यादिवदिति तस्याप्यन्यार्थं परार्थत्वं सुतरामुपपद्यते । ततश्च देहस्य क्षित्यादीनां च परार्थत्वात् पर आत्मैवात्र युक्त्युपपन्नः ॥३$\frac{1}{2}$॥

वृत्तिः ।

ननु देहादन्यत्र यदि चैतन्यं स्यात् एतदेवम् । पृथिव्यादिचतुर्भूतविकारे प्राणादिकारणीभूते गर्भादौ संविदुद्भवः किण्वादिद्रव्यविकारे मदशक्त्युत्पत्तिवत् । तथाहि कृशोऽहं स्थूलोऽहमिति शरीर एवाहम्प्रत्ययो दृष्टः । न च तद्व्यतिरिक्त आत्मोपलभ्यते । देहस्यात्मेत्यत्राश्वे विषाणमित्यादिवत् प्रत्यक्षनिराकृतत्वात् । अथ परार्थाश्च-क्षुरादयः सङ्घातत्वात् शयनाद्यङ्गवदित्यादिना करणानां कर्तृप्रयोज्यत्वादिना वा अनुमानेनाऽऽत्मा प्रसाध्यते । न तद्युक्तम् । तस्या[1]त्मापलापिनश्चार्वाकान् प्रत्यसिद्धेः । न ह्येषां प्रत्यक्षादन्यत् किञ्चित्प्रमाणम् । सिद्धावपि वाऽनु-मीयमानस्यात्मनो देवदत्तादिवत्परत्वं प्रसज्यते । यत्किल स्वयं प्रकाशते स आत्मा । तत्प्रकाश्यस्तु पर इति विवि-क्ततया आत्मपरभावस्य प्रकाशमानस्यैव सङ्करोऽनवस्थानं च स्यात् । तदुक्तम् । "आत्मा यदि भवेन्मेयः तस्य माता-भवेत्परः । पर आत्मा तदानीं स्यात् स परो यस्तु मीयते"। इति । तथा "प्रकाशते संविदेका तदन्यत्तु प्रकाश्यते । प्रकाश्यं च भवेत्कर्म तच्च कर्त्रा विना कथं" इति । तस्मा-न्नानुमानेन देहव्यतिरिक्त आत्मोपलभ्यते । अपितु चैत-न्यविशिष्टः काय एव वस्तुसन्नित्याशङ्क्याह ।

---

१. तस्येत्यनुमानस्येत्यर्थः ।

**चेतनश्चेन्न भोग्यत्वात्**
**विकारित्वाच्च जातुचित् ।**
**भोग्या विकारिणो दृष्टाः**
**चिद्विहीना घटादयः ।**
**सोऽप्येवं सति सत्वाद्वा**
**न सत्यपि शवे चितिः ॥ ५ ॥**

अथ मन्यसे काय एव चेतनात्मकः । तथाहि यस्मिन्नुपचिते यस्योपचयः यदपचय एवाऽपचयः तत्तदात्मकम् । यथा वह्नेरुपचयापचययोरुपचयापचयावनुगच्छदौष्ण्यम् । यौवनस्थाविरभोजनलङ्घनादिहेतुकौ च देहसम्बान्धिनावुपचयापचयावनुकुर्वद्विज्ञानं देहात्मकमेव । अतो देह एव चेतन इति पूर्वः पक्षः । अथैतत्प्रतिक्षेपः **न भोग्यत्वाद्विकारित्वाच्चेति । सोऽप्येवमिति** देहश्चेतनः कदाचिन्न भवति भोग्यत्वाद्विकारित्वाच्च । ये ये केचन विकारिणः परिणामिनो भोग्याश्च ते ते ह्यचेतना दृष्टाः । यथा घटादयः । स देहोप्येवंविधस्तस्मान्न चेतनः । नन्वङ्गनादिभिर्भोग्यत्वमनैकान्तिकम् । भोग्यत्वेऽपि तत्राचैतन्याभावात् । नानैकान्तिकं तदीयस्य देहस्यैव भोग्यत्वात् । यद्येवं निर्जीवस्य देहस्य कथं नोपभोगः; भवत्येव तदवस्थोचित

उपभोगः क्रव्यादादेः न पुनः कान्तादेः । कामिन्याद्यव-स्थान्तरापत्तेर्विकारित्वेन बीभत्सरसहेतुत्वात् । तदुक्तं "नैतत्तद्वक्त्रमत्र क्व तदधरमधु क्वायताक्ष्याः कटाक्षा यस्मिन्नि"त्यादिभिः एवं गजाश्वादौ च विज्ञेयम् । तस्मात्स्थितमेतद्विकारित्वात् भोग्यत्वाच्च देहस्याचैतन्यम् । अचैतन्याच्च पारार्थ्यमिति । पुनरपि परमतमाशङ्कते **सति सत्वाद्वेति** यस्मिन् सति यस्य भावः यदभावे चाभावः तत्तस्य कार्यम् । शीतमिव हिमस्य । सति च शुक्रशोणितात्मकदेहारम्भकभूतविशेषपरिणामे सत्वादसति च प्रतिध्वस्ते तस्मिन्नसत्वात् चैतन्यं भूतविशेषपरिणामकृतमिति वा यद्यवैषि तदेतदनुपपन्नम् । यस्मात् **न सत्यपि शवे चितिरिति** । यत्सद्भाव एव यस्य भावः तत्तस्य कार्यमिति नियमोत्रावश्यं प्रतिज्ञातव्यः । अन्यथा तदभावेऽपि भवतस्तत्कार्यत्वायोगात् । यथाऽग्निसद्भाव एव सम्भवद्धूमोऽग्निकार्यः एवं च शरीरारम्भकभूतसद्भाव एव भावः तदभावे चाभाव एव चैतन्यस्य यदि स्यात् तद्देहसम्बन्धितया प्रतीयते । यावता शरीरसद्भावेऽपि गर्भादौ उत्तरकाले[१] च चेतनापगमो दृष्टः । तेन्न[२] सति सत्वं देहाभिन्नचैतन्यसाधकम् । ननु मृतशरीरेऽपि प्राणाद्यात्मकस्य

---

१. उत्तरकालं मरणकाल इत्यर्थः । २. तस्मान्न सतिसत्वाद्देहारम्भकं चैतन्येति पाठभेदः ।

वायोरूष्मरूपस्य च तेजसोऽपगमात् न जीवावस्थायामिव शरीरारम्भकभूतसद्भावः । तस्मादत्राचेतनत्वम् । यच्च तत्सति सत्वमनैकान्तिकीकर्तुमशक्तम् । नैवम् । गतासवोऽपि हि केचन चलत्सन्धयस्सोष्माणश्च कियन्तमपि कालमुपलभ्यन्ते । तेषां च जीवदवस्थावद्देहारम्भकभूतसद्भावेऽपि न चैतन्यसम्भवः । गर्भावस्थायां च सकलसामग्रीसद्भावेऽपि कदाचिच्चैतन्यासम्भवः । तस्मात्साति सत्वमनैकान्तिकमेव ॥ ५ ॥

## दीपिका ।

चेतनश्चेदित्याशङ्कासूत्रखण्डं व्याख्यातुं पीठिकां रचयति । **ननु देहादन्यत्रेति** । **गर्भादावपीति** शुक्लशोणितात्मके गर्भस्थे देहे । आदिग्रहणात्स्वेदजादावपि । आत्मनो देहान्यत्वे प्रत्यक्षविरोधोपीत्याह **कृशोऽहमित्यादि** ननु अहं शरीरीत्यपि व्यवहारो दृश्यते । सत्यम् । राहोश्शिर इति वत् औपचारिकः न मुख्यः इति । अनुमानेन देहान्यत्वमाशङ्कते **अथेत्यादि** । **करणानामित्यादि** शस्त्रादिवत्करणत्वात् चक्षुरादीनां [1]प्रयोजकत्वेन कर्त्रा भवितव्यमिति परिहरति **न तद्युक्तमित्यादि** सङ्गताश्शयनादयस्संहतशरीरार्थं दृष्टा इति इन्द्रियैरपि शरीरार्थैर्भवितव्यमिति भावः । वस्तुतस्तु न परार्थ इत्यर्थः । एतदेव व्याचष्टे **अथ मन्यसे इत्यादि** [2]उत्तरसूत्रं व्याचष्टे **देहश्चेतन इत्यादि** तत्र यदुक्तं शरीर एवाहंप्रत्ययो दृष्ट इति । तन्न । यतो देहस्याप्यन्तस्स्पर्शनेन शूलाद्यात्मना बहिश्च मृदुकर्कशादिभेदेन स्वसंवेद्यमानतयैवाध्यवसितानुसन्धातृरूपः शरीराद्भिन्नस्स्व-

---

१. प्रयोजकेनेति पाठभेदः. २. उत्तरसूत्रं समाधानसूत्रमित्यर्थः ।

संवेदनसिद्ध एव। अतश्चानुमेयत्वादात्मनः परत्वप्रसङ्ग इत्येतदपि परास्तम्। किंच यदि देह एवाऽऽत्मा भवेत् परदेहदर्शने परचैतन्यस्य रागद्वेषादियुक्तस्य दर्शनं स्यात् देहस्य तु परगतस्य केवलस्यैव दर्शनात् देहान्यः पुमानस्तीति प्रतीयते। चार्वाकस्याऽपि अनुमानमवर्जनीयमिति साधयिष्यन्ननुमानेन देहस्याचेतनत्वं साधयति। भोग्यत्वादित्यादि किंच न शरीरमेवाऽऽत्मा बाह्येन्द्रियप्रत्यक्षत्वात् घटादिवत्। यदुक्तं मदशक्तिवत् भूतविकारजन्यं विज्ञानं सिध्यतीति। तदेतत्सति सत्वाद्वेति पूर्वपक्षाशङ्क्योपपाद्यत इत्याह यस्मिन् सतीत्यादि परिहारसूत्रखण्डं व्याचष्टे यत्सद्भाव एवेत्यादि ॥ ५ ॥

वृत्तिः।

ननु जीवदवस्थायां परिणामवैशिष्ट्यात् चैतन्यसम्भवः। तथाविधपरिणामाभावात् गतासुदेहे तदभाव इति पुनरपि चार्वाकभूमिकयैवाऽऽशङ्कते।

**परिणामस्य वैशिष्ट्या-**
**दस्ति चेन्न स्मृतिस्तदा ॥ ५½ ॥**

कौमारयौवनाद्यवस्थाभेदादवान्तरतत्तदवस्थाविशेषभेदेन च देहारम्भकभूतपरिणामाभ्यासकृततत्तद्वैशिष्ट्याज्जीवदवस्थायां यच्चैतन्यमस्ति तत्तथाविधभूतपरिणामकृतम्। तत्तद्घटपटशकटाद्यनेकार्थप्रकाशकानि संक्रमणाभिविज्ञानानि[1] पूर्वपूर्वनिरोधे सत्युत्तरोत्तराणि परिणाम-

1. सक्रमणाभि इति पाठभेदः।

वैशिष्ट्यादेव भवन्ति । नान्यत इति न देहादन्यच्चैतन्यमिति चोद्यम् । अत्र परिहारः **न स्मृतिस्तदेति** प्रत्यर्थं संक्रमसंवेदनविशेषस्य परिणामित्वाभ्युपगमे सति स्मृतिर्नावकल्प्यते । परिणामविशेषाणां क्रमभाविनां भिन्नत्वात् । असंविदितस्यान्यविदितस्य चान्येनास्मरणात् । न ह्यननुभूतं देवदत्तानुभूतं वा चैत्रादिना स्मर्तुं शक्यम् ॥ ५१ ॥

दीपिका ।

न स्मृतिस्तदेति व्याचष्टे **तदेतीत्यादि** अयमभिप्रायः यदेतद्घटपटशकटाद्यात्मकं संक्रमं[2] ज्ञानमुक्तं तन्नात्मस्वरूपम् । अपि तु बौद्धमध्यवसायात्मकमेव । यत्तु तेषां ज्ञानानामनुसन्धातृ तदेव कर्तृरूपं स्वसंवेदनसिद्धमात्मनोच्यत इति । अत एव यदुक्तं शरीरोपचयाच्चदात्मकमिति तदपि परास्तम् । बौद्धस्यैव ज्ञानस्य तथारूपत्वात् । अनैकान्तिकंच केषांचिन्महाकायानामपि अल्पज्ञानानां, अल्पकायानामपि महामतीनां दर्शनात् । इति ॥ ५१ ॥

वृत्तिः ।

एवं माभूत्स्मृतिः । किं न श्छिन्नमिति चेत्तदप्ययुक्तमित्याह ।

**नाप्येवं सुप्रतीतत्वात्**
**स्मर्ता कायेतरोऽस्त्यतः ॥ ६ ॥**

---

१. सक्रमसंवेदनेति पाठभेदः । २. सक्रमं ज्ञानमिति पाठभेदः ।

सकललोकप्रसिद्धस्मृत्यपह्नवस्तावन्न शक्यः। स्मृतिश्चैवमुपपद्यते। देहस्यासकृत्परिणामित्वेऽपि एकस्वभावस्तदन्यस्तत्तदर्थसन्निधौ तत्तज्ज्ञानस्यानुभाविता स एवानुसंधाता स्यादिति अत इति अस्मात्स्मृत्यन्यथानुपपत्तिलक्षणादपि हेतोः देहादन्यस्स्मर्ताऽस्तीति। नच वाच्यं किमेभिः परानुमानासहिष्णोर्व्यर्थैर्हेत्वादिभिरिति। यतश्चार्वाकस्यानिच्छोरपि दुर्गतस्य दौर्गत्यमिव बलादेवानुमानं ख्यातिमनुबध्नाति तथाहि। तेन प्रत्यक्षैकप्रमाणवादिनापि चतुर्महाभूतव्यतिरिक्ततत्वानभ्युपगमे मृत्पाषाणादिस्थावरलक्षणा पृथिवी जलादि च सरित्समुद्रादीत्यादिना दृष्टस्य गुणभेदेन न सर्वं प्रत्यक्षेणावगाहितुं शक्यम्। तस्य प्रतिनियतव्यक्तिहेतुत्वेनाशेषजगदन्तर्गतपदार्थविषयान्वयग्रहणाक्षमत्वात्। अपि च यत्र काठिन्यं सा पृथिवी स्थलोपलपर्वतादिवत्। पृथिव्यभावे काठिन्यस्याभावः। वाय्वादाविव। यच्च द्रवस्वरूपं तज्जलं तैलघृतक्षीरादेरप्युदकत्वादित्याद्यन्वयग्रहणमनुमानाङ्गं कल्पनीयम्। धर्मिणि च देहे पक्षीकृते तद्गतस्य काठिन्यादेः पृथिव्यादिधर्मत्वानिश्चयात्। पृथिव्यादिभूतचतुष्टयारब्धत्वमपि नानुमानं विनाऽवगन्तुं शक्यम्। किञ्च प्रत्यक्षमेव प्रमाणं नानुमानादिरिति 'प्रमाणाप्रमाणचिन्ता नास्य प्रत्यक्षनिश्चेया।

---

१. व्यक्तिगतत्वेनेति पाठभेदः।

यथाह धर्मकीर्तिः । "प्रमाणेतरसामान्यस्थितेरन्याधियोगतः । प्रमाणान्तरसद्भाव" इति । न परं प्रत्यक्षासिद्धत्वमनुमानस्य तत्प्रत्ययनार्थं चेह परिशेषानुमानं प्रकरणारम्भे निदर्शितम् । नतु स्वसंवेदनत्वेनापरोक्षस्याऽऽत्मनस्साधनाय तत्र प्रमाणान्तरस्यानुपयोगात् । यदाहुः "अनुभूतौ प्रमाणानां परिनिष्ठा समाप्यते । स्वतस्तयैव या ज्ञप्तिः किं तत्रान्यैः प्रमान्तरैः" ॥ इति गतमेतत् । यत्तु "परिणामस्य वैशिष्ट्यादस्ति चेन्न स्मृतिस्तदा" इत्यखण्डमेव श्लोकार्थं तदेति शवावस्थायां सूक्ष्मतरसंवेदनसम्भवेऽपि परिणामवैशिष्ट्यादिति स्मृत्यभावप्रतिपादकत्वेन परमताशङ्कया व्याख्याय समाधीयते । यदुत नाप्येवं सुप्रतीतत्वात् । नह्येवं क्वचित्प्रसिद्धम् । यद्गतासोस्सूक्ष्मतरसंवेदनमस्ति स्मृतिस्तु नास्ति । इति । अपि तु सुप्रतीतमेतत् । यन्निर्जीवे वपुषि काष्ठलोष्टादाविव संविन्नास्त्येवेति । तस्माद्देहादन्यस्स्मर्ताऽस्तीत्येवमपि व्याख्यायमाने न कश्चिद्दोषः ॥ ६ ॥

## दीपिका ।

नाप्येवमित्यादि व्याचष्टे **सकललोकेत्यादि** । **स्मृतिश्चैवमित्यादि** अत एवाऽसिद्धोयं तद्भावे भावादिति हेतुः । तथाहि यस्य हि यत्राभावस्सिद्धः स विशिष्टवस्तुसन्निधाने तत्र भवन् तत्सादृश्याभावेऽपि तत्कार्यतया सिद्ध्यति । सूर्यकान्तादेर्वह्न्यादिवदिति । न तु तत्र भावसम्भावनायाम् ।

---

१. सामान्यास्थितेरन्याधियोगतः इति पाठभेदः ।

तदानीं ह्यालोकादिसन्निधौ घटवत्तदभिव्यङ्ग्य एव सिध्यति। तत्तत्कार्यव्यापकत्वेन चाऽऽत्मनस्तत्राऽपि भावः सम्भाव्यत इति आलोकनाद्धटादेरिव सत्त्वसिद्धये स्वसंवेदनेन ग्राह्याच्छरीराद्भेदेन आत्मनस्सिद्धत्वात्। ननु शुक्लशोणितसंयोगात्प्राक् सत्त्वमप्यस्य कुतः। तर्हि संशय एव युक्तः तन्न। स्मृत्यन्यथानुपपत्त्याऽनुमानेन निश्चयात्। प्राणिनां स्थानकरणादेराकुञ्चनप्रसारणाद्यं कर्म हिताहितस्मरणाविनाभावि व्यवहारकाले सिद्धमिति बालानामपि तद्दृश्यमानं स्वकारणमनुभवस्मरणं गमयतीति शुक्लशोणितसंयोगात्प्रागपि अनुभवितुस्सत्त्वसिद्धिः। अन्यथा कारणाभावान्नैवाऽऽकुञ्चनादिकं भवेत् तेषां बालानामिति। नच तस्य क्षुज्जृम्भादेरिव वस्तुशक्त्यैव भवतोऽतत्कारणत्वमाशंसनीयम्। प्रयत्नपूर्वकत्वेनोपलब्धेः। यदाहुः "प्रेरणाकर्षणे वायोः प्रयत्नेन विना कुतः" इति। नचावगमनात्पूर्वं प्रयत्नस्सम्भवति। बालानामपि तीव्रतररोदनानुमापितक्षुधाद्युपगमनसमर्थतया क्षणात्क्षणान्तरादहर्जातानामपि बालानां प्रयत्नविशेषेण प्राणरोधरक्षापूर्वकमाकर्षतां वमनादिपरिहारेण तृप्तिलक्षणफलप्राप्तिः। यावच्च निगिरतादर्शनात् हिताहितस्मरणावगमपूर्वकत्वं प्रयत्नादेरवगम्यत इति कुतोऽयं स्यात् वस्तुशक्त्यैव भवः। क्षुज्जृम्भादीनां तु केशनखादीनामिव हिताहितावगमपूर्वकत्वेन प्रयुक्तत्वाद्दृष्टेर्युक्त एव वस्तुसामर्थ्येनोद्भवः। न त्वाकुञ्चनादेः। अतस्तदन्यथानुपपत्त्यैव जन्मनः पूर्वमेव द्रष्टा सिद्धः। तदुक्तम् "आद्यः करणविन्यासः प्राणस्योर्ध्वं समीरणम्। स्थानानामभिघातश्च न विना पूर्ववेदनाम्" इति। यदुक्तम् अनुमानमसिद्धमस्माकमिति तत्परिहरति **नच वाच्यमित्यादि** आगमप्रमाणमपि तैरनिवार्यमित्याह **किञ्चेत्यादि**। **न परं प्रत्यक्षासिद्धत्व मिति** पृथिव्यादेरिति शेषः। **अत एवानुमानस्य**। **तत्प्रत्यायनार्थं चेति** प्रामाण्यप्रत्यायनार्थम्। अत एव यदुक्तं इन्द्रियचैतनिकैः शरीरस्य भोग्यत्वेऽपि शरीरव्यतिरिक्तानामिन्द्रियाणामेव द्रष्टृत्वात् नैतद्व्यतिरिक्ताऽऽत्म-

सिद्धिरिति । तदप्यनुमानेन निराकृतं वेदितव्यम् । यानि किल रूपाद्यन्यथानुपपत्त्या चक्षुरादीन्द्रियाणि लोके सिद्धानि तान्येव यदि भवद्भिश्चेतनानि निर्दिश्यन्ते तदयुक्तम् । तेषां दर्पणवत् करणतयैव सिद्धेः चैतन्यासम्भवात् । यदुक्तं सौगतैरपि "परापरप्रार्थनतो विनाशोत्पादबुद्धितः । इन्द्रियादेः पृथग्भूतमात्मानं वेत्त्ययं जनः" । इति । अथ ततोऽन्यानि स एवाऽऽत्मेति नास्ति विवादः । तस्मादिन्द्रियवर्गस्य युष्मन्मते भौतिकत्वेनास्मन्मते त्रैगुण्येन सङ्घतत्वात् शयनादेरिवान्यो भोक्ता प्रतिपत्तव्य इति । तेषां शरीरार्थत्वं तु शरीरस्यापि भोग्यत्वात् पूर्वमेव निराकृतमिति । यदुक्तं अनुमेयत्वादात्मनः परत्वमिति तत्परिहरति **नत्वित्यादि** एतच्च पूर्वमेव दर्शितमिति । उक्तार्थमुपसंहरति **गतमेतदिति** व्याख्यान्तरमाह **यत्तु परिणामस्येत्यादि** ॥ ६ ॥

वृत्तिः ।

एवं पशुपदार्थं प्रसाध्य तद्विशेषान् वक्तुमाह ।

**नाव्यापको न क्षणिको**
**नैको नापि जडात्मकः ।**
**नाकर्ताऽभिन्नाचिद्योगी**
**पाशान्ते शिवताश्रुतेः ॥ ७ ॥**

स चात्मा नाव्यापकः । नापि क्षणिकः । देशकालाभ्यामनवच्छिन्नत्वात् । तदाह "अनवच्छिन्नसद्भावं वस्तु, यद्देशकालतः । तन्नित्यं विभु चेच्छन्तीत्यात्मनो विभु

नित्यता" इति । न चासावेकः । "एको वशी सर्वभूता-न्तरात्मे"ति प्रतिपन्नानां ब्रह्मविदामिव जन्ममरणकरणा-दिप्रतिनियमदर्शनस्य पुरुषबहुत्वज्ञापकस्यापह्नोतुमशक्य-त्वात् । न च नैयायिकवैशेषिकाणामिव जडः । नापि सांख्यानामिवाकर्ता । नच केषाञ्चिदिवाऽऽगन्तुना चिता युक्तः । कुत इत्याह **पाशान्ते शिवताश्रुतेः** इति । पाशा-नामविद्यादीनामन्ते तत्प्रतिबन्धकव्यपगमे यतोऽस्यात्म-नश्शिवत्वव्यक्तिश्श्रूयते । तथाचोक्तम् "अथात्ममल-मायाख्यकर्मबन्धविमुक्तये । व्यक्तये च शिवत्वस्य शिवा-त्ज्ञानं प्रवर्तत" इति । नच तच्छिवत्वमव्यापकत्वादिधर्म-युक्तं ज्ञत्वकर्तृत्वादिरहितं वा । "नित्यं कालानवच्छे-दाद्वैतत्याच्च प्रदेशगम्"। इत्यादिना प्रागुक्ततत्तद्विलक्षण-स्योपपादितत्वात् । नच व्यापकत्वनित्यत्वादेर्मुक्तावेवो-दयात् संसार्यवस्थायामभाव इति मन्तव्यम् । असदुत्प-त्त्यसम्भवस्योपपादयिष्यमाणत्वात् । इति ॥ ७ ॥

इति श्रीभट्टविद्याकण्ठात्मजभट्टनारायणकण्ठविरचितायां
मृगेन्द्रवृत्तौ षष्ठं प्रकरणं समाप्तम् ।

## दीपिका ।

नाव्यापक इत्यादि सूत्रं व्याचष्टे **सचात्मेत्यादि** व्यापकत्वादीनि चात्मनः परमोक्षनिरासप्रकरणे प्रसङ्गात्साधितानीति नेह प्रतन्यन्ते। ननु जडोप्यसौ बाह्यार्थविज्ञानेन प्रकाश्यत इति नैयायिकभेदः । तन्न । अकर्मतयैव सर्वदा भासमानत्वादित्युक्तम्। नचास्मिन् जडात्मन्यर्थप्रकाशोऽप्युपपद्यते । तत्प्रकाशादात्मान्तरवत् । तथाहि अर्थप्रकाशोऽयं नार्थस्वभावः। तस्याविशेषात् सर्वप्रकाश्यताप्रसङ्गात् अपितु आत्मस्वभाव एव। तस्य चाप्रकाशत्वे सर्वाप्रकाश इत्यायातमान्ध्यमस्य जगतः । तदुक्तम् अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिध्यति" इति अजस्र एव आत्मा सिद्ध इति । येतु शरीराभावे चैतन्याभावात् नात्मस्वभावं चैतन्यमित्याहुः वैशेषिकानुवासनया । तान् प्रत्याह । **नच केषांचिदिवेत्यादि** तैरपि कर्मफलवज्ज्ञानमपि शक्तिरूपतया तत्रस्थमभ्युपगन्तव्यम् । असदुत्पत्तेस्सत्कार्यवादे निराकरिष्यमाणत्वात् । इति । ननु कर्मफलं बुद्धिस्थमेव भवद्भिरभ्युपगम्यते। सत्यम् । शक्तिरूपावस्थाने तु दृष्टान्तत्वमित्यविरोधः। अत एव संक्रान्तिवादोऽपि निरस्तः ॥

इत्यघोरशिवाचार्यविरचितायां मृगेन्द्रवृत्तिदीपिकायां
पशुपदार्थविचारप्रकरणं षष्ठं समाप्तम् ।

---

१. २१-श्लोक. । २ स्वस्य प्रकाशरूपत्वात् प्रकाशकर्मत्वं स्वस्मिन्नत्र सम्भवतीति भावः । एकस्यैव कर्तृकर्मविरोधात् ।

## अथ पाशलक्षणप्रकरणं सप्तमम् ।

वृत्तिः ।

"शिवः । पूर्वव्यत्यासितस्याणोः पाशजालमपोहति" इति मूलसूत्रोपात्तात् पशुपाशेश्वरलक्षणात् पदार्थत्रयादवशिष्टमनन्तरपटलोपेक्रान्तं[2] पाशपदार्थं लक्षयितुं प्रकरणत्रयम् । अत्र च सौत्रप्राकरणिकपाटलिकपादार्थिकास्संबन्धास्सुस्पष्टाः । वाक्यात्मकस्तु "प्रावृतीशबले[3] कर्म मायाकार्यं चतुर्विधम् । पाशजालं समासेन धर्मा नानैव कीर्तिताः" इत्यादिभिर्वाक्यैरनुसन्धेयः ।

**अथाविद्यादयः पाशाः**
**कथ्यन्ते लेशतोऽधुना ।**
**येषामपाये पतयो**
**भवन्ति जगतोणवः ॥ १ ॥**

अथेति पशुपदार्थानन्तरम् । अविद्या अज्ञानमञ्जनमाणवः पाशः आदौ येषां ते कर्ममायारोधशक्त्याख्याः पाशाः । अधुना इदानीं लेशतः संक्षेपतः कथ्यन्ते । येषामपगमे पाश्यत्वान्मुक्ताः अणवः आत्मानः जगतः

---

१. अथानादिमलापेतस्सर्वज्ञस्सर्वकृच्छिव इति पूर्वार्धनिष्ठशिवपदेन सह उत्तरार्धानुवादः । २. पाशान्ते शिवताश्रुतेरित्युपक्रान्तमित्यर्थः । ३. परमोक्षनिरासप्रकरणे षष्ठश्श्लोकोयम् ।

पतयो भवन्ति। तत्र शिववदन्यानधीनस्वातन्त्र्याभिव्यक्तिः मुक्तात्मनां पतिसमत्वम्। विद्येश्वराद्यधिकारभाजां तु पञ्चविधकृत्यकारित्वम्। अथ मुक्तेः प्राक्कुतोऽवसीयते पाशितत्वमणोरिति चेत् ज्ञानक्रिययोस्सर्वार्थताव्याहतेः ॥ १ ॥

## दीपिका ।

### पाशलक्षणप्रकरणं सप्तमम् ।

अथाविद्यादय इत्यत्र संबन्धकथनायाह शिव इत्यादि तत्र सूत्रसंबन्धः पाशजालमित्यनेन। प्राकरणिको विद्यापादतया। पाटलिकः पाशान्त इत्यनेन सूचितः। पादार्थिकः पाशपदार्थतया। वाक्यात्मकस्तु प्रोक्त एवेति। तत्र प्रथमतश्चतुर्विधानामसाधारणं स्वरूपं अविद्येत्यादिसूत्रेण वक्तव्यतया प्रतिज्ञायत इत्याह **अविद्येत्यादि**। **आणवः पाश इति** अणूनामनाद्यावारको मल इत्यर्थः। पतिशब्दार्थमाह **तत्रेत्यादि विद्येश्वरा**दीत्यादिग्रहणान्मन्त्रादयः। समलो न भवत्यात्मा शुद्धत्वात्। न चासिद्धो हेतुः साध्यसमो वेति मन्तव्यम्। यतस्स्वभावेन चेत् पुरुषस्समल एव। न तस्य मलो निवर्तयितुं शक्यः तत्स्वभावत्वात् नित्यत्वव्यापकत्ववदित्यनिर्मोक्षप्रसङ्गः। ततस्तदन्यथानुपपत्त्या निर्मलोऽभ्युपगन्तव्य इति परिहरति। **ज्ञानक्रिययोरित्यादि**। अयमर्थः। आत्मा केनाप्यनादिना बन्धेन बद्धः। परतन्त्रत्वात् मेषादिबद्धपशुवत् यस्स बन्धो मल इति मलसिद्धिः। इति ॥ १ ॥

---

१. प्राह्या इति शेषः।

वृत्तिः ।

अन्यथा हि ।

पाशाभावे पारतन्त्र्यं
वक्तव्यं किंनिबन्धनम् ।
स्वाभाविकं चेन्मुक्तेषु
मुक्तशब्दो निवर्तते ॥ २ ॥

पाशरहितस्य हि पुंसो न बद्धत्वम् । अबद्धस्य च किङ्कृतं[1] पारतन्त्र्यम् । यदनिच्छतोऽप्यस्यानिष्टप्राप्तिरिष्टव्याघातश्च भवति । अथ मन्यसे नास्य तत्पारतन्त्र्यं पाशकृतम्, अपि तु स्वाभाविकमिति तर्हि मुक्ताणुषु मुक्तशब्दस्य निवृत्तिः । व्यपगतपाशे हि मुक्तशब्दो लोके प्रसिद्धः ॥ २ ॥

दीपिका ।

पारतन्त्र्याभावे बन्धमुक्तिविशेषाभावप्रसङ्ग इत्याह अन्यथा हीत्यादि ननु समलत्वेऽपि तस्य स्वाभाविकत्वे मोक्षाभावप्रसङ्ग उदीरितः । तन्न । "अथ मन्यस" इत्यादिना शङ्कापूर्वं स्वाभाविकत्वनिराकरणादिति पारतन्त्र्यात्समल एवाऽऽत्माऽभ्युपगन्तव्य इति । ननु निर्मलत्वेऽपि तस्मिन् पुंसि प्रकृतेस्संबन्धी तामसो राजसश्च रागस्स्फटिकमणाविवौपाधिकस्संभवत्येव । अतो न बन्धमुक्तिविशेषाभावः । अत्रोच्यते । तस्यात्मनस्सं-

१. पुरुषस्येति शेषः ।

सारिणो यो रागकृतः तथा दर्शितः स मलनिमित्त एव । न निर्हेतुकः । निर्हेतुकत्वे न संसारावस्थायामेव रागो भवेत् मुक्त्यवस्थायामपि स्यात् । विशेषाभावात् । ननु यं पुरुषं प्रति प्रकृतिरनुपरताधिकारा तं प्रत्येव रागमुत्पादयति । नतु यं प्रत्युपरताधिकारेयं तं प्रतीत्यस्त्येव विशेषः । तत्किमनेन निर्निमित्तेन मलेनेति । तन्न । मलानभ्युपगमे प्रकृतिस्वाभाव्या-द्दुस्स्थानेष्वप्यशुद्धेषु भोगेषु तस्य स्वभाव[1]शुद्धस्य पुरुषस्य सक्तिर्न भवेत् । ब्राह्मणस्येवाशुद्धद्रव्येषु । तदुक्तं "यद्यशुद्धिर्न पुंसोऽस्ति सक्तिर्भोगेषु किंकृते"ति दृश्यते च तेषु सक्तिः । ततोऽवसीयते नायं स्वभावतो निर्मलः । अपि तु [2]समल एवेति । ननु रागतत्वनिन्धनेयं सक्तिरिति चेत् । तन्न । यदुत तदपि न निर्हेतुकं प्रवर्तते विशेषाभावादित्यनिर्मोक्ष एव । नाऽपि कर्मनिमित्तं पारतन्त्र्यमिति वाच्यम् । यतः कर्म हि बुद्धिधर्मत्वेन भवद्भि-रभ्युपगतम् । नतु नैयायिकादिभिरिवाऽऽत्मधर्मत्वेनाभ्युपगतम् । अतश्च बुद्धौ सत्यामेव [3]तस्य भवति । नतु प्रळयकेवलावस्थायां तदानीं बुद्धेरसम्भ-वात् । यदुक्त भवद्भिरपि "प्रकृतेर्महान् महतोऽहङ्कार" इति । अतस्तस्या-मवस्थायां बन्धमुक्त्योर्विशेषकं तत्कर्म न स्यादिति [4]पूर्वः प्रसङ्गः । यदुक्तं पराख्येऽपि "विशुद्धे तत्र रञ्जकं"इति । ननु मायैव मोहकत्वात् मलोऽस्त्विति मायामलवादिनः । प्रधानमेव वा [5]तमोमोहादिलक्षणेन पञ्चपर्वात्मना विपर्य-येण युक्तं मलस्तत्किमन्येनेति प्रकृतिमलवादिनः । अत्र ब्रूमः । स्वरूपेण माया मलस्स्यात् कार्यद्वारेण वा । न तावत्कार्यद्वारेण । तेषां कलादीनां स्वकार्यैरेव सिद्धेः कार्यान्तरहेतुत्वे प्रमाणाभावात् । अनेकतत्वपरिकल्पना-भावप्रसङ्गाच्च । किंच तेषां सृष्टिकाल एव संभवात् प्रलयकेवलावस्थायां प्रो[6]क्त एव प्रसङ्गः । स्वरूपेण मलत्वेपि तस्या भेदाभावादेकमुक्तौ सर्वमो-

---

१ सिद्धस्येति पाठभेदः । २. सक्त एवेति पाठभेदः । ३. आत्मन इत्यर्थः । ४ बन्धमुक्त्योर्विशेषाभावप्रसङ्ग इत्यर्थः । ५ आदिना महामोहतामिस्रान्धतामिस्रा ग्राह्याः । ६. बन्धमुक्त्योरविशेषप्रसङ्ग इत्यर्थः ।

क्षप्रसङ्गः इति। प्रतिपुरुषं भेदे तस्या अचैतन्ये सत्यनेकत्वात् कार्यत्वं बुद्ध्यादिवदिति ततोऽन्या माया वाच्या। तस्याश्च मलत्वे स एव प्रसङ्ग इति ततोऽप्यन्येत्यनवस्था। नच वाच्यं मलस्यैव तस्याः प्रतिपुरुषं शक्तिभेदा भविष्यन्ति इति शक्तेश्शक्त्यन्तरायोगात्। शक्त्यवस्थैव कारणं व्यक्त्यवस्थैव कार्यं इति वक्ष्यामः। ननु "मायाशक्तीर्व्यक्तियोग्याः प्रकुर्वन्ति"त्यादिना कथं मायायाश्शक्त्या योगः प्रोक्तः। अत एव तत्र कारणे कार्याण्येव शक्तिरूपेण स्थितानि नतु कारणस्य कार्यजनिकाश्शक्तय इत्युक्तम्। वक्ष्यामश्च सत्कार्यवादे। अथ जगत्कारणशक्तिभ्योऽन्यास्ता मलशक्तयः इत्युच्यन्ते यद्येवं सिद्धो व्यतिरिक्तो मल इति नाम्नि विवादः। एवं प्रकृतिमलपक्षेऽपि वाच्यमिति व्यतिरिक्तमलासिद्धिः। स चाऽऽत्मनां ताम्रकालिकावदनादिरिति। अत एव मलस्य वस्त्वन्तरत्वेऽपि पशुत्वेऽन्तर्भावः। तेन विना पशुत्वायोगात् ॥ २ ॥

वृत्तिः।

एतदेव घटयन्नाह।

बन्धशून्यस्य वशिता
दृष्टा बद्धस्य वश्यता।
एतावती ते बद्धत्व-
मुक्तत्वे बद्धमुक्तयोः ॥ ३ ॥

इयदेव तद्बद्धस्य बद्धत्वं यत्पाशितत्वे सत्यपाशितवश्यता[1]। स्वतन्त्रपरमेश्वरायत्तत्वमित्यर्थः। मुक्तस्य चैतावदेव तन्मुक्तत्वम्। यद्बद्धत्वापगमात्तद्वशित्वं स्वातन्त्र्या-

1 पतिस्वरूपनिरूपणप्रकरणान्तिमश्लोकः।

भिव्यक्तिः । तथाहि लोके च बन्धरहितो वशी बद्धश्च वश्य इत्युच्येते ॥ ३ ॥

वृत्तिः ।

किमत इत्याह ।

**तत्पारतन्त्र्यं बद्धत्वं**
**तस्मिन्नित्ये चिदादिवत् ।**
**मुक्तिसाधनसन्दोहो**
**व्यर्थोलमनयाधिया ॥ ४ ॥**

तत्तस्माद्धेतोर्यदेतदात्मन इष्टप्राप्त्यादौ पारतन्त्र्यं तद्बद्धत्वमवगमयतीति शेषः । नह्यबद्धस्य स्वातन्त्र्यव्याघातो भवतीति । न चैतदात्मनोऽनादिकालीनतया ज्ञानक्रियाशक्तिवन्नित्यमेष्टव्यम् । अनिष्टप्रसङ्गात् । तथाहि तस्मिन्नित्ये चिदादिवदिति तस्मिन्नात्मनः पारतन्त्र्ये नित्येऽभ्युपगम्यमाने कदाचिदपि तदनुच्छेदात् मुक्तिसाधनकलापः परैरपीष्टो ज्ञानयोगादिरनर्थकः । स्वातन्त्र्याभिव्यक्त्यभावात् । सदैवाऽऽत्मनो बद्धतयाऽवस्थितेरित्यलमनया धिया निवार्यतामीदृशी संसारानुच्छित्तिहेतुर्मतिरिति भावः । तस्मात्स्थितमेतत्पाशकृतं पारतन्त्र्यम् । पाशाश्चांजनादयः ॥ ४ ॥

दीपिका ।

अनादित्वेऽपि न तत्पारतन्त्र्यं नित्यमित्याह । न चैतदात्मन इत्यादि ॥ ४ ॥

वृत्तिः ।

स किलाऽऽत्मा ।

नित्यव्यापकचिच्छक्ति-
निधिरप्यर्थसिद्धये ।
पाशवं शाम्भवं वापि
नान्विष्यत्यन्यथा बलम् ॥ ५ ॥

यदि ह्यणुरनाद्यविद्योपरुद्धचिच्छक्तिर्न भवेत् तदा नित्यव्यापकचिच्छक्त्यास्पदत्वे सत्यपि कथं भवावस्थायां भोगलक्षणस्यार्थस्य निष्पत्तये पशोरिदं पाशवं पशूचितं कलाद्युत्तेजनं स्वसामर्थ्यस्यान्विष्यत्यपेक्षते । मुक्तिनिमित्तं च कथं शाम्भवं बलमन्वेष्टि । नान्यथा बलं प्रतीक्षते । पाशानभ्युपगमे सति स्वभावत एवामलचित्स्वरूपत्वात् तदन्वेषणस्याऽऽनर्थक्यात् । यतश्चावस्थाद्वयेऽप्ययं पाशवं वा पारमेश्वरं वा बलोत्तेजनमपेक्षते तस्मात्किमप्यस्यास्ति ज्ञानक्रियासन्निरोधकम् । यत्कृतस्स्वातन्त्र्यव्याघातः ॥५॥

दीपिका ।

पारतन्त्र्याद्बद्ध इत्यमुमेवार्थं व्यतिरेकेण साधयति स किलाऽऽत्मेत्यादि ॥ ५ ॥

वृत्तिः ।

तदावरणमस्याणोः
पञ्चस्रोतसि शांकरे ।
पर्यायैर्बहुभिः प्रोक्त-
मदृष्टं पशुभिस्सदा ॥ ६ ॥

अस्याऽऽत्मनस्तदावरणमञ्जनं पञ्चस्रोतसि शैवे शास्त्रे वक्ष्यमाणैर्नामभिरभिहितम् । तत्तु पशुभिः पशुशास्त्रप्रणेतृभिः कदाचिदपि न बुद्धम् ॥ ६ ॥

वृत्तिः ।

अथ कैर्नामभिस्तच्छास्त्रेषूक्तमित्याह ।

पशुत्वपशुनीहार-
मृत्युमूर्च्छामलांजनैः ।
अविद्यावृतिरुग्ग्लानि-
पापमूलक्षयादिभिः ॥ ७ ॥

नच तदेकैकस्मिन्नात्मानि भिन्नम् । अपितु एकं अनेकचिदावारकशक्तियुक्तमित्याह ।

**तदेकं सर्वभूताना-**
**मनादिनिबिडं महत् ।**
**प्रत्यात्मस्थस्वकालान्ता-**
**पायिशक्तिसमूहवत् ॥ ८ ॥**

वृत्तिः ।

तदावरणं चतुर्दशविधस्याऽपि भूतसर्गस्यैकमेव । कस्मादित्यत्रैव विशेषणद्वारेण हेतुमाह **अनादीति** । यस्माद्वक्ष्यमाणयोपपत्त्या तत्सर्वभूतानामनादि । न मायीयबन्धनवदागन्तुकम् । अत एवैकम् । अनेकत्वे हि तस्याचेतनत्वात् कारणान्तरपूर्वकत्वेनानादित्वानुपपत्तिः । न च कारणान्तरपूर्वकत्वेऽपि कलादिवत्पारम्पर्येण बन्धकत्वादनादित्वं भविष्यतीति वाच्यम् । यथोक्तं श्रीमत्किरणे "यथाऽनादिर्मलस्तस्य कर्माप्येवमनादिकम् । यद्यनादि न संसिद्धं वैचित्र्यं केन हेतुना । तस्मादनादिकं कर्म मायाप्येवं भवेत्तथे"ति । तद्विरहिणश्शिवस्येव पुनर्बन्धासम्भवात् । तत्सद्भावे वा न मलरहितत्वमिति वक्ष्यामः । **निबिडम्** । घनमभेद्यमित्यर्थः । व्यापकानामात्मनामावारकत्वात् । **महत्** । प्रत्यात्मस्थेन स्वस्वपरिणामकालापसारिणा शक्तिव्रातेन युक्तम् । तथाचोक्तं तत्वत्रयनिर्णये

"[1]मलशक्तयो विभिन्नाः प्रत्यात्मानं च तद्गुणावरिकाः" इति ॥ ८ ॥

## दीपिका ।

ननु मलस्यैकत्वात् तस्मादेकस्याद्विमुक्तः सर्वमोक्षप्रसङ्ग इत्याह नच तदेकैकस्मिन्नित्यादि । चतुर्दशविधस्येत्यादि प्रसिद्धत्वाद्बद्धात्मनामुपलक्षणत्वेनैतत्प्रोक्तमित्यविरोधः । प्रत्यात्मस्थेनेत्यादि । नच तदावरणमचेतनत्वात्स्वयं निवर्तते । नाप्यात्मज्ञानान्निवर्तयितुं शक्यम् । द्रव्यत्वात्पटलादिवत् । यथाहि पटलं विज्ञातमपि चक्षुर्वैद्यव्यापारं विना निवर्तयितुमशक्यं तथेदमपि द्रव्यत्वादीश्वरव्यापारेण दीक्षाख्येन विना निवर्तयितुमशक्यमित्युक्तम् । वक्ष्यामश्च ॥ ८ ॥

## वृत्तिः ।

तच्चाञ्जनम् ।

**तदनादिस्थमर्वाग्वा**
**तद्धेतुस्तदतोऽन्यथा ।**
**रुणद्धि मुक्तानेवं चे**
**न्मोक्षे यत्नस्ततो मृषा ॥ ९ ॥**

तत्तेषामात्मनामनादौ काले स्थितमनादिस्थम् । न त्वादिमत्वेन स्थितम् । अत्रैव युक्तिमाह अर्वाग्वेति ।

---

१. ११-तमश्लोकः ।

यदि ह्यादिमत्त्वेनाऽऽत्मसु स्थितं तदभ्युपगम्यते तदा तद्योगे हेतुर्वाच्यः इत्यध्याहारः **तदतोऽन्यथेति**। यदि तु तदञ्जनं अतोऽन्यथेति हेतुमनपेक्ष्यैवाऽऽत्मानमाश्लिष्यति। तदानीं मुक्तानप्यात्मनो रुणद्धि उपरुद्धदृक्क्रियान् करोतीति प्रसक्तम्। अस्तु को दोष इति चेत्। **मोक्षे यत्नस्ततो मृषेति** मुक्तात्मानो यदि पुनः पुनः मलेन युज्यन्ते ततो गजस्नानप्राये मोक्षेऽस्मिन् मिथ्यैव यत्नः। भूयोऽपि मलयोगतः संसारितायास्सम्भवात्। तस्मान्नागन्तुक आत्मनां मलः। किं तर्हि अनादिः। तथाचोक्तं श्रीमत्स्वायम्भुवादौ। "अथानादिर्मलः पुंसां पशुत्वं परिकीर्तितमि"ति ॥ ९॥

दीपिका।

अनादित्वमेव साधयति तच्चाञ्जनमित्यादि ॥ ९॥

वृत्तिः।

अथाऽस्यैव युक्त्यन्तरमाह।

**तदेकं बहुसंख्यं तु**
**तादृगुत्पत्तिमद्यतः।**
**किंतु तच्छक्तयो नैका**
**युगपन्मुक्त्यदर्शनात् ॥ १० ॥**

तदंजनमेकम् । अनेकत्वे प्रमाणाभावात् । **यतो** यस्मात् । **तादृगिति** तथाविधमनेकत्वपरिणामित्वादिगुण-युक्तम् । यदनेकं तत् घटादिवदुत्पद्यमानं दृष्टम् । न चैतदुत्पत्तिमत् । अनाद्यात्मावारकत्वात् । अत एवैकम् । अनेकत्वे हि कारणपूर्वकत्वात् अस्याऽऽदिमत्वं स्यात् । "प्रत्यात्मस्थस्वकालान्तापायिशक्तिसमूहवदि"ति यदुक्तं तदुपपादयितुमाह । **किन्तु तच्छक्तय इति** एकस्याप्य-स्यानेकाः प्रत्यात्मस्थाश्चित्क्रियासन्निरोधिका अनित्याश्श-क्तय एष्टव्याः । अन्यथैकत्वे सत्येकस्मात्पुरुषादपसृते तस्मिन् सर्वेषां तुल्यकालं मुक्तिस्स्यात् । यतस्तु न मुक्ति-यौगपद्येनोपलभ्यते तस्मात्कारणात्तच्छक्तिबहुत्वाभ्युपगमो युक्तः ॥ १० ॥

## दीपिका ।

**अथास्यैव युक्त्यन्तरमाहेति** । एकत्व इति शेषः ॥ १० ॥

## वृत्तिः ।

**नच तास्तच्छक्तयस्स्वातन्त्र्येण रुन्धन्ति अपसरन्ति वा । किं तर्हि । प्रावृतीशबले कर्मेत्यादिना** प्राञ्जलेन नान्तरीयकतयोद्दिष्टां[1] परमेश्वररोधशक्तिं व्यापारेण लक्ष-यति ।

---

१. यदन्तरा यन्नोत्पद्यते तन्नान्तरीयकम् । मलानुवर्तनादेव तिरोधानशक्तेः पाशत्वान्मलेन नान्तरीयकत्वं तिरोधानशक्तेरिति बोध्यम् ।

तासां माहेश्वरी शक्ति-
स्सर्वानुग्राहिका शिवा ।
धर्मानुवर्तनादेव
पाश इत्युपचर्यते ॥ ११ ॥

तासां मलशक्तीनां चित्क्रियासान्निरोधकत्वलक्षणस्य धर्मस्यानुवर्तनाद्धेतोश्शैवी शक्तिः पाशतयोपचर्यते । नच तत्र मुख्यं पाशत्वम् । कुत इति विशेषणद्वारेणात्रैव हेतुः । सर्वानुग्राहिका शिवेति । सा हि सकलजगदनुग्रहस्वभावत्वेन तच्छ्रेयःप्रसाधिका ॥ ११ ॥

दीपिका ।

इत्थं मलाख्यं पाशं प्रतिपाद्य रोधशक्त्यात्मकमपि प्रतिपादयितुं तासामित्यादिसूत्रमवतारयति । नच तास्तच्छक्तय इत्यादि । कथं पुनर्मलानन्तरं रोधशक्तेरेव प्रतिपादनं न मायादेरत आह प्राग्वतीत्यादि । उद्देशक्रमेण पाशानां प्रतिपादनमित्यर्थः । तदेव सूत्रं व्याचष्टे तासामित्यादि एकस्या एव शक्तेरौपाधिको भेद इत्युक्तम् । ततश्चाचेतनत्वान्मलशक्तीनामित्युपलक्षणं मलादिपाशानाम् । चेतनाधिष्ठानप्रसिद्ध्यसम्भवात् तद्धर्मानुवर्तनं कुर्वाणायाश्शिवशक्तेरुपचारात्पाशत्वमित्युक्तं पूर्वमेवेति । यद्वक्ष्यति "मायायास्साधिकारायाः कर्मणश्चोक्त एव तदि"ति ॥ ११ ॥

---

१ एतत्प्रकरणान्तिममिदं पद्यम् ।

वृत्तिः ।

एवं च ।

परिणामयती ताश्च
रोधान्तं कार्कचित्विषा ।
यदोन्मीलनमाधत्ते
तदाऽनुग्राहिकोच्यते ॥ १२ ॥

परिणामशब्दात्“तत्प्रातिपदिकाद्धात्वर्थे” इति णिचि कृते परिणामयतीति रूपम् । एताश्च सर्वभूतगतास्तस्य[1] संबन्धिनीश्शक्तीः । रोधान्तं तदधिकारकालं यावत् परिणामेन योजयति पतिशक्तिः । कार्कचित्विषा हेतुभूतयोन्मीलनं यदा करोति तदाऽनुग्राहिकेत्युच्यते । क शब्देन मूर्धा सदानुग्रहैकव्यापार ईशानः । ईशानमूर्धा इति मन्त्रलिङ्गम् । स एव सकलजगदनुग्रहे नित्योद्युक्तत्वादर्केणोपमितः । ततः प्रवृत्तया परश्श्रेयःप्रकाशिकया ज्ञानभासा तयोन्मीलितस्वरूपाणामणुवर्गाणां यदोन्मीलनमाशयविकासनं करोति तदाऽनुग्राहिका भण्यते ॥ १२ ॥

दीपिका ।

एकत्वमेव शक्तेस्साधयति एवं चेत्यादि ॥ १२ ॥

---

१. तस्येति मलस्येत्यर्थः ।

वृत्तिः ।

अत्र मुनिः प्रश्नयति ।

शम्भोश्चिदाद्यनुग्राह्यं
तद्विरोधितया मिथः ।
युगपन्न क्षमा शक्ति-
स्सर्वानुग्राहिका कथम् ॥ १३ ॥

न च भूतोपकारार्थं
प्रवृत्तस्य जगत्प्रभोः ।
अपकारकमाविश्य
युज्यते किंच तोदनम् ॥ १४ ॥

चितस्सकलात्मानः आदिग्रहणादाचितः मलकर्ममायातत्कार्याणि । तदेतत्सर्वं सर्वेशत्वादेव किल परमेश्वरस्यानुग्राह्यम् । तच्चानुग्राह्यत्वमेषां चिदचितां पाश्यपाशानां तुल्यकालं न घटते । तथाहि अचितां पाशानामनुग्रहे पाश्यस्य प्रत्युत तिरस्कारस्स्यात् नानुग्रहः । चितामनुग्रहे च तद्बन्धानां न्यग्भवनमिति परस्परविरोधित्वाद्युगपदेषामनुग्रहानुपपत्तिः । तत्कथं सर्वानुग्राहिका शक्तिरुक्ता । कृपया सर्वभूतानामनुग्रहप्रवृत्तस्य पत्युरुपकारक-

स्यापकारकं दुःखदमाणवादिपाशजालमनुगृह्याऽऽवृत-द्वाक्क्रियाशक्तित्वादस्वातन्त्र्यादिदुःखव्यथितानामप्यात्मनां बन्धकानुग्रहेण व्यथितव्यथनं न युक्तमिति पूर्वः पक्षः ॥१४॥

दीपिका ।

शम्भोरित्यादिप्रश्नसूत्रद्वयं व्याचष्टे चित इत्यादि सकलात्मानः सर्वे पश्चात्मान इत्यर्थः । ननु सकला एवेति [1]प्रसिद्धास्सिद्ध्यन्तीति । एत-देवाङ्गीकृत्यात्रापि पूर्ववत्कार्यविशेषादेव कारणविशेषस्सिद्ध इति व्याख्येयम् । विज्ञानाकलप्रलया[2]कलयोरप्यनुग्राह्यत्वात् ॥ १४ ॥

वृत्तिः ।

सिद्धान्तस्तु ।

**न तोदनाय कुरुते**
**मलस्याणोरनुग्रहम् ।**
**किन्तु यत्क्रियते किंचित्**
**तदुपायेन नान्यथा ॥ १५ ॥**

सत्यं चिदचितामनुग्राहिका शक्तिः । न चास्या-स्तुल्यकालमपि तदनुग्रहोऽनुपपन्नः । परस्परविरोधाभावात् । न त्वणोर्व्यथनार्थं मलस्य परिणामरूपमनुग्रहं करोति ।

---

१ मलत्रययुताः प्रसिद्धास्सकला इत्यर्थः । २. ग्राहकत्वादिति पाठभेदः ।

अपित्वनुग्रहायैव। तत्र हि यत्किञ्चिदुपायेन कर्तुमुचितम्। नानुपायेन। अयं च साधूपायः ॥ १५ ॥

दीपिका।

सिद्धान्तसूत्रं व्याख्यातुं पीठिकां रचयति। सत्यमित्यादि। प्रथमचोद्याभावं प्रतिजानाति नचास्या इत्यादि द्वितीयचोद्याभावमपि प्रतिजानाति। न त्वणोरित्यादि। तत्र प्रथमप्रतिज्ञामुपपादयति तत्रहीत्यादि। चिदनुग्रहायैव चिद्धर्मानुवर्तनम्। तस्य च शिवत्वव्यक्त्यै अचिदनुग्रहपूर्वकालभावित्वात् प्रोक्तविरोधाभाव इत्यर्थः ॥ १५ ॥

वृत्तिः।

यदुत।

न साधिकारे तमसि
मुक्तिर्भवति कस्य चित्।
अधिकारोऽपि तच्छक्तेः
परिणामान्निवर्तते ॥ १६ ॥

सोऽपि न स्वत एव स्या-
दपि योग्यस्य वस्तुनः।
सर्वथा सर्वदा यस्मा-
च्चित्प्रयोज्यमचेतनम् ॥ १७ ॥

यावत्किल मलस्याऽधिकारः तावन्न मुक्तिः कस्यचिद्भवति। तन्निवृत्तिरेव मुक्तिशब्दाभिधेया यतः। अधिकारश्च तच्छक्तेः परिणामात् समाप्यते। स च परिणामः तदर्हस्याऽपि वस्तुनः न स्वतो भवितुं शक्तः। सर्वप्रकारं सार्वकालं चाचेतनस्य चेतनप्रयुक्तस्य तत्तत्कार्यदर्शनात्। तस्मादनुग्रहस्य तदर्थं चाञ्जनादिपरिणामस्य च परस्परमविरोध इति प्रथमचोद्यनिरासः॥ १७॥

वृत्तिः।

अथ द्वितीयस्य परिहारः।

यथा क्षारादिना वैद्य-
स्तुदन्नपि न रोगिणम्।
कोटाविष्टार्थदायित्वात्
दुःखहेतुः प्रतीयते॥ १८॥

पाशावृतदृक्क्रियावृत्तिष्वणुषु तत्तत्पाशशक्त्यनुवर्तनद्वारेण जन्म[1]द्रावणादिदुःखदायित्वाद्वामोऽपि परमेश्वरस्तदभ्युदयायैव प्रवृत्तत्वान्न दुःखहेतुरवगम्यते। यथा वैद्यः क्षारशस्त्रादिना रोगिणं व्यथयन्नपि कोटावन्तेऽभिमतस्या-

१ द्रुगताविति धातोर्ल्युटि अनादेशे द्रावणमिति रूपम्। मृतिरित्यर्थः।

रोग्यलक्षणस्यार्थस्य साधकत्वात् व्यथनहेतुरपि न दुःख-दायित्वेन ज्ञायते ॥ १८ ॥

दीपिका ।

अत एव द्वितीयचोद्यस्याप्यभावो दृष्टान्तद्वारेण यथेत्यादिना प्रद-र्श्यत इत्याह यथेत्यादि ॥ १८ ॥

वृत्तिः ।

ननु अत्यन्तशुद्धस्वरूपस्य परमेश्वरस्य भगवतः किं पाशबन्धनानुवर्तनेनेत्याह ॥

**सर्वगत्वान्महेशस्य**
**नाधिष्ठानं विहन्यते ।**
**नच यत्राऽस्ति कर्तव्यं**
**तस्मिन्नौदास्यमेति सः ॥ १९ ॥**

अचिदधिष्ठानं भगवतो न विहन्यते । सर्वगत्वा-न्महेशतया सर्वकर्तृत्वाच्च यत्र यत्र कर्तव्यं किमप्यस्ति तत्र तत्र चासौ तादर्थ्यमेत्य[1]ाऽपि तत्तत्कर्तुरधिष्ठानेन स एव सर्वं करोतीत्युक्तमीश्वरसिद्धौ । उदास्त इत्युदासः तस्य भाव औदास्यं अकर्तृत्वमित्यर्थः ॥ १९ ॥

वृत्तिः ।

तदेवं युगपत्सर्वानुग्राहिकत्वं प्रसाध्य तदेव घटयन् अनुग्रहशब्दार्थमाह ।

---

१. तादात्म्यमिति पाठभेदः ।

धर्मिणोऽनुग्रहो नाम
यत्तद्धर्मानुवर्तनम् ।
न सोऽस्ति कस्यचिज्जातु
यः पत्या नानुवर्त्यते ॥ २० ॥

धर्मिणोऽनुग्राह्यस्य धर्माणां यदनुवर्तनं सोऽनुग्राहक[1]स्यानुग्रहः । क्रमविकस्वरस्वरूपाणां पद्मानामिव विवस्वतस्स इति । तथाविधो धर्मः कस्यचिदपि धर्मिणो नास्ति । यः परमेश्वरेण नानुवर्त्यते नाधिष्ठीयते तस्य सर्वव्यापकत्वात् ॥ २० ॥

दीपिका ।

अनुग्रहशब्दार्थमाह धर्मिण इत्यादि उत्तरार्धेनेशस्य सर्वाधिष्ठानमुच्यत इत्याह कस्य चिदित्यादि ॥ २० ॥

वृत्तिः ।

एवं च ।

गताधिकारनीहार-
वीर्यस्य सत एधते ।
पशोरनुग्रहोऽन्यस्य
तादर्थ्यादस्ति कर्मणः ॥ २१ ॥

गतस्समासः श्रेयोद्दृक्प्रतिरोधकत्वरूपोऽधिकारो

१. अनुग्राह्यस्येति पाठभेदः ।

यस्य तद्गताधिकारं नीहारस्य तमसो मलस्य सम्बन्धि वीर्यं सामर्थ्यं यस्य तस्य तथाविधस्य सतः पशोः बद्धात्मनोऽनुग्रहः एधते वर्धते बहुळीभवति। निवृत्ताधिकारायां मलशक्ताविति यावत्। अन्यस्य तु मलादेः पाशजालस्य यत्कर्मणः परिणामित्वादेस्तादर्थ्यं तत्प्रयोजकत्वं तस्मादनुग्रहो भवति। बद्धात्मविमुक्त्यै यत्परिणामिताप्रयोजकत्वं स एव पाशानामनुग्रह इत्यर्थः॥ २१॥

दीपिका।

गतेत्यादिनोक्तार्थ एवोच्यत इत्याह **एवं चेत्यादि**॥ २१॥

वृत्तिः।

एवं च प्रकृते किं व्यवस्थितमित्याह।

**बोद्धृत्वपरिणामित्व-**
**धर्मयोरनुवर्तनम्।**
**मलस्य साधिकारस्य**
**निवृत्तेस्तत्परिच्युतौ॥ २२॥**

**मलस्य साधिकारस्येति** आणवस्यांजनस्याधिकारनिवृत्तेस्तद्भावभाविन्या अनादिकालीनायाः परमेश्वररोधशक्तेरपगमौन्मुख्याः परिच्युतौ किञ्चिच्छिथिलीभावे सति बोद्धृत्वधर्मानुवर्तनमात्मनोऽनुग्रहः। परिणामित्वधर्मानुवर्तनं पाशानामिति॥ २२॥

दीपिका ।

बोद्धृत्वेत्यादिनोत्तरार्धोपसंहार इत्याह । एवञ्च प्रकृत इत्यादि परिच्युताविति व्याचष्टे । तद्भावभाविन्या इत्यादि ॥ २२ ॥

वृत्तिः ।

उपसंहरन्नाह ।

**इत्येवं यौगपद्येन**
**क्रमात्सुघट एव हि ।**
**मायायास्साधिकारायाः**
**कर्मणश्चोक्त एव सः ॥ २३ ॥**

इत्येवमुक्तया युक्त्या यौगपद्येन चिदचिदनुग्रहो न विरुद्धः क्रमात्सुघट एव न दुरुपपादः । मलवच्च मायायाश्च कलादिक्षित्यन्तस्वाधिकारसहितायाः कलाद्याविर्भावलक्षणस्तदुपसंहारात्मकश्च कर्मणस्तु फलदानौन्मुख्याऽऽपादनात्मकः । सोऽयमनुग्रहो मायाकर्मणोरनुक्तोऽप्युक्त एव विज्ञेयः । "सर्वथा सर्वदा यस्माच्चित्प्रयोज्यमचेतनं"इति । सामान्येन सर्वस्यैवोक्तत्वादिति ।

इति श्रीभट्टविद्याकण्ठात्मजभट्टनारायणकण्ठविरचितायां
मृगेन्द्रवृत्तौ पाशपरीक्षाप्रकरणं समाप्तम् ।

---

१. अस्मिन्नेव प्रकरणे १७-तमश्श्लोकः ।

दीपिका।

इदानीं प्रौढवादितया सूर्यादिवदीश्वरस्य सन्निधिमात्रेणानुग्राहकत्वात् युगपदपि चिदचिदनुग्रहो नानुपपन्नः। किं पुनः क्रमादित्येवमुपसंहारव्याजेनोच्यत इत्याह। उपसंहरन्नित्यादि।

इत्यघोरशिवाचार्यविरचितायां मृगेन्द्रवृत्तिदीपिकायां
सप्तमं मलादिविचारप्रकरणं समाप्तम्।

---

अथ कर्मविचारप्रकरणमष्टमम्।

अथ पाशपदार्थपरीक्षाधिकारात् [1]समनन्तरपटलान्तसूचितकर्मपाशपरीक्षाप्रस्तावः। पदार्थादिसम्बन्धाश्चास्य प्राक्तनप्रकरणारम्भ एवोक्ताः।

**अथेन्द्रियशरीरार्थै-**
**श्चिद्योगस्यानुमीयते।**
**निमित्तमागामिभावात्**
**यतो नागाम्यहेतुमत्॥ १॥**

अथेत्याणवरोधशक्त्याख्यपाशद्वयविचारानन्तरम्। इन्द्रियैरन्तःकरणबहिःकरणैश्शरीरेण च स्थूलसूक्ष्मरूपेणार्थैश्चेन्द्रियार्थैर्विषयैर्योगाश्चिदात्मनो योगस्तस्याऽऽगामिभावादुत्पत्तिमत्वात् कारणं निमित्तमनुमीयते। न ह्युत्पत्तिमच्चाहेतुकं किंचिद्भवति॥ १॥

---

१. कर्मणश्चोक्त एव सः इत्यव्यवहितपूर्वपटलान्तसूचित इत्यर्थः।

## दीपिका ।

## अथ कर्मविचारप्रकरणम् ।

अथेन्द्रियेति प्रकरणस्य प्रस्तावमाह **अथेत्यादि** । **पदार्थादिसम्बन्धाश्चेत्यादि** तत्र पाटलिकस्सम्बन्धः "कर्मणश्चोक्त" इति पूर्वपटलान्ते सूचितः । वाक्यात्मकोऽपि "तथा बीजं शरीरादे"रित्यादिवाक्यैः । अन्ये तु सम्बन्धाः पूर्वप्रकरणोक्ता एव । तत्र देहव्यतिरिक्तत्वेन पशुपदार्थप्रकरणे समलत्वेन चानन्तरप्रकरणे[1] साधितस्याऽऽत्मनो देहादिसम्बन्धस्य कारणमनेन प्रकरणेन साध्यत इत्याह **इन्द्रियैरित्यादि** निमित्तमिति चात्र सहकारिकारणमेवोच्यते । ईश्वरस्य निमित्तकारणत्वात् । यदुक्तं मतङ्गे "निमित्तकारणं त्वीश"[2] इति वक्ष्यति चात्र "ईशाविद्याद्यपेक्षित्वात्सहकारि तदुच्यते" इति । ततश्चायमर्थः । योयश्चिदात्मनो भोगसाधनेन देहादिना संयोगः तस्य तन्त्वादिसंयोगस्येवोत्पाद्यत्वात् केन चित्सहकारिणा भवितव्यं यत्तत्सहकारि तत्कर्मेति । यदुक्तं स्वायम्भुवे "कर्मतश्च शरीराणि विषयाः करणानि च" इति । ननु सर्गारम्भभाविनां शरीराणां न कर्महेतुत्वम् । अपितु तदुत्तरकालभाविनामेव । यदाहुः "आद्यो देहः पुरुषार्थमूलस्ततोऽप्यन्ये कर्ममूलाः प्रतिपन्ना" इति । तन्न । पुरुषाणां हि सर्वदा शरीरादि भोगवैचित्र्यान्यथानुपपत्त्या कर्मणस्सत्वं सिद्धं इति सृष्टिकालेपि पशुपक्षिमृगसरीसृपस्थावरमानुषादेर्जन्मवैचित्र्यश्रुतेः । महाप्रलयेऽपि कर्मसिद्धितः प्रागनादिकर्मशरीरबन्धस्सिध्यति ॥ १ ॥

## वृत्तिः ।

**इत्थं सामान्येन कारणमात्रं प्रसाध्य तद्विशेषं वक्तुमाह ।**

---

१. अव्यवहितपूर्वप्रकरण इत्यर्थः । २. मतङ्गे विद्यापादे पुंप्रधानेश्वरपटले ९९-तमश्लोकः ।

तस्य प्रदेशवर्तित्वा
वैचित्र्यात्क्षणिकत्वतः ।
प्रतिपुंनियतत्वाच्च
सन्ततत्वाच्च तद्गुणम् ॥ २ ॥

तस्येन्द्रियशरीरार्थैश्चितां योगस्य यत्सुरनरतिर्यगादिनियतस्थानवर्तित्वं, यच्च वैलक्षण्यं विचित्राणि हि प्राणिनां शरीराणीन्द्रियाणि विषयाश्च दृश्यन्ते। तत्र जातिदिग्देशकालादिवैचित्र्यं तावत्प्रसिद्धम् । इन्द्रियवैचित्र्यमपि। यथा-परावृत्तजिह्वावत्वं गजानां चक्षुश्श्रवस्त्वं भुजङ्गमानाम् । अनालोकालोकित्वमुलूकादीनां पुरुषाणां च केषांचिद्विपुलदृशामपि अदर्शनं गृध्रप्रायाणामपि सूक्ष्मार्थदर्शित्वमिति । विषयवैचित्र्यं तु यथाजलधरनिपतज्जलकणोपजीवित्वं चातकानां मयूराणामपि अवकराहारत्वं कुक्कुटादीनाम्। कमलकिञ्जल्करसास्वादनं मधुकरसारसानामित्यादि । यतश्च क्षणिकत्वमनित्यता देहादेः। यस्माच्च प्रतिपुरुषनैयत्यम् । न हि शरीरेन्द्रियविषयाणां साधारण्यं भोगसाम्यप्रसङ्गात् । यतश्च तत्सन्ततत्वं तत्तत्कारणप्राणिसन्ततत्वेन किल जन्मान्तरेऽपि शरीरेन्द्रियादि स्थितम् । यथा-जात्यायुर्भोगप्रदेभ्यः कर्मभ्यः आयुः

१. अन्धप्रायाणामपीति पाठभेदः । २. अत्रापिश्चार्थः ।

प्रदस्योपक्षीणत्वात् मृतस्याऽपि तस्यैव जातिभोगप्रदे कर्मणी सन्तत्या त्ववतिष्ठेते । न त्वन्यमुपसर्पतः। ताभ्यां च तत्तज्जातिदेहेन्द्रिययोगः क्रियते । यत एवं तस्मात्कारणात्तत्तदपि कर्म तादृग्गुणं तत्तद्देशवर्तिनो विचित्रान् विनश्वरान् प्रत्यात्मनियतान् भवान्तरभाविनश्च देहेन्द्रियार्थान् दातुं क्षममित्येवमनुमीयते । कारणासम्भविनां गुणानां कार्येष्वनुपलब्धेः ॥ २ ॥

## दीपिका ।

प्रतिपुरुषं स्वरूपभेदेन तस्याचैतन्ये सत्यनेकत्वाद्वा कार्यत्वं बुद्ध्यादिवदिति तस्येतिसूत्रेणोच्यत इत्याह । **इत्थमित्यादि** । क्षणिकत्वं च न बौद्धवत्प्रतिक्षणविनाशित्वमित्याह । **अनित्यतेत्यादि** प्रतिक्षणविनाशित्वे कर्मणां कालान्तरफलदायकत्वं नोपपद्यत इति भावः । **तत्तत्कारणप्राणिसन्ततत्वेनेत्यादि** । तत्र सूक्ष्मशरीरस्याऽऽकल्पमनुग्रहान्तं वाऽवस्थानात् सन्ततत्वं स्थूलशरीरादीनां तु तत्तत्कारणानां कर्मणां सन्तत्यावस्थानात् तान्यपि शरीरादीनि सन्तत्या स्थितानीत्युच्यन्ते । अत एवाह **यथेत्यादि** अत एव "नैकस्मिन्न क्रममिति न्यायात् जात्यायुर्भोगप्रदैः कर्मभिश्शरीरमारभ्यत इति प्रसिद्धम् । **प्रत्यात्मनियतानिति** । अत एव तत्प्रत्यात्मभिन्नमात्मनामेव कर्तृत्वमिति भावः । ननु पुरुषस्य कर्मपारतन्त्र्येणास्वातन्त्र्यात् अकर्तृत्वप्रसङ्गः । तन्न । कर्माणि पुरुषस्यास्वातन्त्र्यकरणेऽशक्तानि अपितु फलजनने । तथाहि द्विविधः पुरुषः । कर्मान्तरव्याक्षिप्तव्यापारः अकर्मान्तराक्षिप्तव्यापारश्च । तत्र योऽदृष्टकर्मशक्त्यनुसारेणान्यदेव फलं साधयितुं प्रवर्तितोऽन्यदेव फलमासादयति । क्षेत्रखननप्रवृत्त इव निधानं स एव

कर्मान्तराक्षिप्त उच्यते। यदुक्तं "यतो यतः पूर्वकृतस्य कर्मणः फलं निधानाद्यमिवावतिष्ठते। ततस्ततः तत्प्रतिपादनोन्मुखं प्रदीपहस्तेव मतिः प्रवर्तते" ॥ इति। न चैतावता तस्मिन्नस्य कर्तृत्वाभावः प्रयोज्यस्याऽपि कर्तृत्वात्। यस्तु कामनया ज्योतिष्टोमादेः कर्ता यश्च कर्तृत्वबुद्ध्याऽग्निहोत्राष्टकादेः नित्यनैमित्तिकात्मनः कर्ता। यश्च दृष्टार्थतयैव भयरागादिवशाद्ब्रह्महननपरद्रव्यहरणादेः कर्ता तेषां स्वातन्त्र्यं लक्ष्यत एवेति। यदुक्तं मतङ्गे "[1]यो येनाशयभावेन वशीकृत्य शिवेच्छया। नियुज्यतेऽसौ भोगेन कर्मस्वथ तदात्मकम्" इत्युपक्रम्याऽऽदरानादराविष्टः प्रेरितोप्यथ केन चित्। भयाद्रागवशात् कर्तातादृगेवोपलक्ष्यत" इति ॥ २ ॥

वृत्तिः।

किंच।

**ईशाविद्याद्यपेक्षित्वात्**
**सहकारि तदुच्यते।**
**कर्मव्यापारजन्यत्वा**
**ददृष्टं सूक्ष्मभावतः ॥ ३ ॥**

ईशशब्देन लक्षणयोक्तामैश्वरीं रोधशक्तिमविद्यां च मललक्षणां आदिग्रहणात् मायां च यस्मादवश्यं फलदानायापेक्षते तस्मात्सहकारित्वमस्य कर्मणः न तु स्वातन्त्र्यं अचैतन्यादित्युक्तम्। अत एवास्यापेक्षणमौपचारिकम्। न

१. धर्माधर्मनिर्णयपटले ३७-तमश्श्लोकः।

तु कुम्भकारस्य सूत्रदण्डचक्राद्यपेक्षणतुल्यमन्यथा कुम्भकारस्याऽपि सूत्रदण्डाद्यपेक्षित्वात्सहकारित्वं स्यात् । किंचव्यापारेण यज्जन्यमनः क्रियते इति कर्म । सौक्ष्म्याच्चादृष्टमित्युच्यते ॥ ३ ॥

दीपिका ।

सहकारित्वमेवास्य साधयितुमीशेत्यादि व्याचष्टे । ईशशब्देनेत्यादि कर्तृत्वेन स्वपदोपात्तमीशं तत्करणत्वेन तदविनाभूतामीशशब्देन लक्षितां प्रागुक्तां रोधशक्तिं सहकार्यन्तरत्वेन मलमुपादानतया च मायामपेक्षत इत्यर्थः । तथाहि समस्तदेहादिकार्ये कर्तृसहकार्युपादानलक्षणं कारणत्रयं घटादाविवानुमीयते । न त्वेको जनकः । अपि तु घटादिदृष्टान्तसत्त्वात् कर्त्रादिसामग्र्येव कार्यजनिका । यदुक्तं पराख्ये "निमित्तमीश्वराख्यं यत् अदृष्टं सहकारिता । उपादानं च यत्सूक्ष्मं सर्वकार्यानुसंहितम् । कारणानां त्रयं तेन सर्वकार्येऽनुमीयते । यतो न जनकं चैकं सामग्रीजनिकाभवेत् । इति । न त्वस्य निमित्तकारणत्वमित्याह न तु स्वातन्त्र्यमित्यादि ननु कर्मणो धर्माधर्मात्मनः अश्वमेधब्रह्महत्यादेरनुष्ठानरूपत्वेन विनाशित्वात् तत्कथं कालान्तरभाविनः फलस्य कारणमत आह । किंचेत्यादि अयमर्थः । नानुष्ठानमात्रं कर्माऽपितु तज्जन्यसंस्कार एव । अथ सूक्ष्मत्वाददृष्टशब्दवाच्यत्वमित्याह । सौक्ष्म्याच्चेत्यादि ॥ ३ ॥

वृत्तिः ।

तच्च ।

जनकं धारकं भोग्यमध्यात्मादित्रिसाधनम् ।

---

१. यद्वातु जनकश्चैकसामग्री इति पाठभेदः ।

## तत्सत्यानृतयोनित्वा-
## द्धर्माधर्मस्वरूपकम् ॥ ४ ॥

जनकं निमित्ततया देहेन्द्रियभुवनादेर्यतः कर्मफलोपभोगायैव तत्तत्तनुकरणादियोगोत्पादः[1]। धारकत्वं च तस्यैव प्रतिनियतकालस्य दातृत्वेन। भोग्यत्वं च तत्फलद्वारेण। किंच अध्यात्मादित्रिसाधनं अध्यात्मादित्रयं साधनं यस्य तत्तथा। तत्राऽध्यात्मशब्देनान्तःकरणतया सन्निकर्षेणाऽऽत्मानमाधिकृत्य यद्वर्तते तन्मन उच्यते। आदिग्रहणाद्वाक्कायौ गृह्येते। एवं च मनोवाक्कायास्साधनं यस्य तद्यथाक्रमं इष्टदेवतानुध्याननमस्कारस्तोत्रपाठयजनादिरूपं धर्मात्मकं कर्म परस्वजिहीर्षातत्प्रवादतदुपघातादयो यथासङ्ख्यं मनोवाक्कायकृतास्साधनं यस्य तदधर्मात्मकम्। यद्वाऽऽत्मभूतदैवानि हेतुतयाऽधिकृत्याऽध्यात्ममधिभूतमाधिदैवतं च यत्सुखदुःखमुत्पद्यते तस्य त्रिविधस्याऽपि साधनम्। कर्मवशाद्धि चेतः प्रसादाद्युद्वेगादिवाऽऽध्यात्मिकं सुखदुःखमुदेति। आधिभौतिकं चाङ्गनासम्भोगगजसिंहाद्यभिभवरूपम्। आधिदैविकं चाभिमतानभिमतवातवर्षातपादिकृतम्। **तत्सत्यानृतेति** तच्च कर्म धर्माधर्मस्वरूपम्। सत्यानृतप्रकृतित्वात्। सत्यप्रकृति कर्म धर्मरूपम्। अनृतप्रकृति कर्माऽधर्मरूपम् ॥ ४ ॥

---

१ विश्वोत्पाद इति पाठभेदः।

दीपिका ।

निमित्ततयेति सहकारित्वेन। तस्यैवेत्यादि भोगादेः। भोग्यं चेत्यादि सुखदुःखात्मनां फलानामिति शेषः। कारणभेदात्कर्मभेदमाह अध्यात्मादीत्यादि फलभेदात्तत्तद्भेदसाधनाय व्याख्यानान्तरमाह यद्वेत्यादि तत्सत्येत्यादिसूत्रं व्याचष्टे तच्च कर्मेत्यादि सत्यानृतप्रकृतित्वादित्युपलक्षणं अनुग्रहोपघातदानापहरणादेश्च तत्पात्रादिविशेषस्य। यदुक्तं मतङ्गे[1] "भूयः कालविशेषेण पुनः पात्रविशेषतः। भिन्नं क्षेत्रविशेषाच्च भूयो वित्तानुसारत इत्यादि ॥ ४ ॥

**स्वापे विपाकमभ्येति**
**तत्सृष्टावुपयुज्यते।**
**मायायां वर्तते चान्ते**
**नाभुक्तं लयमेति च ॥ ५ ॥**

स्वापे च सर्वभूतसंहारकाले विपाकं परिणाममभितस्समन्तादेति। सृष्टिसमनन्तरमेवास्य यथास्वं भोगे प्रवर्तते। अन्ते च संहारे मायायां संस्काररूपतया वर्तते न चाभुक्तं तद्विनश्यति ॥ ५ ॥

दीपिका ।

अन्ते चेत्यादि कृष्यादिकर्मणां प्रकृतिसंस्कारकत्वेन दृष्टत्वान्नैयायिकादिपरिकल्पितात्मसंस्कारकत्वायोगात्। आत्मनश्च परिणामितादिप्रसङ्गात् कर्माधिकरणं माया बुद्ध्यादिद्वारेण सिद्धेति सैवोपादानमिति वक्ष्या-

1 धर्माधर्मनिर्णयपटले पञ्चमश्श्लोकः।

मः । **नचाभुक्तमिति** । यदुक्तं "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैर" पीति ॥ ५ ॥

वृत्तिः ।

उपसंहारायाऽऽह ।

**इति मायादिकालान्त-**
**प्रवर्तकमनादिमत् ।**
**कर्म व्यंजकमप्येतत्**
**रोधि सद्यन्न मुक्तये ॥ ६ ॥**

इत्थं प्रतिपादितस्वरूपमेतत्कर्म मायादिकालाग्न्यन्ताध्ववर्तिदेहेन्द्रियार्थप्रवर्तकमित्यत्येवास्य प्रभविष्णुता **मायोर्ध्वमप्रशंसनात्** । तच्चैतद्यद्यपि व्यापारजन्यं तथाऽपि प्रवाहनित्यत्वादादिमत्वं नास्योपपद्यत इति चर्चितप्रायम् । किं चैतत्कर्म शुभस्वरूपत्वात् पुण्यव्यंजकमापि सद्बोधिरोधकं संसारकारणमित्यर्थः । कुत इत्याह **सद्यन्नमुक्तये** इति । यस्मात्पुण्यात्मकमापि कर्म सत् विद्यमानं न मुक्तये नापवर्गाय । अपि तु तत्प्रतिबन्धायैव कल्पते । यत्कर्मक्षयात्तत्साम्याद्वा शक्तिपातानुसारसमासादितानुग्रहाणामेव कैवल्यम् । ननु सद्यन्न मुक्तय इत्ययुक्तमुक्तम् । सत्यापि

कर्माणि तत्साम्यान्मुक्तेराम्नातत्वात् । यदुक्तं किरणे "समे कर्मणि संजाते कालान्तरवशात्ततः । तीव्रशक्तिनिपातेन गुरुणा दीक्षितो यदा । सर्वज्ञस्स शिवो यद्वत्" इति । नैष दोषः । तथाविधस्य कर्मणस्सतोऽप्यसत्वं परस्परप्रति- बद्धशक्तित्वेनाफलत्वात् । दीक्षोत्तरकालकृतकर्मवत् । यदुक्तं खेटकनन्दनेन "[1]कृतमपि फलाय न स्याद्दीक्षोपर्यूषरोप्तबीजमिव । बलवद्विशेषशास्त्रव्यतिकरजातं विहाय कर्मैकम् ॥ ६ ॥

इति श्रीभट्टविद्याकण्ठात्मजभट्टनारायणकण्ठविरचितायां
कर्मविचारप्रकरणमष्टमं समाप्तम् ।

## दीपिका ।

**मायोर्ध्वमप्रशंसनादित्यादि** । असामर्थ्यादित्यर्थः । तत्रैवंविधस्य कर्मणोऽभावात् बुद्धिस्थत्वेनोक्तत्वाच्च । किं पुनस्तत्र सहकारिकारणं ईश्वरसेवात्मकं कर्माऽधिकारमलश्चेति ब्रूमः । अत एव प्रतिसर्गमेवंभूतत्वात् बीजाङ्कुरन्यायेनानादिकर्मशरीरप्रवाहसन्तान इत्युक्तं पूर्वमेवेत्याह **किंचैत- दित्यादि** । **कर्मक्षयादित्यादि** । अत्र चायमर्थः । मलपरिपाकशक्तिपाताभ्यां पूर्वोक्तादिष्टानिष्टनिमित्तकर्मद्वयसाम्यादवाप्तदीक्षाणां तथैव कर्मक्षयान्मुक्तिरिति । यदाहुः "न हृष्यत्युपकारेण नापकारेण कुप्यति । यस्समस्सर्वभूतेषु जीवन्मुक्तस्स उच्यते" । इति । न तु विरुद्धयोः कर्मणोरिति व्याख्येयम् । तस्य संसारावस्थायामपि भावात् शक्तिनिपातहेतुत्वासम्भवाच्च । तथा यदात्र धर्माधर्मविपाकलक्षणस्वर्गनरकादिफलनिमित्ते धर्माधर्मात्मके वा स्वर्ग ब्रह्मलोकप्राप्तिनिमित्ते धर्मात्मके वा रौरवा[2]वीचिनिमित्तेऽधर्मात्मके

---

१. अष्टप्रकरणतत्वसंग्रहे ३७-तमश्लोकः । २ अवीचिरिति कस्यचित् नरकस्य संज्ञा ।

वा द्वे अत्यन्तरूक्षे कर्मणी तीव्रवेगत्वेन परिपाकप्राप्त्याऽत्यन्तसमलस्य पुंसः पतितशरीरस्याऽपतितशरीरस्याप्यदृष्टफलायुष्यानायुष्यलक्षणे युगपद्भवतः। तदा तयोर्द्वयोरपि विरुद्धयोः कर्मणोर्युगपत्सुखदुःखलक्षणस्वर्गनरकादिदानासम्भवात् समत्वादेव च क्रमेणाप्यनुपपत्तेः क्रमयौगपद्यव्यतिरिक्तप्रकारान्तरासम्भवाच्च कस्यचित्कदाचित् कर्मान्तराणां विरुद्धानामप्यभोग्यपर्यवसायिन्याऽऽलोच्य तत्कर्मविरोधादीश्वरशक्त्यधिष्ठितया नियत्या पुरुषमुद्धरति। मतङ्गे "धर्माधर्मविपाकेऽस्मिन् तुलाकोट्युपलक्षिते। नियतिस्तत्समुद्धाराद्यदा पश्यति कर्मणि। समे भोक्तुस्तदा तस्य युगपत्स्थित्यसम्भवात्। शून्यवत्संस्थितेति"॥ यदा तु कर्माण्युद्गतान्यशेषाणि कस्यचित्कदाचित् सम्परिपाकाद्विरुद्धानि तदा च पारमेश्वरी शक्तिः तानि सर्वाणि विनाश्य विज्ञानकेवलित्वं ददाति नतु मोक्षं तस्य मलपरिपाकाद्यविनाभावात्। यदुक्तं किरणे। "समे भोगस्तदा नास्तीति"[1]। इदमेव च भवावस्थायामपि कर्मसाम्यमुच्यते। नतु धर्माधर्मराशिद्वयसाम्यम्[2]। ततश्च यदा मलपरिपाकशक्तिपातयुक्तं कस्य चित्कदाचिदेवं इष्टानिष्टनिमित्तकर्मद्वयसाम्यं भवति तदा तस्य दीक्षया कर्मक्षयान्मुक्तिर्भविष्यतीति वक्ष्यति। अत एव नन्वित्यादिचोद्यपरिहारौ शास्त्रज्ञैः प्रतिक्षिप्ताविन्युपेक्षणीयावेव। "यतस्समे कर्मणी"त्यादावपि सूत्रे कालान्तरशब्दो मलपरिपाकवाचकत्वेन कर्मसाम्यशब्दश्चोपकारापकारनिमित्तकर्मद्वयसाम्यवाचकतया तत्रभवता रामकण्ठेन किरणवृत्तौ व्याख्यातः। इति।

इत्यघोरशिवाचार्यविरचितायां मृगेन्द्रवृत्तिदीपिकायां
कर्मविचारप्रकरणमष्टमं समाप्तम्।

---

१ नियति पटले १५-तमश्लोकः। २. शरीरद्वयेति पाठभेदः।

## अथ मायाप्रकरणं नवमम्।

**अथ सर्वज्ञवाक्येन**
**प्रतिपन्नस्य लक्षणम्।**
**कथ्यते ग्रन्थिपाशस्य**
**किञ्चिद्युक्त्याऽपि लेशतः॥ १॥**

अथ शब्दश्चानन्तर्ये पाशपदार्थपरीक्षाधिकारे कर्मपाशविचारानन्तरं ग्रन्थ्यात्मनो मायाख्यस्य पाशस्य किंचित्संक्षिप्तं लक्षणं कथ्यते। अस्य चानन्तरप्रकरणोपसंहारे मायाशब्दोपक्षेपात् पाटलिकस्सम्बन्धो ज्ञेयः। पदार्थादिसम्बन्धचतुष्टयन्तु प्रागुक्तम्। **सर्वज्ञवाक्येन प्रतिपन्नस्येति**। प्रावृतीशबले कर्ममायेत्यादिनोद्देशसूत्रेण वक्तुमभ्युपगतस्य। **किंचिदिति**। नहि सकलं मायालक्षणं संक्षेपेणाप्यभिधातुं शक्यम्। तथोक्तं तत्रभवद्भिर्बृहस्पतिपादैः। "अपि सर्वसिद्धवाचः क्षीयेरन् दीर्घकालमुद्गीर्णाः। मायायामानन्त्यान्नोच्येत स्रोतसां सङ्ख्या"॥ इति। **युक्त्यापि लेशत इति**। नागममात्रेण केवलेन। अपि तु युक्तिलेशेनापि स्तोकादनुमानेनोपपन्नमपि तल्लक्षणमुच्यत इत्यर्थः।

## दीपिका ।

### अथ मायालक्षणप्रकरणं नवमम् ।

---

अथेत्यादिसूत्रेण मायालक्षणोक्तिः प्रतिज्ञायत इत्याह **पाशपदार्थेति** । अतश्च **पाटलिकस्संबन्ध** इति मायादीत्यनेन सूचित इत्याह । **अस्य-चेत्यादि** । **पदार्थादीत्यादि** । तत्पदार्थसम्बन्धः पाशपदार्थतया । प्राकरणिकोऽपि विद्यापादतयैव । सौत्रस्तु पाशजालमित्यनेन । वाक्यात्मकोऽपि "मायायास्साधिकाराया" इत्यादिभिर्वाक्यैरनेकविधः । अतश्च वाक्यसम्बन्ध एव सर्वज्ञवाक्येन सूचित इत्याह । **प्रावृतीशबलेनेत्यादि** । **नहीत्यादि** । साधारणासाधारणरूपाणां कार्यस्रोतसामनन्तत्वात्तद्भेदो वक्तुं न शक्यते । तत्कारणमात्रस्वरूपोऽत्र साध्यत इत्यर्थः ॥ १ ॥

## वृत्तिः ।

**तदेकमशिवं बीजं**
**जगतश्चित्रशक्तिमत् ।**
**सहकार्यधिकारान्त-**
**संरोधि व्याप्यनश्वरम् ॥ २ ॥**

तद्ग्रन्थितत्वमेकम् । परमकारणत्वात् । अनेकत्वे प्रमाणाभावाच्च । **अशिवं** मोहकत्वात् । **बीजं** जगत उपादानकारणम् । विविधशक्तियुक्तं च । सहकारिणा कर्मणा-मधिकारान्तं यावत्संरुणद्ध्यणून् बध्नाति तच्छीलमिति सहकार्यधिकारान्तसंरोधि । कर्माभावे ग्रन्थितत्वस्याप्रवृत्तेः ।

**व्यापि च** तत्सर्वगतम् । स्वकार्यव्यापकम् । **अनश्वरं** नित्यत्वात् । महाप्रलयेऽपि आत्मवदीश्वरवच्च तस्यावस्थानात् । तदुक्तं तत्वत्रयनिर्णये "शम्भुः पुरुषो माया नित्यं विभु कर्तृशक्तियुक्तं च । सुप्तेऽपि विकृतिजाते त्रितयं जागर्ति तत्वानाम्" ॥ २ ॥

## दीपिका ।

तदेकमित्यादिना मायालक्षणं प्रतिजानीत इत्याह **तद्ग्रन्थितत्वमित्यादि** । एकत्वादीनि चानन्तरमेवोपपादयिष्यति । **अशिवं मोहकत्वादित्यादि** । कार्यद्वारेण चैतन्यव्यञ्जकमपि अनात्मादिष्वात्मादिज्ञानजनकत्वेन मोहकत्वादशिवं मोहकमुच्यत इति । **बीजं जगत इत्यादि** । देहेन्द्रियभुवनादेर्यदुपादानकारणं सा मायेति । **विविधशक्तियुक्तं चेति** । विविधशक्तिरूपकार्यत्वमित्यर्थः । यद्वक्ष्यति "तदाधाराणि कार्याणि शक्तिरूपाणि संहृतौ । विकृतौ व्यक्तिरूपाणि व्याप्रियन्तेऽर्थसिद्धये"[1] इति । न तु मायाया अनेककार्यजनिकाश्शक्तय इति व्याख्येयम् । शक्तेश्शक्त्यन्तरायोगात् । असदुत्पत्तेर्निराकरिष्यमाणत्वाच्च । पूर्वमेव व्याख्यातं यतः । उपादानत्वादेव मृदादिवत्सहकारिणा विना न तदात्मना देहादिकार्यजनकमित्याह **सहकारिणामित्यादि** व्यापित्वं चास्य सर्वस्वकार्यव्याप्तेरित्याह । **व्यापिचेत्यादि** । **अनश्वरं चेत्यादि** । कर्मशरीरसन्तानस्य बीजाङ्कुरसन्ततेरिवाऽऽदिमध्यान्तरहितत्वादिदमप्यादिमध्यान्तरहितम् ॥ यदाहुः "**इदं** पूर्वमिदं पश्चादिति वक्तुं न पार्यत" इति ॥ अत एवेदं न क्षीरदधिन्यायेन सर्वात्मना परिणामि । किन्तु घृतकीटन्यायेनैकदेशेनैव बिन्दुवदिति मन्तव्यम् ॥ २ ॥

---

१. तृतीयश्श्लोक. ।

वृत्तिः ।

युक्त्याऽपि लेशत इत्युक्तम् । अतस्ता युक्तिं दर्शयति ।

**कर्ताऽनुमीयते येन**
**जगद्धर्मेण हेतुना ।**
**तेनोपादानमप्यस्ति**
**न पटस्तन्तुभिर्विना ॥ ३ ॥**

सन्निवेशादिमत्त्वादुत्पत्तिमत्त्वं किल जगतः कर्तारमनुमापयति। तेनैवोत्पत्तिधर्मत्वेनोपादानमप्यनुमीयताम् । नह्युत्पत्तिमतामुपादानकारणं विनोत्पत्तिर्दृष्टा । यथा पटादेस्तन्त्वाद्यभावे ॥ ३ ॥

दीपिका ।

कर्तेत्यादिसूत्रं सम्बन्धयति । युक्त्यापीत्यादि । तत्र तावन्मायास्तित्वयुक्तिरनेनोच्यत इत्याह । सन्निवेशादिमत्त्वादित्यादि ॥ ३ ॥

वृत्तिः ।

किंच ।

**तदचेतनमेव स्यात्**
**कार्यस्याचित्त्वदर्शनात् ।**

**प्राप्तस्सर्वहरो दोषः**
**कारणानियमोऽन्यथा ॥ ४ ॥**

तच्च ग्रन्थितत्वमचेतनम् । अचेतनस्यैव तत्कार्यस्य कलादेरुपलम्भात् । अन्यथेति अचेतनतत्कार्योपलम्भेऽपि तस्य चेतनत्वाभ्युपगमे कारणानियमलक्षणः सर्वहर इति सर्वानुमानोच्छेदकस्सकलव्यवहारलोपदोषः प्राप्तः ॥ ४ ॥

दीपिका ।

उपादानकारणत्वादेव तस्याचेतनत्वमित्याह । **किंचेत्यादि** । यदुक्तं "ये ये यद्रूपिणो भावास्ते ते तद्रूपहेतुजा" । इति ॥ ४ ॥

वृत्तिः ।

प्रागुद्दिष्टमविनश्वरत्वं व्यापित्वं च साधयितुं युक्तिमाह ।

**यद्यनित्यमिदं कार्यं**
**कस्मादुत्पद्यते पुनः ।**
**अव्यापि चेत्कुतस्तस्या-**
**त्सर्वेषां सर्वतोमुखम् ॥ ५ ॥**

जगत्संहारे यद्युपादानकारणस्य मायाख्यस्यापि विनाशःस्यात् तत्पुनस्सर्गादौ कस्मादुपादानाज्जगदुत्प-

द्यते। अतो नास्यानित्यत्वम्। अथोच्यते सर्गादावुपादानमपि देवस्स्रक्ष्यतीति। नैतद्युक्तम्। एवं हि सति तत्कार्यस्येवाऽस्याप्युपादानं विनाऽनुत्पत्तेरुपादानान्तरं परिकल्प्यं तस्याप्यन्यादिति अनवस्था स्यात्। व्यक्त्युपसंहारेण शक्तिरूपतया त्ववस्थाने न कश्चिद्दोषः। एवमस्याव्यापित्वे सर्वतोमुखस्य कार्यस्यानुत्पादस्स्यात्। अतो व्यापकत्वमवश्यमभ्युपेयम्॥ ५॥

दीपिका।

व्यापकत्वमवश्यमभ्युपेयमिति स्वकार्येष्वेव अत एव शुद्धविद्यातत्वादेश्शुद्धाध्वनश्शैवास्त्रादीनां[1] चोपादानकारणमन्यदेव महामायात्मकं कुण्डलिन्यादिशब्दवाच्यमिति वक्ष्यति— "योनिर्विश्वस्येति"। "शक्तेर्नादो भवेद्बिन्दु"रित्यादि। "शुद्धाध्वन्यपि मायाया परस्या" इति च। श्रीमद्रौरवेपि "मायोपरि महामाये"ति॥ ५॥

वृत्तिः।

अथैकत्वे युक्त्युपन्यासः।

**यदनेकमचित्तत्तु**
**दृष्टमुत्पत्तिधर्मकम्।**
**न तदुत्पत्तिमत्तस्मा-**
**देकमभ्युपगम्यताम्॥ ६॥**

---

1 कामिकादीनामित्यर्थः।

यद्यस्मात्कारणाद्यद्यदनेकमचेतनं तत्तद्घटपटादिव-दुत्पत्तिमद्दृष्टम् । इदन्तु नोत्पत्तिमत् न कारणजन्यं पर-मकारणत्वात् । अत एकम् । नहि परमकारणानि बहूनि भवन्तीति ॥ ६ ॥

वृत्तिः ।

ननु जगदुत्पत्तौ परपरिकल्पितपरमाण्वादिवदुपा-दानकारणबहुळत्वं यदि स्यात्ततः को दोषः । तथाहि ।

**पटस्तन्तुगणाद्दृष्ट**
**स्सर्वमेकमनेकतः ॥ ६½ ॥**

बहुभ्यो हि तन्तुभ्यः पटस्यैकस्योत्पत्तिर्दृष्टा । तद्वच्च जगत्सर्वमनेकस्मात्कारणादुत्पद्यताम् । अलं ग्रन्थ्यात्मक-परमकारणकल्पनयेति चोद्यम् ॥ ६½ ॥

वृत्तिः ।

अत्र परिहारः ।

**तदप्यनेकमेकस्मा**
**देव बीजात्प्रजायते ॥ ७ ॥**

यद्भवताऽनेकतन्त्वात्मकं कारणं पटस्योक्तं तदने-कमपि एकस्माद्दुकूलकार्पासादिद्रव्यादनेकाकारपटाद्यु-

त्पत्तिः। एवं परमकारणात्सर्गस्थितिलयाधाराख्यात्सर्गादौ मायातत्वाज्जगदुत्पत्तिरिति न कश्चिद्दोषः ॥ ७॥

वृत्तिः।

परमात्मन एव सकाशाच्चिदचिदाविर्भावतिरोभावाविति येषां पक्षस्तान् प्रतिक्षिपति।

**येषां चिद्धर्मकाद्धेतो रचिदप्युपजायते।**
**तेषां धूमेन लिङ्गेन जलं किं नानुमीयते ॥ ८॥**

चिद्धर्मकाद्धेतोर्यैरचितामप्युद्भवोऽभ्युपगतस्तैर्धूमाज्जलानुमानं किं न क्रियते। कार्यकारणप्रतिनियमासम्भवे सत्यतत्स्वभावादपि तत्स्वभावस्योत्पत्तिप्राप्तेः। यथा न दृष्टा धूमाल्लिङ्गात् कदाचिदपि जलप्राप्तिः। तथाह्यचित्स्वभावस्य स्वविरुद्धाच्चित्स्वभावान्नोत्पत्तिर्दृष्टा। अतत्स्वभावात्तत्स्वभावोत्पत्तौ सर्वं सर्वस्मादुत्पद्येत ॥ ८॥

दीपिका।

येषामिति सूत्रमवतारयति। **परमात्मन एवेत्यादि**। एतच्चोपलक्षणं नारायणाख्यायाः परप्रकृतेरपि। न्यायस्य समानत्वादिति। एतदेवाह

अतत्स्वभावादित्यादि । उपादानत्वादेवाचेतनत्वादिदोषः प्रागुक्त एवे-
ति ॥ ८ ॥

वृत्तिः ।

परमाणुकारणं जगदिति येषामभ्युपगमस्तान्
प्रत्याह ।

**भूतावधि जगद्येषां**
**कारणं परमाणवः ।**
**तेषां पूर्वोदिताद्धेतो-**
**र्ज्ञातैव ज्ञानसूक्ष्मता ॥ ९ ॥**

येषां[1] भूतावधि क्षित्यन्तं जगत् परमाणवः तत्कारण
तेषां पूर्वोदितात्प्रागुक्तात् द्रव्यादिषट्पदार्थज्ञानात् षोडश-
पदार्थावबोधाद्वा निश्श्रेयसप्राप्तिहेतोर्ज्ञानस्य सूक्ष्मता प्रबो-
धतैक्ष्ण्यं ज्ञातम् । तादृग्विधसूक्ष्मदर्शिन्या बुद्ध्या परमाणुका-
रणतामभिदधाना न ते वाच्यतामर्हन्ति । परमाणूनां केश्चि-
त्परमाणुतैव निषिद्धा षट्केन युगपद्योगात् । षडंशत्वस्या-
परिहार्यत्वात् । किञ्चाचैतन्ये सत्यनेकत्वात् घटपटादिवत्ते-
षामपि कारणपूर्वकत्वेन भाव्यमिति कुतः परमकारणता ।
ततश्च न तत्प्रकृतिकत्वं जगतः ॥ ९ ॥

---

१ येषां पृथिव्यादिभूतावधि[illegible] पारमाणवं जगत्तेषामिति पाठभेदः ।

## दीपिका ।

भूतावधीत्यादि सूत्रं व्याचष्टे **येषामित्यादि** । ननु परमाणव एव द्व्यणुकादिक्रमेण संयुज्यमानाः परमकारणं भविष्यन्ति । किमत्रानुपपन्नम् । येनैवमुपालभ्येमहि । **परमाणूनामित्यादि** । अत एव सन्निवेशत्वात्कार्यत्वमिति भावः । परमाणुताभ्युपगमेऽपि दूषणमाह **किञ्चेत्यादि** । न चाऽस्य हेतोस्सामान्यादिभिर्व्यभिचारः । तेषामपि पक्षीकृतत्वात् । नच कालात्ययापदिष्टो हेतुः प्रत्यक्षागमबाधितत्वात् । तथाह्यस्मदाद्यागमेऽपि सिद्धान् परमाणून् पक्षीकुर्वतो युष्मदागमाभ्युपगमोऽवश्यम्भावी भवतः । तदयुक्तम् अस्मदागमेप्यध्वप्रमाणश्रुत्यादिभिः परमाणूनां सिद्धत्वाद्युष्मदागमाभ्युपगमासिद्धेः कुतस्तद्बाधेन कालात्ययापदिष्टत्वम् । यथा सामान्ये धर्मिणि नैयायिकोक्तसर्वगतत्वधर्मबाधाय व्यक्तिसर्वगतत्वं साधयतां वैशेषिकाणां व्यक्तिभ्योऽन्यत्रानुपलम्भादिति हेतुः । यथाच नैयायिकानां समवाये धर्मिणि वैशेषिकाभ्युपगतप्रत्यक्षत्वसमवेताश्रितत्वधर्मद्वयबाधनाय नित्यानुमेयत्वं स्वातन्त्र्यं च साधयतां हेतुर्न कालात्ययापदिष्टो भवद्भिरुच्यते धर्मिणस्तत्रोभयत्रादिसिद्धत्वादेवं सिद्धेषु परमाणुषु अनित्यत्वं नित्यत्वं च साधयतोरस्मदागमयुष्मदागमस्थयोर्हेत्वोर्मम हेतुर्न कालात्ययापदिष्टः । अन्यतरसिद्धे तु धर्मिणि स दोष एव । यथा न्यायवैशेषिकासिद्धे समवायाख्यधर्मिणि अनित्यत्वं साधयतस्सत्वाख्यस्य सम्बन्धत्वात् संयोगवदिति हेतुः । ननु भिन्नतान्त्रिकाणामयं दोषश्चेत्तन्न । यतो वयमपि परमाण्वभ्युपगमेन समानतान्त्रिकाः सर्वथा समानत्वाभावादिति । अत एव कारणपूर्वकाः परमाणवः मूर्तत्वात् । घटादिवदित्ययमपि हेतु र्न कालात्ययापदिष्टोऽस्माकम् । अपित्वनभ्युपगतपरमाणूनामन्यतान्त्रिकाणामेवेति मन्तव्यम् । नन्वप्रयोजकोऽयं हेत्वाभास इति न्यायभाष्यकारः कश्चित् । तन्न । अप्रयोजकस्य हेत्वाभासस्याभावात् । न्यायसूत्रकारः पञ्चलक्षणाल्लिङ्गात्[1] परोक्ष-

---

१ प्रतिज्ञादिपञ्चावयववाक्यनिश्चिताल्लिङ्गादित्यर्थः ।

लिङ्गिनि ज्ञानमनुमानमिति लिङ्गलक्षणमनुमाय तद्व्यावर्तका न सिद्ध-विरुद्धानैकान्तिककालात्ययापदिष्टप्रकरणसमान् पञ्चैव हेत्वाभासानाह । भाष्यकारोऽपि "तस्य प्रयोजकं नामे"ति । अत एव भूतावधीत्ये-तदपि निरस्तम् । सावयवत्वादिना कार्यत्वासिद्धेः परमाणूनां च कारणत्व-निरोधात् कारणान्तरं मृग्यं यतः । किंचेदं तावत्कार्यकारणात्मकं शरीर-मायाद्यैहिकम् । सांख्यैरपि गौणं चतुर्विंशतितत्वात्मकमिष्यते ॥ गुणाना-मत्रापूरकत्वेनावस्थितेः । अत्र भूतानि पञ्चतन्मात्राणि च कार्यशब्दवाच्यानि इन्द्रियाधिकरणानीन्द्रियाणि दशान्तःकरणत्रयं च कार्यकरणानि योनितो योन्यन्तरगमनमारभन्ते । इति । तदुक्तमाचार्यैः "एतत्कार्यं[1] दशधा करणैराविश्य कार्यते चेष्टाम् । अविभुत्वात्करणानि तु कार्यमधिष्ठाय चेष्ट-न्ते" । इति । यद्येवं गुणात्मिका प्रकृतिरेव कार्यकारणोभयसिद्धावस्त्विति सांख्याः । तदयुक्तं "कलादीनां तत्वानां युक्तिसिद्धानां सम्भवात् । तथाहि समलस्य पुंसो ज्ञत्वकर्तृत्वयोरावृतत्वात्प्रलयकेवलिन इव न भुवन-भोक्तृत्वमिति अवश्यं तयोर्[2]व्यञ्जकेन तत्वद्वयेन भवितव्यमिति कलाविद्ये सिध्यतः । अभिव्यक्तचिद्रूपस्य वीतरागस्येव नहि प्रवृत्तिरिति तत्प्रवृत्त्य-र्थमवश्यम्भावी रागस्सिद्धः । प्रवृत्तस्य कलननियमनयोरवश्यं भावित्वात् कालनियती सिद्धे । नियतिश्च कार्यकरणादिविषयापेक्षा । तत्कारणानां प्रागुक्तानां गुणानामचैतन्ये सत्यनेकत्वात् इन्द्रियाणामिव कारणान्तरेण भवितव्यमिति अव्यक्ताख्यं गुणव्यतिरेकेण सिद्धम् । अत एव यस्य तत्व-मिच्छन्ति यदाहुः पाञ्चरात्राः "भगवान् वासुदेवोऽसौ गुणेभ्यः प्रकृतिः परा । अव्यक्तं नित्यमाहुस्तत्परस्मान्नहि विद्यत" इति प्रकृतिस्सिद्धा । प्रधा-नस्याऽपि प्रतिपुरुषनियतत्वेनानेकत्वाच्चैभिस्तत्वैः प्रतिपुरुषं भिन्नैर्भवितव्यम् । भोगसाम्यप्रसङ्गात् । तत्र तेषामचैतन्ये सत्यनेकत्वात्कारणसिद्धे रेतैरयोगे

---

१. अष्टप्रकरणे तत्वसंग्रहे ४-श्लोकः । २ ज्ञत्वकर्तृत्वयोरित्यर्थः ।

पुंसो भोक्तृत्वासम्भवादिति। सा च परमकारणं माया सिद्धेति। अत एव बौद्धादयः संहता एव जायन्ते संहता एव निरुध्यन्त इति कृत्वा देहादीनां देहादीन्येव कारणानीत्याहुः। तेषां पक्षो दूरापास्त इति ॥ ९ ॥

वृत्तिः।

ननु यदा तावन्मातापितृसंबन्धिभ्यो देहेन्द्रियादिभ्यस्तत्तत्स्वसदृशशरीरकरणाद्युत्पद्यमानमुपलभ्यते। तदा किमदृष्टेन मायादिना कारणेनाक्लृप्तेनेत्याशङ्क्याह।

**शरीरादेश्शरीरादि**
**यदि तन्निखिलात्यये।**
**का वार्तानाखिलध्वंसो**
**न सर्वज्ञो मृषा वदेत् ॥ १० ॥**

मातापितृसंश्लेषशरीरेन्द्रियकारणकं जन्तूनां शरीरेन्द्रियादि तद्भावे भावात् तदभावे चाभावादिति यद्यभिमतं तदस्तु। किन्त्वेतत्प्रष्टव्यो भवान्। तन्निखिलात्यये सर्वसंहारे देहेन्द्रियाद्युत्पत्तेः कीदृशी गतिः। अथ सक्रम एव सर्वभावानां नाशः। न तु युगपत्सर्वसंहार इत्युच्यते। तदयुक्तम्। श्रुतिस्मृतीतिहासपुराणादिसदागमगीयमानस्य संहारस्यापह्नोतुमशक्यत्वात्। तदपह्नवे च

प्रथमसृष्टिरपि नेष्टा । ततश्च सृष्टिसंहारौ जगतो न सम्भवत इति ब्रुवाणस्सर्वज्ञतामेव जह्यात् ॥ १० ॥

दीपिका ।

तत्पक्षाभ्युपगमेऽपि[1] दूषणं शरीरादेरित्यादिसूत्रेणोच्यते इत्याह । मातेत्यादि सक्रमस्यैव शरीरादिसंहारस्य दर्शनाद्दृष्टवच्चादृष्टकल्पना युक्तेति भावः । परिहरति । तदयुक्तमित्यादि[2] न ह्यदर्शनमात्रात्सर्वसंहाराभावः । युक्त्यागमसिद्धत्वात् सर्वसंहारस्येति[3] भावः । अत एवाह श्रुतिस्मृतीत्यादि ॥ १० ॥

वृत्तिः ।

अथ कथं संहाराभावमभिदधतो मिथ्यावादित्वमित्याह ।

एकदेशोऽपि यो धर्मः
प्रतीतो यस्य धर्मिणः ।
स तस्य सर्वतः केन
जायमानो निवार्यते ॥ ११ ॥

कोटिशो मरणं दृष्ट्वा
संहतानां शरीरिणाम् ।

---

१ बौद्धपक्षाभ्युपगमेऽपीत्यर्थः । २ प्रतीकमेतन्मातृकासु न दृश्यते । ३ भावोऽस्त्विति पाठभेदः ।

**सोऽपि प्रतीयते कालो**
**यत्राशेषजनक्षयः ॥ १२ ॥**

सर्वज्ञेन हि स्वस्य वचसः प्रमाणोपपन्नतया परीक्षणं प्रतिज्ञातम्। यदाह "तापाच्छेदान्निकर्षाच्च सुवर्णमिव सर्वतः। परीक्ष्य भिक्षवो ग्राह्यं मद्वचो नतु गौरवादि"ति। इयं च संहारसम्भवे निर्बाधा तावदुपपत्तिः। यदुत यस्य धर्मिणो वह्न्यादेः क्वाप्येकदेशे धूमप्रकाशदाहादिधर्मो दृष्टः स तस्य सर्वत्रोत्पद्यमानः केन निषिध्यते। ततश्च दुर्भिक्षमारीकूटभङ्गादिनैकदेशे जन्तुसङ्घातस्याक्रमिकां कोटिशो विपत्तिमुपलभ्य कृत्स्नजगत्संहारकालस्सदागमोदितोप्यनुमानेनोल्लिख्यते ॥ १२ ॥

दीपिका।

युक्तिसिद्धत्वमप्यस्य दर्शयितु"मेकदेश"इत्यादिसूत्रस्याऽऽशङ्कामाह। **अथेत्यादि**। तस्य सर्वमिथ्यावादित्वं दर्शयितुं तद्वचस्तावद्दर्शयति। **सर्वज्ञेनेत्यादि**। तदेतच्च व्याहतं युक्तिसिद्धसर्वसंहाराभावाभिधानादित्यभिप्रायेणाह। **इयं चेत्यादि**। तामेव युक्तिं दर्शयति **यस्येत्यादि** ॥ १२॥

वृत्तिः।

तदानीं च मायायामुपसंहृतानि सर्वकार्याण्यासन्नित्याह।

तदाधाराणि कार्याणि
शक्तिरूपाणि संहृतौ ।
विकृतौ व्यक्तिरूपाणि
व्याप्रियन्तेऽर्थसिद्धये ॥ १३ ॥

प्रागुक्ताभिरुपपत्तिभिर्नित्यत्वव्यापकत्वादिगुणयुक्तं यत्तु मायाख्यं कारणमुपपादितं तदाश्रयाणि तनुकरणभुवनादीनि संहारकाले शक्तिरूपाण्यवतिष्ठन्ते । सृष्टौ तु व्यक्तिरूपाणि स्वस्वप्रयोजननिष्पत्तये सव्यापाराणि भवन्तीति सर्वं सुस्थितम् ॥ १३ ॥

दीपिका ।

तदानींचेत्यादि प्रकृतत्वात्सर्वसंहारकत्वे । अत एव द्वितीयकार्यशक्त्यधिकरणं मायातत्वं सिद्धमित्याह । प्रागुक्ताभिरित्यादि ॥ १३ ॥

वृत्तिः ।

अत्र मुनिस्सत्कार्यवादमसहमानः प्रश्नयति ।

तन्त्वादिकारकादानं
पटासत्वे पटार्थिनः ।
सत्वे कारकशब्दोऽपि
व्यपैतीति हतं जगत् ॥ १४ ॥

साफल्यमसदुत्पत्ता
वस्तु कारकवस्तुनः ॥ १४½ ॥

यदेतच्छक्तिरूपतया मायाख्ये परमकारणे जगतोऽवस्थानमुक्तम् । तन्नोपपद्यते । तथाहि दृष्टवददृष्टकल्पनाकर्तव्या । दृश्यते च तन्तुतुरीवेमादिकारकग्रहणमविद्यमानपटस्यार्थिनः । न तु पटसद्भावे सति । पटस्य हि सत्वे सति कारकशब्दोऽपि तन्त्वादेर्नोपपन्नः । विद्यमानत्वादेव । असदुत्पत्तौ हि कारकवस्तुनस्साफल्यं नान्यथेति ॥ १४½ ॥

दीपिका ।

तन्त्वादीत्यादिप्रश्नसूत्रं व्याचष्टे यदेतदित्यादिना । अत्र सत्कार्यवादिनां चत्वारः पक्षाः । केचिच्छक्तिसमाहारात्मकः कारणं शक्तय एव व्यक्तीभूताः कार्यमित्युपगन्तव्याः यदाहुः "शक्तिमात्रसमूहस्य भावस्य परिणामतः । कदाचिद्व्यज्यते काचिच्छक्तिः काचित्प्रलीयते । इति । परे-त्वभिव्यक्तिर्भावानां न रूपान्तरपरावृत्तिः । अपि तु उपलभ्यमानतैव । अतो नित्यत्वात् प्रधानात्मनि तेषां संहारः क्वचिद्वा धर्मविशेषे केषाञ्चित् । ततश्च क्रमेणाभिव्यक्तिरेव जन्म कथ्यत इति प्रतिपन्नाः । यदुक्तं "क्रमाच्च ग्राह्यरूपेषु स्वातन्त्र्याद्वापि वा श्रिया । भावेषु प्रतिभासेन जन्मसंज्ञा निषेव्यते"। इति । अन्ये पुनस्सन्निवेशविशेषमात्रं कारणस्य कार्यम् । हेम्नः कटककेयूरादिवदित्याहुः । यदुक्तं "हेम्नस्सुकुण्डलीभावो व्यग्राणां वा समग्रता । अथवा जन्मनाशौ तु तत्र केन प्रचक्षत" । इति । अपरे तु

क्रमविचित्रस्वभावत्वात् भावाः क्रमेण तं तमवस्थाविशेषमनुभवन्तो जन्मादि-व्यपदेशं भजन्तीत्युक्तवन्तः । यदाहुः "कारणं कार्यभावेन यदा वा व्यव-तिष्ठते । कार्यं चेदं तथा लब्धकार्यत्वं नानुजायते" इति । चतुर्ष्वपि चैतेषु पक्षेषु अनामतो विद्यते स इत्ययमेव सत्कार्यसिद्धो न्यायः । सचायुक्त इत्याह तन्नोपपद्यते इत्यादि तदेवोपपादयति तथाहीत्या-दिना ॥ १४३ ॥

वृत्तिः ।

अत्र परिहारः ।

**उत्पादयतु सर्वस्मा-**
**त्सर्वस्सर्वमभीप्सितम् ॥ १५ ॥**

**अथाशक्यं यतश्शक्य**
**मत्र वः किं नियामकम् ।**
**न च पश्यामि तत्किञ्चि-**
**च्छक्तिश्चेत्सिद्धसाध्यता ॥ १६ ॥**

आस्तां तावत्सदुत्पत्तिः । असदुत्पत्तौ कारकव-स्तुनः तुरीतन्तुवेमादेस्साफल्याभ्युपगमे सर्वेभ्यो भावेभ्य-स्सर्वस्सर्वमभीप्सितं किमिति नोत्पादयति । अथ न शक्यं सर्वस्मात्सर्वमुत्पादयितुं कुतश्चित्कस्य चित्कार्यस्यो-त्पत्तिदर्शनात् । एवं तर्हि यस्मादेव कारणाद्यद्यदुत्पद्यते

तस्मादेव तन्नान्यस्मात्। तत्र किं नियामकं भवताम्। न हि तस्मिन् कारणे किमप्यन्यन्नियामकमुत्पश्यामः। येनाभिज्ञानेनान्यदनादृत्य तदेव तदुत्पत्त्यर्थिनो गृह्णीमहि। अथ सर्वस्मात्सर्वोत्पत्तिभयात्तस्यैव कारणस्य तत्कार्यजनिका शक्तिर्नान्यस्येति तदेतत्सिद्धं साध्यत इत्याह। **शक्तिश्चेत्सिद्धसाध्यतेति**। किमन्येन कार्यकारणप्रतिनियमकारणेनेति तत्तत्कार्यजनिका शक्तिरेव नियामिका भविष्यति। अतच्छक्तिमतस्तज्जननायोगात्। यथा न पुत्रजननं षण्डस्योपपद्यते। यद्येवं तस्मिन्नेव कारणे तत्कार्यजननशक्तिमत्वं नान्यत्रेति शक्तिरूपतया तत्र तत्कार्यमवस्थितमित्यास्माकीनपक्षानुप्रवेशात् सिद्धं साध्यते भवद्भिः॥ १६॥

दीपिका।

परिहारसूत्रं व्याचष्टे। आस्तामित्यादि। शक्तिश्चेदित्यादिसूत्रखण्डमवतारयति। अथ सर्वस्मादित्यादिना। पूर्वपक्ष्याशङ्कां कुरुते। किमन्येनेत्यादि। परिहारसूत्रं व्याचष्टे। यद्येवमित्यादि॥ १६॥

वृत्तिः।

उपचयदूषणमाह[1]।

**अन्यथा कारकव्रात**
**प्रवृत्त्यनुपपत्तितः।**

---

[1] उपचय्येति पाठभेदः।

## श्रुतिरादानमर्थश्च
## व्यपैतीत्यपि तद्धतम् ॥ १७॥

अन्यथेत्यसदुत्पत्त्यभ्युपगमे कारकव्रातस्यैव प्रवृत्ति-[1] र्नोपपद्यते । असतो हि कार्यस्य वन्ध्यासुतादेरिवोत्पत्तये किं किल कारकाणि कुर्युः । कारकप्रवृत्त्यनुपपत्तेश्च घटादिचिकीर्षोर्मृत्पिण्डाद्यानयेत्यादिका श्रुतिः । तेषां च कारकाणामादानं ग्रहणं अर्थश्च तद्व्यापारलक्षणा क्रिया व्यपैति विघटते । तस्मिंश्च व्यपेते सर्वचेष्टाव्याघातः । प्रत्युत युष्मत्पक्षे जगद्व्याहतं स्यात् ॥ १७ ॥

दीपिका ।

अन्यथेत्यादिसूत्रं व्याचष्टे । अन्यथेत्यादि ॥ १७ ॥

वृत्तिः ।

ननु शक्त्यात्मना कारणे कार्यं नावस्थितम् । अपितु तदुत्पादिका शक्तिस्तत्रास्तीत्यतच्छक्तिमतस्तज्जननायोगात् कार्यकारणप्रतिनियमसिद्धौ न काचित् क्षतिरिति पराभिप्रायमाशङ्क्य तमपाकरोति ।

## अथास्त्युत्पादिका शक्ति-
## र्न कार्यं शक्तिरूपकम् ।

---

1 प्रवृत्तिः किं इति पाठभेदः ।

तयोर्विशेषणं वाच्यं
नैतत्पश्यामि किञ्चन ॥ १८ ॥

अथ मतं प्रतिनियतकार्यजनिका कारणे शक्तिरस्ति। न तु शक्त्यात्मना कार्यमवस्थितमिति तदेतच्छब्दमात्रेण भिन्नं नार्थेन। वक्तव्यं ह्यत्र विशेषणं भवता। यदुत तत्तत्कार्यजनिका शक्तिः कारणेऽस्ति। शक्त्यात्मना वा तत्तत्कार्यं कारणे व्यवस्थितमित्यत्र नहि किञ्चिद्विशेषमुत्पश्यामः ॥ १८ ॥

दीपिका।

शक्तिश्चेदित्यादिनोक्त एवार्थोऽथास्तीत्यादिसूत्रेण प्रपञ्च्यत इत्याह। नन्वित्यादि। तदेव सूत्रं व्याचष्टे। अथमतं इत्यादि ॥ १८ ॥

वृत्तिः।

यत एवं।

तस्मान्नियामिका जन्य
शक्तिः कारकवस्तुनः।
सान्वयव्यतिरेकाभ्यां
रूढितो वाऽवसीयते ॥ १९ ॥

तस्मात्स्थितमेतत् यदुत जन्यशक्तिः कारकवस्तुनो नियामिका इदमस्मादेवोत्पद्यत इति। सा च जन्य-

शक्तिरन्वयव्यतिरेकाभ्यां प्रसिद्ध्या चावगम्यते। सत्येव मृत्पिण्डे घटाद्युत्पत्तिः । असत्यनुत्पत्तिरेवेत्यन्वयव्यतिरेकौ । रूढिश्चेयं आबालबालिशाङ्गनासु स्थिता । यद्घटोत्पत्त्यर्थिनो न मृत्पिण्डव्यतिरिक्तमुपादानं कुलालस्योपहारयन्तीति । ननु यदि मृत्पिण्डे घटस्स्यात् तत्कुम्भकारव्यापारं विनाप्युपलभ्येत । नचोपलभ्यते । तस्मान्न मृत्पिण्डे घटोऽस्ति। अपितु ततः कुम्भकारेण क्रियते । यतस्तद्व्यापारानन्तरं उत्पद्यमानस्य घटस्योपलम्भः। नैतत् उपलब्धिकारणाभावात्तत्र घटस्यानुपलम्भः । न त्वसत्त्वात्। यदा पुनः कुलालादस्याभिव्यञ्जनक्रिययोपलब्धियोग्यता भवति तदोपलभ्यत एव । यथा खननादिना कीलमूलोदकादेः। ननु कीलमूलोदकादेः प्राक्सत्वे प्रमाणमस्ति। नतु मृत्पिण्डे घटस्य तस्माद्घटस्ततो भवति। नत्वभिव्यज्यत इति युक्तमुक्तम्। एवं चेत्तदत्राऽपि सत्वे प्रमाणम् असदकरणादुपादानग्रहणादित्यादि सम्भवेदित्यभिव्यक्तिवाद एव युक्तः ॥ १९॥

## दीपिका ।

जन्यशक्तिरिति । कारणस्था कार्यशक्तिरित्यर्थः । ननु सत्कार्यपक्षे जन्मनाशानुपपत्तिरितिचेत् । तन्न । यतोऽर्थक्रियायुक्तत्वमेव जन्म । तदभावस्तु नाशः । यथाह्यात्मनोऽनादित्वेऽपि शरीरयोगार्थक्रियायुक्तत्वा-

दुपचारेण जन्मत्वेनोच्यते। तद्वियोगस्तु विनाश इति। अत एव चोदयति। नन्वित्यादि। परिहरति नैतदित्यादि। यदाहुस्सांख्याः। "असदकरणादुपादानग्रहणात् सर्वस्सम्भवाभावात्। शक्तस्य शक्यकरणात् कारणाभावाच्च सत्साध्य"मिति। किंचानुभवेनापि आविर्भावतिरोभावावेव जन्मनाशौ। तयोरेव प्रत्यक्षत्वात्। तथाहि प्रत्यक्षे च क्षीराद्येव दध्यात्मना भवद्दृश्यते। न च क्षणिकत्वाद्भावानां क्षीरविनाशे दध्याद्युत्पन्नमिति वाच्यम्। क्षणिकत्वस्य पूर्वमेव निरस्तत्वादिति ॥ १९॥

वृत्तिः।

यद्येवं तर्हि सतो भावस्य सत्वादेव जननं नोपपद्यते। दृश्यमानस्य घटादेरिवेति पुनरस्स दोषस्तदवस्थ एवेत्याह।

**तद्व्यक्तिर्जननं नाम**
**तत्कारकसमाश्रयात्।**
**तेन तन्तुगताकारं**
**पटाकारावरोधकम् ॥ २०॥**
**वेमादिनाऽपनीयाथ**
**पटव्यक्तिः प्रकाश्यते ॥ २०½॥**

तदेवं पटादेर्भावस्य जननमभिमतम्। यत्तुरीतन्तुवेमादिसमाश्रयात् शक्त्यात्मनावस्थितस्य तस्याऽभि-

व्यक्तिः । यतः पटाकारप्रतिबन्धकं तन्तुगतमाकारं वेमादिकारकव्रातेनापास्यानन्तरं पटव्यक्तिः प्रकाश्यते । न तूपलभ्यमानपटान्तरवत्सदेव तन्तुभ्यः पटाद्युत्पद्यत इति । अभिव्यक्तिरपि किमसत्कार्या उत व्यङ्ग्येत्येवं कुतार्किकविकल्पपरिहारो ग्रन्थविस्तरभीरुत्वान्न लिखितः । व्यक्तिस्वभावत्वादभिव्यक्तेरभिव्यङ्ग्यता न वेत्यादयः किल वितर्का दूरापेता एव प्रकाशवत् । यथा हि प्रकाशः प्रकाशात्मकत्वात् न प्रकाशान्तरप्रकाश्यः एवमभिव्यक्तिस्वभावात् नाभिव्यक्त्यन्तरमपेक्षत इति ॥ २०३ ॥

## दीपिका ।

तद्व्यक्तिरित्यादिसूत्रस्याऽऽशङ्कामाह यद्येवं तर्हीत्यादि । अयमभिप्रायः—यदि पूर्वं सन्त एव मृदादिषु घटादयो गृहोदरादिष्विव दीपादिभिः कुलालादिव्यापारैरभिव्यज्यन्ते । कोयं विभागो दीपो घटमभिव्यनक्ति । कुलालस्तूत्पादयति । एतत्परिहारायेदं सूत्रं व्याचष्टे । तदेतदित्यादि । एतदुक्तं भवति । द्विधा खल्वभिव्यक्तिः । एका ह्यर्थप्रतिबन्धाकारस्य वस्तुनोऽबोधनिमित्तस्य तन्निमित्तभावो येन प्रतिबद्ध्यते तदुत्सारणम् । यथा घटस्यान्धकारतिरोहितस्य तदुत्सारणमभिव्यक्तिः । अन्या तु प्रतिबन्धकारणस्याकारप्रतिबन्धोत्सारणं यथा मृदादिषु घटाद्याकारः पूर्वाकारेण प्रतिबद्धः तस्य पूर्वाकारस्य प्रोत्सारणम् । घटत्वाभिव्यक्तिविशेष एवायमुत्पत्तिशब्दो ब्राह्मणविशेष इव कर्णादिशब्दोपचारत इति । अभिव्यक्तिरपीत्यादि । ननु सत्कार्यवादिनो भावान्तरवदभिव्यक्तिरपि सतीति व्यापारानर्थक्यप्रसङ्गः । सत्यम् । यद्यभिव्यक्तिरपि सती घटादिवदिष्यते सा त्वसती कारकव्यापारैराविर्भाव्येति किमनु-

पपन्नम् । ननु यद्यभिव्यक्तिरपि असतीति कुलालेन क्रियते किमपराद्धं घटेन यन्न क्रियते इति । तच्च नैवं तुल्योयमावयोरिति । तथाप्यन्धकारतिरोहितघटाभिव्यक्तौ अभिव्यक्तिरसती घटस्तु सन्नेवेति सिद्धान्तः । तत्र शक्यं प्रसंजयितुं अभिव्यक्तिवत् घटोऽपि जन्यते । तद्वच्च अभिव्यक्तिरसतीत्यादिप्रसङ्गसाधारण्येनान्यतरो न पर्यनुयोज्यः । यदुक्तं "यत्र स्यादुभयोर्दोषः परिहारोऽपि वा समः । नैकः पर्यनुयोक्तव्यस्तादृगर्थविनिश्चये" इति । वृत्तिकारस्तूभयपक्षेऽपि न दोष इत्यभिप्रायेणाह । कुविकल्पपरिहार इति । यद्येवमभिव्यङ्ग्यत्वात् अभिव्यक्तेरपीत्याद्यनवस्था । अत आह । व्यक्तिस्वभावत्वादिति । किंचाभिव्यक्तेरपि तत्सहकारिसन्निधौ तद्व्यक्तिस्वभावत्वेनास्याभिव्यक्तेरभ्युपगमात् सतीत्वे न दोषः कश्चित् । ततः कारणरूपायां मायायां शक्तिरूपाणां कार्याणामुपसंहारः सिद्धः ॥ २०½ ॥

वृत्तिः ।

तदेवं प्रकृते किं सिद्धं इत्याह ।

**यथा कटादिगूढस्य**
**पटादेस्तद्व्युदासतः ।**
**नासतः क्रियते व्यक्तिः**
**कलादेर्ग्रन्थितस्तथा ॥ २१½ ॥**

यद्वत् कटाद्यवच्छिन्नस्य पटादेर्वस्तुनः तच्छादाच्छादनापनयनान्नाविद्यमानस्य व्यक्तिः क्रियते । अपि तु

सदेव पटादि व्यज्यते । एवमुपसंहारकाले शक्त्यात्मना लीनं कलादिकार्यमहर्मुखे ग्रन्थितत्वादनन्तेशव्यापारेणाभिव्यज्यत इति मायाख्यं परमकारणं सिद्धम् ॥

इति भट्टविद्याकण्ठात्मजभट्टनारायणकण्ठविरचितायां मृगेन्द्रवृत्तौ मायालक्षणपरीक्षाप्रकरणं नवमं समाप्तम् ।

---

## दीपिका ।

एवं वक्ष्यत इत्याह । तदेवमित्यादि ।

इत्यघोरशिवाचार्यविरचितायां मृगेन्द्रवृत्तिदीपिकायां मायालक्षणपरीक्षाप्रकरणं नवमम् ।

---

## अथ कलादिकार्यप्रकरणं दशमम् ।

### वृत्तिः ।

युक्त्यागमाभ्यां ग्रन्थितत्वमुपपाद्य तत्कार्यभूतं कलादिकमभिधातुं तच्छेषभूतं प्रकरणान्तरमाह । अस्य च प्राक्तनमेव सम्बन्धपञ्चकं ज्ञेयम् ।

**ग्रन्थिजन्यं कलाकाल**
**विद्यारागनृमातरः ।**
**गुणधीगर्वचित्ताक्ष**
**मात्राभूतान्यनुक्रमात् ॥ १ ॥**

मायातत्वात्प्रथमतः कलाभिधेययोः कलानियत्योः कालस्य नृशब्देनोक्तस्य पुंसश्च पुंप्रत्ययहेतोस्तत्वविशेषस्याभिव्यक्तिः । कलातत्वात्तु विद्यारागाव्यक्तानां मातृशब्देन प्रकृतिरव्यक्ताख्या तत्सकाशाद्गुणाः तेभ्यो बुद्धिः तस्या अहङ्कारः तस्मात्तैजसाद्बुद्धीन्द्रियाणि मनश्च । वैकारिकात् कर्मेन्द्रियाणि । भूतादिसंज्ञकात् मात्रादिशब्देनोद्दिष्टानि तन्मात्राणि तेभ्यो भूतानीति अस्मादनुक्रमात् एतद्ग्रन्थितत्वतोऽभिव्यङ्ग्यं व्यनक्ति ॥ १ ॥

दीपिका ।

ग्रन्थिजन्यमित्यादिप्रकरणं संबन्धयति । **युक्त्यागमाभ्यामित्यादि अस्य चेत्यादि** । अस्य पाटलिकस्संबन्धः "कलादेर्ग्रन्थितस्तथे"ति पूर्वपटलान्ते सूचितः । वाक्यात्मकोऽपि "प्रावृतीशबले कर्ममायाकार्यमित्यादिभिर्वाक्यैः मायाकार्यत्वादेव । अन्येतु संबन्धाः पूर्वपटलोक्ता एव । तत्र ग्रन्थिजन्यमित्यादिना मायातत्वात्साक्षात्पारम्पर्येण कलादीनां त्रिंशत्संख्यानां तत्वानां पुरुषतत्वाख्यस्य पुंस्त्वमलस्योत्पत्तिः प्रतिज्ञायते इत्याह । **मायातत्वादित्यादि** । कलाशब्देनात्र तन्त्रेण न्यायेन कलानियत्योरुपादानमित्याह । **कलाभिधेययोरित्यादि** । पुरुषस्य च कलादिरूपभुवनाध्वनो रूपमित्याह । **नृशब्देनेत्यादि** । पूर्ववत्सत्कार्यवाददृशा जननं चाभिव्यक्तिरूपमित्यभिप्रेत्याह । **एतद्ग्रन्थितत्वतोऽभिव्यङ्ग्यमित्यादि** ॥ १ ॥

वृत्तिः ।

**विधत्ते देहसिद्ध्यर्थं**
**यत्साक्षाद्यत्पदान्तरात् ।**

## यथा युनक्ति यद्धेतो
## स्तादृक् तदधुनोच्यते ॥ २ ॥

अशुद्धाध्वन्यधिकृतोऽनन्तेशनाथः आत्मनां देहादिक्ल्प्त्यै ग्रन्थितत्त्वाद्यत्साक्षादव्यवधानेन कलादिकार्यं व्यनक्ति यच्च पदान्तरात्स्थानान्तरात् कलादेर्विद्यारागादिकं व्यनक्ति । तद्यस्मात्कारणादभिव्यक्तं पदार्थं वा येन प्रकारेण युनक्ति देहादिसिद्धौ योजयति तत्तादृगिदानीं कथ्यते ॥ २ ॥

### दीपिका ।

विधत्त इत्यादिसूत्रेण कर्तृपदमध्याहार्यमित्याह । **अशुद्धेऽध्वनीत्यादि** यदुक्तं किरणे "शुद्धेध्वनि शिवः कर्ता प्रोक्तोऽनन्तोऽसिते प्रभुः" । इति । **देहादिक्लृप्त्यै इति** । कार्यकरणादित्रिंशत्तत्त्वात्मकसूक्ष्मदेहासिद्ध्यर्थमित्यर्थः । नतु भुवनजदेहसिद्ध्यर्थमिति व्याख्येयम् । तेषामध्वप्रकरणे वक्ष्यमाणत्वात् । यद्वक्ष्यति "ईत्यातिवाहिकमिदं वपुरस्य जन्तोः चित्सङ्गचिद्गहनगर्भविवर्तिलेशात् । नैतावतालमिति भौवनतत्वपङ्क्तिमाधारदेहविषयाभ्युदयाय वक्ष्ये" ॥ इति । **यस्मात्कारणादिति** । प्रतितत्त्वमेषां तत्त्वानामभिव्यक्तौ युक्तिरपि कथ्यते । न त्वागममात्रमिति भावः नतु यस्मादुपादानकारणादिति व्याख्येयम् । तस्य "यत्साक्षाद्यत्पदान्तरादित्यनेनोक्तत्वात्" ॥ २ ॥

---

१. इन्द्रियप्रकरणेऽन्तिमःश्लोकः ।

वृत्तिः ।

कर्तृशक्तिरणोर्नित्या
विभ्वी चेश्वरशक्तिवत् ।
तमश्छन्नतयाऽर्थेषु
नाभाति निरनुग्रहा ॥ ३ ॥

तदनुग्राहकं तत्वं
कलाख्यं तैजसं हरः ।
मायां विक्षोभ्य कुरुते
प्रवृत्त्यङ्गं परं हि तत् ॥ ४ ॥

अणोरात्मनश्शिवशक्तिवद्यद्यपि नित्या व्यापिका च कर्तृशक्तिः । मुक्तौ तथाविधत्वश्रवणात् । तथाऽपि अनादिमलावृतत्वात् करणीयेष्वर्थेषु न निरनुग्रहा सा भाति । तस्यानुग्राहकं समर्थकं कलाख्यं तत्वं हरति भोग-भुक्त्यर्थमधोवर्तिनोऽणूनिति हरः अनन्तेशः । मायां विक्षो-भ्य प्रसवाभिमुखीं कृत्वा कुरुते अभिव्यनक्तीत्यर्थः । यस्मात्कलाख्यं तत्वं परं प्रवृत्त्यङ्गमात्मनः कर्तृस्वरूपसम-र्थनं तेनैव व्यापृतत्वात् । नह्यसौ तेनानुत्तेजितकर्तृभावः प्रवर्तितुं शक्यस्स्यात् । तैजसत्वं चास्यास्सहजमलतिर-स्करणेनाणोरेकदेशेन प्रकाशनहेतुत्वात् ॥ ४ ॥

## दीपिका ।

तत्र तावत्कलातत्वं साधयितुं कर्तृशक्तिरित्यादिसूत्रद्वयं व्याचष्टे। अणोरित्यादि। ननु कर्ममलनिरुद्धापि पुंशक्तिः महाप्रलयावसाने शिवशक्त्या प्रबोधमेष्यति। तत्किं कलाख्येन तत्वेनात आह। तस्यानुग्राहकमित्यादि। शक्तिर्हि तत्वान्तराधिष्ठानेनैव भोगदायिका। नच साक्षात्। तथा सति बुद्ध्यादीनामनुत्पादप्रसङ्गात्। ततश्चायमर्थः सिद्धे मलेऽनेनावृतत्वात्पुंसः प्रलयकेवलावस्थायामिव सुखदुःखवेदनं न भवतीत्यवश्यं तदावरणनिवर्तकेन केनापि भवितव्यमिति कलातत्वसिद्धिः। मायां विक्षोभ्येत्यादि। स्वेन चोष्मणा प्रकटीकृतस्य बीजस्योच्छूनतेव मायाकर्मविपाकसंयोगात्कला समुत्पन्ना। यथाच तण्डुलतुषादिसंयोगादङ्कुरो जायते। तथामायापुरुषकर्मनिमित्तभोग्यभोक्तृत्वसंबन्धाच्चेतना कलोत्पद्यत इति।

## वृत्तिः ।

एतदेवाह।

**तेन प्रदीपकल्पेन**
**तदाचिन्नचितेरणोः[1]।**
**प्रकाशयत्येकदेशं**
**विदार्य तिमिरं घनम्॥ ५॥**

स एष प्रागुक्तो महेश्वरस्तदा तस्मिन् मायाप्रसवाभिमुख्यकालेऽतिमलिनच्छिक्तेरात्मनः तेन तैजसेन कलाख्येन तत्वेन किञ्चित्प्रकाशकारित्वात् दीपप्रायेण

1 तदा स्वच्छचितेरणोरिति पाठभेदः।

निबिडं तमो निर्भिद्यैकदेशं प्रकटयति। मलावच्छिन्ना कर्तृतां समुपोद्बलयतीति यावत् ॥ ५ ॥

दीपिका।

मलावच्छिन्नां कर्तृतामिति। ननु मलविदारणेन ज्ञत्वमपि प्रकाशते। सत्यम्। अभिव्यक्तस्वरूपमपि तत् ज्ञत्वं वक्ष्यमाणं विद्याख्यं करणं विना स्पष्टं न प्रकाशत इत्यविरोधः ॥ ५ ॥

वृत्तिः।

कलाशब्देनोद्देशसूत्रे नियतिरपि लाघवादुपक्षिप्ता। तयोश्च कलानियत्योरन्वर्थकलाशब्दाभिधेयतां वक्तुमाह।

**कल इत्येष यो धातु**
**स्संख्याने प्रेरणे च सः।**
**प्रोत्सारणं प्रेरणं सा**
**कुर्वती तमसः कला ॥ ६ ॥**

कल इत्येष संख्यानार्थवृत्तिरेको धातुः कल क्षेप इति प्रोत्सारणार्थवृत्तिरन्यो धातुः। तत्रैकदेशे तमसो मलस्य क्षेपणं प्रोत्सारणं कुर्वाणायाः कलायाः क्षेपार्थवृत्ति प्रकृतिभूतः। द्वितीयस्तु संख्यानार्थवृत्तिः कलनादियत्तया नियमनात्कलाशब्दापरपर्यायाश्च नियतेः।

१ प्रकृतिभूत इतिशेषः।

वृत्तिः ।

इदानीमात्मनः कलायाश्च कर्तृकारकतामभिधातुमाह ।

**इत्येतदुभयं विप्र**
**सम्भूयानन्यवत्स्थितम् ।**
**भोगक्रियाविधौ जन्तो-**
**र्निजगुः कर्तृकारकम् ॥ ७ ॥**

जन्तोरनासादितभोगस्याणोर्यो भोगक्रियाविधिः तस्मिन् निष्पाद्ये इत्यनेन प्रागुक्तेन प्रकारेण एतदात्मकलाख्यं कर्तृकारकं निजगुरुपदिदिशुः गुरवः। तर्हि भोक्तृतया कर्तृत्वेनात्मोक्तः । तस्य कर्तृशक्तेरुपोद्बलनकर्तृत्वात् कारकं हेतुः कर्त्री कला । "प्रयोक्त्र्यादिमहीप्रान्त" मित्यादिना तस्या एव प्रयोक्त्री शब्देन वक्ष्यमाणत्वात् । कथं चैतत् द्वयं स्थितमित्याशङ्क्याह । **सम्भूयानन्यवदिति** । एकीभूयालक्षितव्यतिरेकमिति यावत् । उक्तं च बृहस्पतिपादैः "जन्तोर्विभात्यतिश्लेषात् साद्वितीयेव चेतना" इति । विप्रेत्यामन्त्रणेन वक्ता श्रोतारं मुनिमवहितं करोति ॥ ७ ॥

दीपिका।

कलेत्यादि नन्वचेतनत्वात्कलायाः कर्तृत्वस्य च चेतनधर्मत्वात् कथं कर्तृकारकत्वम्। अत आह तर्हीत्यादि। कारकं प्रयोजकं प्रयोजकत्वं चास्यास्तिरोधानशक्त्यधिष्ठानेनेत्यविरोधः॥ ७॥

वृत्तिः।

विद्यातत्वस्य व्यापारं वक्तुमाह।

एवं व्यक्तक्रियाशक्ति-
दिदृक्षुर्गोचरं दृशः।
भजत्यनुग्रहापेक्षां
स्वयं द्रष्टुमशक्नुवन्॥८॥

तदर्थं क्षोभयित्वेशः
कलामेव जनिक्षमाम्।
तत्वं विद्याख्यमसृज-
त्करणं परमात्मनः॥९॥

उक्तेन प्रकारेण व्यक्ता क्रियाशक्तिर्यस्य स तथाविधोणुर्गोचरं प्रतिबिंबितविषयं बुद्ध्याख्यं द्रष्टुमिच्छुर्दृशो ज्ञानस्यानुग्रहापेक्षां भजते। ज्ञानशक्त्यनुग्रहमपेक्षत इति तात्पर्यम्। स्वयं द्रष्टुमशक्नुवन्निति विशेषणभावेन हेतूपन्यासः स्वयं बोद्धुमसमर्थत्वादित्यर्थः। तदर्थमनन्तेशः

कलां तत्वाविर्भावनसहां प्रक्षोभ्य जन्यजननाभिमुखीं कृत्वाऽऽत्मनः परं प्रकृष्टं करणं विद्याख्यं सृष्टवान्। परत्वं चास्य साक्षात् साध्यस्यैवोपकारकत्वात्। तदुत्तेजितज्ञान-शक्तेः अन्तःकरणबहिःकरणयोग इति तेषामपरत्वम्॥ ९॥

दीपिका।

एवमित्यादि सूत्रद्वयमवतारयति। विद्यातत्वस्येत्यादि। तदे-तद्व्याचष्टे **उक्तेनेत्यादि**। व्यक्ता क्रियाशक्तिरिति। समर्थितेत्यर्थः। नन्वस्मिन् बोधे सामान्यविशेषशास्त्रदृष्टानि बुद्ध्यादीन्येव करणानि सन्ति। तत्कुतस्तद्व्यतिरिक्ता विद्या साध्यते अत आह। **परं प्रकृष्ट-मित्यादि**। अयमभिप्रायः। रथेन पथा दीपिकया यातीत्यादावित्रात्रानेक-करणसाध्येऽपि फले विद्यैव परं करणम्। यतस्तयैव भोग्यं जानातीति॥ ९॥

वृत्तिः।

यदुत।

**तेन प्रकाशरूपेण**
**ज्ञानशक्तिप्ररोचिना।**
**सर्वकारकनिष्पाद्य-**
**मवैति विषयं परम्॥ १०॥**

तेन विद्याख्येन तत्वेन प्रकाशकत्वात् ज्ञानशक्त्य-भिव्यञ्जकेन सर्वैर्बुद्धीन्द्रियैः कर्मेन्द्रियैश्च यथास्वं निर्वर्त्य

परं कर्तृविषयात्कार्यात्मकविषयादन्यत् ज्ञेयाख्यम्। यद्वा-परमित्यव्यवहितं विषयं प्रतिबिंबितबाह्यविषयत्वेन सन्निकृष्टं बुद्धितत्वमवैति जानाति। विद्याख्येन करणेन किल प्रतिबिंबितस्रक्चन्दनादिबाह्यविषया भोग्यरूपा बुद्धिर्गृह्यते। यदाह खेटकनन्दनः "[1]बुद्धिर्विषयाकारा सुखादिरूपा समासतो भोग्या"। तथा" "[2]रविवत्प्रकाशरूपो यदि नाम महान् तथाऽपि कर्मत्वात्। करणान्तरसापेक्षश्शक्तो ग्राहयितुमात्मानम्"। इति ॥ १० ॥

## दीपिका।

तेनेत्यादि सूत्रं व्याचष्टे तेन विद्याख्येनेत्यादि। ननु बुद्ध्यादिभिरेव भोगान् प्रतिपद्यत इत्युक्तम्। तदयुक्तमित्याह ज्ञानशक्त्यभिव्यञ्जकेनेत्यादि बुद्धेरक्षार्थबोधे तेषां च बुद्ध्यर्थबोधे व्यभिचारादिदमेवाऽऽसन्नकारणमिति भावः। अत एवाह यद्वेत्यादि। अयमर्थः अध्यवसायस्मृतिप्रतिभेतिप्रत्ययभेदभिन्ना बुद्धिरपि यया वेद्यते सा विद्या तच्च परं करणं ततः प्रकृतिजन्या बुद्धिस्तथा स्वात्मानमेव ग्राह्यतापन्नं करणत्वेन ग्राहयितुं न क्षमा ग्राह्यत्वेन बहिरङ्गत्वात् इति। किंच भोग्यं वस्तु चित्ताधिष्ठितं बुद्धीन्द्रियबृन्दं विद्याया विषयत्वेनोपस्थापयति तच्चाहङ्कारवृत्त्यात्मना परामर्शपूर्विकया बुद्ध्याऽध्यवसितं पुरुषो गृह्णाति। यदाहुः "बुद्ध्यध्यवसितमर्थं पुरुषश्चेतयते यत" इति। अतश्च बुद्ध्यादीनां सन्निहितसाध्यविषयोपस्थापकत्वेनोपयोगः। नतु संविज्जनकत्वेन। तत्र प्रस्थापितविषयं बुद्ध्यहङ्कारेन्द्रियवृत्तिभेदैर्यया विवेचयति सा विद्येति विद्यासिद्धिः। यथा च विद्यायाः प्रयोजकत्वं तथोत्तरप्रकरणे प्रश्नपूर्वकं विस्तरेण साधयिष्यति "व्यञ्जकान्तरसद्भाव" इत्यादिनेति ॥ १० ॥

---

१. तत्वसंग्रहे १३-तमश्श्लोकः। २ तत्रैव समनन्तरश्श्लोकः।

वृत्तिः ।

रागतत्वाभिव्यक्त्यर्थमाह ।

**तदभिव्यक्तचिच्छक्ति-**
**र्दृष्टार्थोऽप्यपिपासितः ।**
**नैति तज्जनकं रागं**
**तस्मादेवासृजत्प्रभुः ॥ ११ ॥**

तेन विद्याख्येन तत्वेनाभिव्यक्तज्ञानशक्तित्वात् दृष्टार्थोऽप्यणुः अपिपासितः असञ्जाताभिलाषस्सन् नैति न भोग्याहरणाय गच्छति । अतस्तस्याभिलाषस्य जनकं रागम् । तत एव कलातत्वात्प्रभवनशीलोऽनन्तेशनाथस्ससर्ज ॥ ११ ॥

दीपिका ।

तदभिव्यक्तेत्यादिसूत्रं व्याचष्टे तेनेत्यादि । अभिव्यक्तज्ञानशक्तित्वादिति । समर्थितज्ञानशक्तित्वात् । तत एव कलातत्वादिति । यदुक्तं रौरवे "कलातत्वाद्रागविद्ये द्वे तत्वे संबभूवतुः । अव्यक्तं चे"ति । ततश्चायमर्थः । इह हि सकलावस्थायां [1]सो यो भोग्यार्थविषयाभिलाषो लक्ष्यते नासौ[2] ज्ञत्वकर्तृत्ववत् स्वभावः । मुक्त्यवस्थायामदर्शनात् । नापि बुद्ध्यादिभिः । तेषां स्वकार्यैरेव सिद्धेः । कार्यान्तरहेतुत्वे प्रमाणाभावाच्च । ततो येनोपपद्यते स राग इति रागतत्वसिद्धिः । यद्येवं प्रागुक्तो मायायां मोहकस्वभावो रागोऽस्तु किमन्येन तत्रोच्यते । न मायायास्साक्षान्मोहकत्वम्[2] ।

१ जन्यत इति शेषः । २ अपित्विति शेषः ।

कार्यद्वारेणैवेत्यदोषः । स तु समलस्यैव रञ्जकः । न तु निर्मलस्य विद्येश्वरादेः । ननु रागादीनां वासनात्मतैव भवद्भिस्सांख्यैरिव बुद्धिधर्मत्वमिष्यते । नैयायिकादिवत्पुरुषवासनाऽन्यानभ्युपगमादिति तस्याऽपि सामग्र्यनुपपत्तेः वासनात्मनैव रञ्जकत्वं भविष्यतीति न तद्व्यतिरिक्तरागसिद्धिः । सत्यं वासनात्मैव बुद्धौ धर्मादिवत् रागो वर्तत इति वक्ष्यामः । स तु बुद्धिधर्मत्वादेव तद्वृत्तिलक्षणप्रत्ययान्तरवत् वासनायोगेन परिपाकवशात् स्थूलेन प्रत्ययात्मनैकीभूतः पुरुषस्योपकाराय सम्पद्यते । ततश्च प्रत्ययात्मको रागो ग्राहकगतस्य रागस्य कार्येणोपबृंहितो भोगहेतुः । न केवलः । वीतरागाभावप्रसङ्गात् । न च वासनात्मकः । बुद्धेस्सर्वदाऽनन्तवासनायोगेन पुंसो युगपद्विरुद्धानन्तप्रतिपत्तिवैषम्यप्रसङ्गादिति व्यतिरिक्तरागतत्वसिद्धिः । ननु कर्मैव रञ्जकं भविष्यति तन्न । तस्य फलजनन एव चरितार्थत्वात् । अनेकतत्वपरिकल्पनाभावप्रसङ्गाच्च । इमं च ग्राहकगतं रागमुत्तरप्रकरणे साधयिष्यति "रागो न गौण"इत्यादिना । एतानि च कलाविद्यारागादीनि तत्वानि महामायापुरुषविवेकाशिवादिवस्त्ववबोधराजसदनादिषु कारकत्वेन शुद्धाध्वन्यपि सन्तीत्युक्तं मतङ्गादौ । वक्ष्यति चाध्वप्रकरणे "एवं तत्वानि भावाश्च भुवनानि वपूंषि च । शुद्धाशुद्धाध्वनोर्विप्र व्याख्यातानि समासतः" इति ॥ ११ ॥

**स तेन रंजितो भोग्यं**
**मलीमसमपि स्पृहन् ।**
**आदत्ते न च भुंजानो**
**विरागमधिगच्छति ॥ १२ ॥**

---

१. ग्राह्यानुपपत्तेरिति पाठभेदः ।

२. व्यापारायेति पाठभेदः ।

तेन रागेण रञ्जितो जनिताभिष्वङ्गस्सोणुर्मलिनितमपि मायेयभोग्यमभिलषन्नुपाहरति । न चैवमुपभुंजानो विरज्यते। चुरादीनामणिजन्तत्वात् स्पृहन्नित्यदुष्टम् ॥१२॥

वृत्तिः ।

कालतत्वनिरूपणायाह ।

**इति प्रवृत्तः करणैः**
**कार्यारूढैस्सभौवनैः ।**
**भोगभूमिषु ना भुङ्क्ते**
**भोगान् कालानुवर्तिनः ॥ १३ ॥**

इत्येवमुक्तया रीत्या कलोत्तेजितकर्तृत्वस्सन् प्रवृत्तो भोगोद्युक्तः ना पुरुषः कालेनानुवर्तिनस्तासु तासु भोगभूमिषु सुखदुःखादिरूपान् भोगान् भुङ्क्ते। केन भुङ्क्ते इत्याह **सभौवनैः** भुवनजदेहसाहितैः करणैर्बुद्धीन्द्रियैः कर्मेन्द्रियैः त्रिविधेनान्तःकरणेन। मलिनत्वात्क्रियाज्ञानशक्त्योः कर्मेन्द्रियबुद्धीन्द्रियाणामपेक्षा। कीदृशैः करणैरित्याह **कार्यारूढैरिति।** अविभुत्वतो निराश्रयाणामेषां चेष्टाद्ययोगात् भूततन्मात्रात्मककार्याश्रयैस्सद्भिः। उक्तं च खेटकनन्दनेन "[1]एतत्कार्यं दशधा करणैराविश्य कार्यते चेष्टाम्। अविभुत्वात्करणानि तु कार्यमधिष्ठाय चेष्टन्ते" इति ॥ १३ ॥

---

१ तत्वसंग्रहे ४-तमश्श्लोकः ।

## दीपिका ।

इति प्रवृत्त इत्यादिसूत्रमवतारयति । कालतत्वेत्यादि मायोत्पन्नस्य कालस्य कथमत्र स्वरूपनिर्णयः अत आह इत्येवमित्यादि अयमर्थः आत्मा हि कालानवच्छिन्नोऽपि प्रागुक्तरागादिकञ्चुकत्रयजनितभोगसंवेदन एव कालेनकल्प्यते । अतस्समस्तमायाकार्यव्यापकोऽत्रैव कालः उपाधियोगवशाद्दीक्षायां शोध्यत्वेनोक्तः । पुरुषस्येवाव्यक्तादूर्ध्वम् । अयं च न्यायो नियत्या अपि वेदितव्यः । यद्वक्ष्यत्यध्वप्रकरणे "सर्वेन्द्रियस्सर्वतनुस्सर्वान्तः करणाश्रयः । पुरुषे नियतौ यन्ता काले कलनशक्तिमान्" । इति । श्रीमत्स्वायंभुवादावुत्पत्तिस्थान एवास्य शुद्धिरुक्ता । किमतस्तत्रवास्तु । नत्विद्धान्य श्रुतेः । नच क्रियाभेदस्तन्त्रविरोधस्य हेतुः । अपितु तद्भेदस्यैव । यदुक्तं "क्रियादिभेदभेदेन तन्त्रभेदो यतस्स्मृतः । तस्मात्तत्र यथैवोक्तं कर्तव्यं नान्यतन्त्रत" इति । पुरुषतत्वे ईश्वरस्य शक्त्यधिष्ठितेनैव कालेन कल्प्यते । यतोऽचेतनस्य चेतनाधिष्ठितस्य व्यापारयोगः प्रोक्त एवेति ॥ १३ ॥

## वृत्तिः ।

अथ कोसौ कालो नाम कुत उत्पन्नः किं वा करोतीत्यत्रोच्यते ।

**त्रुट्यादिप्रत्ययस्यार्थः**
**कालो मायासमुद्भवः ।**
**कलयन्नासमुत्थाना-**
**न्नियत्या नियतं पशुम् ॥ १४ ॥**

---

१ तन्त्रभेदस्यैवेत्यर्थः ।

त्रुटिलवनिमेषमुहूर्तादेः प्रत्ययस्य ज्ञानस्यार्थो निमित्तं यस्स कालः । स मुहूर्तमास्ते प्रहरं भ्राम्यतीत्यादि प्रतीतिरजस्रं परिवर्तिनो यस्माद्भवति । स मायात उत्पन्नः । पशुत्वेन मलेन युक्तमात्मानं कलयन् काल इत्युच्यते । यदाहुः "जलयन्त्रभ्रमावेगसदृशीभिः प्रवृत्तिभिः । स कालः कलयंस्तावत्कालाख्यां लभते ततः" । इति । कीदृशं पशुं कलयन् इत्याह । **आसमुत्थानान्नियत्या नियतं पशुं** इति नियतेस्समुत्थानं स्वकारणादभिव्यक्तिः । तत आरभ्य यावत्संहारमसौ पशुं कर्मजनिते सुखदुःखोपभोगे नियच्छति । न चायं कालस्य व्यापारः । तस्य कलनमात्र एव चरितार्थत्वात् ॥ ३४ ॥

## दीपिका ।

त्रुट्यादीति सूत्रं संबन्धयति अथ **कोसावित्यादि** । अयमभिप्रायः । योऽयं कालस्त्वया प्रोक्तस्स यदि नैयायिकादिभिरिव सर्वगतो नित्यश्चेष्यते । यदाहुः "नित्यमेकं विभु द्रव्यं परिमाणं क्रियावताम्[1] । व्यापारव्यतिरेकेण कालमेवं प्रचक्षत" । इति । तदयुक्तम् । ग्रन्थिजन्यं कलाकालेत्यादिना मायातत्वादुपादानादनन्तरं प्रेरयतीति[2] तन्नोपपद्यते । नित्यत्वाद्व्यापकत्वाच्च[3] शिवतत्वं यावदवस्थितेः । अथ ज्योतिश्शास्त्रदृष्ट्या क्रियाविशेषात्मक एवाभ्युपगम्यते "आदित्यग्रहताराादिपरिस्पन्दमथाऽपरे ।

---

१. जन्यमात्रस्य कालोपाधित्वात् क्रियावतां परिमाणमित्यर्थः । २ प्रेरयतीति यत्तन्नोपपद्यत इत्यर्थः । ३ अनित्यत्वाव्यापकत्वाच्चेति पाठभेदः ।

भिन्नमावृत्तिभेदेन कालं कालविदो विदुः'' ॥ इति । यद्येवममूर्तिमानसर्वगतः । कर्मविशेषत्वात् । पाकादिवत् । (अतस्सर्वगतं परिमाणद्रव्यं हि मूर्तिरित्युच्यते परैः) । अतश्च तस्य[1] व्यापकत्वात् पुनरपि मायातत्वादधः सर्वप्रेरकत्वं नोपपद्यते । अथ वेदान्तिसौगतदृशा व्यवहारनिबन्धन एव कालः । न पारमार्थिक इत्युच्यते । यदाहुः "केचिद्बुद्ध्यनुसन्धानपूर्वकत्वं प्रचक्षते । ज्ञानानुगतशक्तिर्वा बाह्येनासत्यतास्थितः । कालात्मानमनाश्रित्य व्यवहारो न शक्यते इति। तथाऽपि विभुरेव यावद्व्यवहारस्योक्तत्वादिति पूर्वपक्षोक्तो दोषः। अत्र हेतुश्च द्विचन्द्रादिवदविद्यारूपत्वेनासत्यत्वादिति प्रेरकत्वानुपपत्तिरेव । ननु सांख्यैः प्रकृतेः परिणत्यात्मकोऽसावित्युच्यते यदाहुः "परिणामः पृथक्भावो व्यवस्थाक्रमतस्सदा । भूतैष्यद्वर्तमानात्मा कालरूपो विभाव्यत इति। तदाप्यनवस्थितः कालः । परिणतेः क्रियात्वेनावस्थानासम्भवादिति मायातत्वादधोऽध्वनि प्रेरकत्वानुपपत्तिरेव। किंचानवस्थारूपत्वादचेतनत्वाच्च न बुद्धिपुरुषेश्वराणामिव सत्वप्रेरकपुद्गलप्रेरकत्वमुपपद्यते[2] । किंच युक्तितोऽपि मायातत्वादूर्ध्वं कालो गम्यते । तत्राऽपि सृष्टिसंहारयोगात् न तथाऽव्यवस्थितत्वादिति । रागादिभावे[3] च महाप्रळयेऽपि भवेत् । अन्यथा तथाविधनियमानुपपत्तिः । अथ प्रळये सर्वथा मायातत्वादधोऽवस्थानेन कालस्य प्रेरकत्वानुपपत्तिरिति सर्वमेतद्दूरीकृत्य तत्परिहाराय त्रुट्यादिसूत्रं व्याचष्टे। त्रुटिलवेत्यादि। **कलयन्निति**। चिरक्षिप्रादिप्रत्ययोपाधिद्वारेण प्रक्षिपन्नित्यर्थः। यदाहुः "कालो धिया विभज्यते" इति। इदं चात्राऽऽकूतम् । सांख्याभ्युपगतस्तावत्कालो न युक्तः । यतो भोक्तुर्भोगाधिकरणत्वेन स्थितायास्तनोर्वृद्धितरुणाद्यवस्थयाऽनुमीयते परिणतिव्यतिरिक्तः कालः। यदाहुः आषोडशाद्भवेद्बालः तरुणस्तु ततस्स्मृतः।

---

१. तस्याव्यापकत्वादिति पाठभेदः। २. मुपपद्यत इति पाठभेदः ३. रागाद्यभावे इति पाठभेदः।

आसक्तेः परो वृद्धः" इति। तथाहि। यदि परिणतिमात्रनिमित्तं वृद्धत्वं स्यात् तदा तस्य सर्वत्र सर्वदाचैकरूपत्वात् परिणतिविशेषनिमित्तत्वे तु स विशेषः कुतोऽस्या इति वक्तव्यम्। नाहेतुकं नित्यं सत्त्वमसत्त्वं वा। अहेतोरित्युक्तं यतः। नाऽपि स्वसन्तानमात्रात्। तस्य सर्वदैव भावात्। नाप्यन्नपानादेश्शीतोष्णादेर्वा। तस्याऽपि सर्वदैव भावेनाविशेषात्। नापि कर्मतोऽवस्थानक्रमात्। नियमेन सर्वदाभावात्। कर्मनिमित्तजात्यायुर्भोगवद्विशेषात् यस्तस्य हेतुः स काल इति। तदिदमुक्तम्। "चिराख्या कालशक्तिर्या शक्त्यन्तरविरोधिनी। सा शक्तिः प्रतिबध्नाति जायते च विरोधिनी" इति॥ एवं चिरक्षिप्रादिप्रत्ययलिङ्गत्वं कालसंसिद्धये परापरादिव्यवस्थितयोः युववृद्धयोर्देशकालपरत्वापरत्वव्यतिरेकेण परस्मिन्नपि यून्य परप्रत्ययः। अपरस्मिंश्च वृद्धे परप्रत्ययः। कालविशेषप्रतीतिविवक्षया। न च तस्मादेव निमित्ताद्व्यतिकरो युक्त इति यन्निमित्ते परत्वापरत्वे स काल इति। एवं तु न प्रकृतिपरिणत्यात्मासौ। नाप्यादित्यादिपरिस्पन्दात्मकः तद्वदेव न कल्पत इति सांख्यज्योतिषवेदान्तविदभ्युपगतकालप्रतिक्षेपः। अस्तु तर्हि नैयायिकाद्यभ्युपगत एवात्र क्रियाव्यतिरिक्तः कालः। सत्यम्। न तु नित्यो व्यापको वा तस्य विविधत्वेनानेकत्वात्। अचेतनत्वाच्च। एकरूपत्वे हि कालस्य सर्वदा पदार्थानामेककालता स्यात्। दृश्यन्ते च केचिद्वर्तमानाः केचिदतीताः भाविनश्च केचिद्भावाः। ततः कालस्यानेकत्वम्। यदाहुः। "तमः प्रकाशवत्तस्य त्रयोऽध्वानो व्यवस्थिताः। क्रमात्तेषु च भावानां क्रमात्तदुपजायते"। इति। ननु तदुपाधेः क्रियाया अतीतादिरूपत्वात् तस्यातीतादिभेदो न पारमार्थिक इति नैयायिकादयः तदयुक्तम्। तस्याऽतीतादिभावाभावादतीतादिकालयोगादेव ह्यतीतादिभेदस्तस्याः। अन्यथा सैव कालस्स्यादिति कुतः क्रियाव्यतिरिक्तकालसिद्धिः। तस्मादुपाधेः स्वतोऽतीतादिभेदासम्भवादुपाधिमतः कालस्यातीतादिभेदेनानेकरूपत्वं दिगात्मनो भुवनस्येवाभ्युपगन्तव्यं तदुक्तम्। "विशिष्टकाल-

संबन्धाल्लवकाष्ठासु शक्तिषु । क्रिया हि व्यज्यते भिन्ना वर्तमानादिभेदत इति । अत एवेतिहासाद्युक्तस्य कालस्य वर्तमानताद्यभ्युपगम्यते । यदाहुः "इदं युगसहस्रस्य भविष्यदभवद्दिनम् । तदेवाद्यत्वमायातमिति लोके विरम्यते । कालोयमागत इति" । काल एव त्रिप्रकारः । पूर्वापरदिगवस्थितानेकप्रकारात्मभुवनवत् । अत एव न दिशस्तत्त्वत्वं सन्निवेशव्यतिरेकेण सिद्धम् । कालस्य तु क्रियाव्यतिरेकेण समस्तकालनियतिव्यापकतया सिद्धं तत्वत्वमिति । शुद्धाध्वनि च कलादिवत् शुद्धरूपोऽपि कालस्सम्भवत्येव । ननु कालस्याऽनित्यत्वान्महाप्रळयावधि नियमासम्भव इत्युक्तम् । तन्न । तत्रेश्वरशक्तेरेव नियामकत्वादिति सर्वमनवद्यम् । नन्वेवं तर्हि ईश्वरशक्तिरेव कालोऽस्तु । किमन्येन । यदवसितं भगवन्नारायणोक्तितो व्यासमुनिना "कालोऽस्मि लोकक्षयकृत्प्रवृद्ध" इति । तत्र वदामः । यद्येवमीश्वरशक्तिरेव सर्वं विधास्यतीति किं पृथिव्यादिभिरपि तत्वैः । दृश्यन्ते च तानि । ततोऽनुग्रहव्यतिरेकेणान्यस्स्थित्यादि कर्म भगवान् पशूनां तत्वान्तरव्यवधानेनैव करोतीति प्रतीतेः । एतदपि तदेकदेशत्वात् प्रेरणात्मकं कालमाश्रित्य करोति न केवलया शक्त्यापीति कालस्सिद्धः ॥ इत्थं कालस्वरूपमुक्त्वा नियतेस्स्वरूपमाशङ्कापूर्वकमाह **कीदृशमित्यादि** । **स्वकारणादभिव्यक्तिरिति** । मायात्मकात् नियमश्चासौ सकलस्यैव नियामिका । नतु विज्ञानाकलप्रळयाकलयोः । नापि मायाकर्मणाम् । तदभावेऽपि तेषां नियमदर्शनात् । नापि कलादेः । स्वतः कारणशक्त्यैव नियमितत्वादित्याह । **पशुं कर्मजनिते इत्यादि** । काल एव पशुं नियमयति । किं नियत्येत्यत आह । **न चायमित्यादि** । अयमभिप्रायः नियतिर्हि यदि न भवेत् । अन्योपार्जितान्यपि कर्माणि अन्ये भुञ्जीरन् । राजनियमाभावे कृष्यादिफलानीव दस्यव इति कर्मानुष्ठानशास्त्राणामनारम्भ[1] एव स्यात् । आरब्धं[2] च । ततो

---

१ शास्त्रमनारब्धमेवेति पाठभेदः । २ शास्त्रमितिशेषः ।

यस्य पुंसः स्वानुष्ठितकर्मानुसारेण यान्युचितानि फलानि शरीराणि च तेषु नियमकारिणा केनापि तत्वेन भवितव्यम् । यच्च तत्वं सा नियतिरिति ॥ १४ ॥

वृत्तिः ।

अत्र पराशङ्का ।

ससाधनस्य भोगस्य
कर्मतन्त्रतया जगुः ।
केचिन्नियामकं कर्म
यदन्यदतिरिच्यते ॥ १५ ॥

अवश्यं तावद्भोगस्तत्साधनानि च भोक्तुः कर्माधीनानि । तदपेक्षां विना भोगवैचित्र्यस्यानुपपत्तेरित्युक्तम् । तन्नियामकत्वं च तस्यैव भविष्यति । ततश्च यदन्यन्नियत्याख्यं तत्वं कल्प्यते तदतिरिच्यते । निष्प्रयोजनत्वात्तदधिकीभवति । तथाचोक्तम् । "यस्माच्च येन च यथाच यदाच यच्च यावच्च यत्र च शुभाशुभमात्मकर्म । तस्माच्च तेन च तथाच तदाच तच्च तावच्च तत्र च विधातृवशादुपैति ॥ १५ ॥

वृत्तिः ।

अत्र परिहारः ।

भोगोर्थस्सर्वतत्वानां
सोऽपि कर्मनिबन्धनः ।

**कर्मैवास्तु शरीरादि**
**ततस्सर्वमपार्थकम् ॥ १६ ॥**

माभून्नियतितत्वम् । तदन्यदपि भोगसाधनानि तत्वानि कर्मनिबन्धनान्येव । तेषां चावश्यं कर्मापेक्षित्वात् कर्मैव केवलं भोगसाधनमस्तु यद्विनान्यान्यकिञ्चित्कारीणि । तथाच सति शरीरेन्द्रियविषयादेस्सर्वस्याऽऽनर्थक्यम् ॥ १६ ॥

दीपिका ।

भोगार्थ इत्यादिसूत्रं व्याचष्टे । माभूदित्यादि । अयमभिप्रायः । कर्मणः फलजनन एव सामर्थ्यात् न तन्नियमेऽपि[1] । तथाहि । न कर्मवासनैव कर्तृनियमसंबन्धं विदधाति । कर्मवासनात्मकत्वात् । कृष्यादिकर्मवासनावत् । ततः कर्मफलकर्तृसंबन्धस्य तत्तत्कर्मव्यतिरिक्तेनान्येन नियामकेन भवितव्यम् । कर्मफलकर्तृसंबन्धत्वात् । कृष्यादिकर्मफलकर्तृसंबन्धनियामकदृष्टनृपतिवत् । यच्च नियामकं तन्नियतिरिति नियतिसिद्धिः । कर्मसाम्यविषयश्चास्य व्यापारः कर्मविचारप्रकरणे प्रोक्त एवेति ॥ १६ ॥

वृत्तिः ।

**अथ देहादिसापेक्षं**
**तत्पुमर्थप्रसाधकम् ।**

---

१. सामर्थ्यमिति शेषः ।

**ततो नियतिसापेक्ष**
**मस्तु कर्म नियामकम् ॥ १७ ॥**

ननु देहादिसव्यपेक्षं कर्म पुरुषार्थसाधनसमर्थं न केवलम् । नह्येकं जनकं किं तर्हि सामग्र्येव कार्यजनिके- त्यत्रोच्यते । **ततो नियतिसापेक्षमिति** । एवं तर्हि यथा देहेन्द्रियादिभिस्स्वव्यापारप्रवृत्तैस्सह कर्म पुरुषार्थसाधन- क्षमं एवं स्वकार्यनिष्पादकनियतितत्वसापेक्षं तन्नियामक- मस्त्विति न कश्चिद्दोषः ॥ १७ ॥

वृत्तिः ।

**पुंस्तत्वं तत एवाभूत्**
**पुम्प्रत्ययनिबन्धनम् ।**
**आपूरकं प्रधानादे-**
**र्भौवने रुद्रसंश्रयम् ॥ १८ ॥**

संहारसमये यदनन्तनाथेन विश्रामितं तत्तस्मादेव मायातत्वात्पुंस्तत्वमाविरभूदित्यर्थः । **पुंप्रत्ययनिबन्धन- मिति** पुंप्रतीतेर्हेतुः । अनेन मायागर्भस्थेभ्योऽधिकारि- रुद्राणुभ्यस्तत्तद्भुवननिवासिभ्यश्च वैलक्षण्यमुक्तम् । तेषां पुंप्रत्ययायोगात् । तच्च पुंस्तत्वं प्रधानादेस्तत्वव्रातस्या- पूरकं पुरुषार्थत्वेन कार्यसहितस्य प्रधानस्येष्टत्वात् । एवं

छात्रहेतुकत्वादध्ययनस्य च्छात्रा अध्यापका इत्यादिवत् आपूरकशब्दो ज्ञेयः। भौवने चाध्वानि तत्पुंस्तत्वं रुद्र-संश्रयम्। तथाचोक्तं श्रीमत्स्वतन्त्रे "अतः पुरुषतत्वे तु भुवनानि निबोध मे। दिव्यास्ता सलिलौघैः इत्यादि। पुंरा-गसम्पुटितं चैतत्पुरुषतत्वं रुद्राणामाश्रयत्वेनेष्टम्। यथोक्तं किरणे "वामदेवोऽथ भीमश्चाप्युग्रश्च भवसंज्ञितः। सर्वे-शानैकवीरौ च प्रचण्डश्चेश्वरः पुमान्। उमाभर्ता ह्यजोऽनन्त एकश्चैकशिवस्ततः। रागतत्वे स्थिता एते रुद्रास्तीव्रब-लोत्कटाः। अत्रैव पुरुषो ज्ञेयः प्रधानग्रहपालक इति॥१८॥

## दीपिका।

नियतितत्वादनन्तरं पशुपदार्थे नित्यव्यापकतया साधितस्य नृतत्व-तया नामनिर्देश इति पुंस्तत्वमित्यादिनोच्यत इत्याह। **संहार इत्यादि**। एतदुक्तं भवति। दीक्षादौ संस्कार्यो वक्ष्यमाणात् प्रकृतितत्वात् श्रीकण्ठ-भुवनाच्चोद्धृत्य पुंस्तत्वे योजनीयः पुंस्त्वमलविच्छेदायेति। यतः पुंस्तत्वं कलादिनियत्यन्तेन तत्वपञ्चकेन संयुक्तमेव दीक्षादौ पुंस्तत्वनिर्देशं याति। अतोऽस्यामवस्थायामत्र योजनादि कर्तव्यम्। ततस्सकळस्यैव तत्वम्। न विज्ञानप्रळयाकलयोरिति। अत एवाह। **तच्च पुंस्तत्वमित्यादि**। अय-मर्थः। कलादिपञ्चतत्वोपबृंहितोऽणुः प्रकृतिगोचरप्राप्याभिलाषमोहेन प्राकृ-तेनानात्मना विपर्ययेण युक्त एव पुंस्तत्वनिर्देशमायाति। नच तस्य तदानीं प्रधानाद्भेदः प्रकाशते। यदाह भगवान्। पतञ्जलिः "अनित्याशुचिदुःखा-नात्मसु नित्यशुचिसुखात्मप्रतिपत्तिरविद्या" इति। ततस्तदेवात्र संयोजितः।

१ पशुपदार्थो नित्यव्यापकतया साधितस्स्यात्ततश्च नियामकनिर्देश इतीति पाठभेदः।

तस्माद्दुःखानात्मादिषु पुंस्तत्वं दीक्षया शोध्यत इति । न च तत्वत्वात्त-त्वान्तरवत् स्वस्मिन्स्थाने स्थितम् । किन्तु कर्मानुसारेण प्रतिभुवनं चरत्येव पुंस्तत्वम् । यद्येवं पुंस्तत्वस्य सर्वत्र संचरतो व्यापकत्वात् पृथिवीतत्व एव शोध्यत्वप्रसङ्गः । तन्न । प्रकृतिविषयस्य मोहस्य स्थूलत्वात् कलादिविषय-जनितसूक्ष्ममोहव्यावर्तनायात्र व्याप्तिरुक्तेत्यविरोधः । तदुक्तं श्रीमन्मतङ्गे । "न च तत्वं मुनिव्याघ्र द्वितीयं पुरुषाह्वयम् । कंचुकत्रितयव्याप्तं कालेन कलितं शनैः ॥ नियत्यालिङ्गितं याति पुम्भावेनात्मवर्तिना" । इति । तथा "तैञ्जेष्वेवोपभोगेषु पञ्चतत्वोपबृंहित" इति । पुंस्तत्वस्य चापरिणामित्वेनो-क्तत्वात् न तत्र भुवनविभाग इत्याह । **भौवने चेत्यादि** भुवनदीक्षायां सर्वेन्द्रियाख्यरुद्रोपस्थानेन तत्पुंस्त्वमलं शोध्यमिति भावः । अत एव यत्र भुवनानि श्रूयन्ते तत्र तत्र रुद्रा एव शोध्या इति दर्शयितुं श्रीमत्स्वतन्त्रे-पठितो भुवनक्रमः प्रोक्तः । कुत्र पुनस्तेषामवस्थितिरित्याह । **पुंरागसम्पुटं चेत्यादि** । तच्च श्रीमत्स्वतन्त्रादिपठितानामेव बोद्धव्यम् । अत्र प्रधानभुव-नादनन्तरमेव तत्तद्भुवनं शोध्यं रागभुवनस्य कालभुवनोर्ध्वं वक्ष्यमाणत्वात् । क्रियादिभेदेन तत्र भुवनाभ्युपगमाच्च ॥ १८ ॥

**ततः प्राधानिकं तत्वं**
**कलातत्वादजीजनत् ।**
**सप्तग्रन्थिनिदानस्य**
**यत्तद्गौणस्य कारणम् ॥ १९ ॥**

---

१. तत्वात्तत्वान्तरवदिति मातृकयोर्वर्तते । २ = पुंस्तत्वपटले १३ २-तमौ श्लोकौ । ३ = तत्रैव चतुर्थश्लोकः । ४. स्वतन्त्रागमपठित इत्यर्थः ।

ततो मायातः पुंस्तत्वप्रसवादनन्तरं कलातत्वादव्यक्तं तत्वमुदपद्यत । कीदृगित्याह । **सप्तग्रन्थिनिदानस्येति ।** यत्प्रधानं महदहङ्कारयोस्तन्मात्रपञ्चकस्येत्येवं सप्तानां ग्रन्थीनां कार्ययोनीनामुद्भवे हेतोर्गौणस्य तत्वस्य कारणम् । यथाहि काञ्चनरत्नादेरुत्तरकालभाविन्यः करिपुरुषतुरङ्गादिक्रियारूपाः कटककुण्डलाद्याभरणात्मिका वा अर्थक्रियाश्शक्तिरूपतया स्थिताः । एवं शक्त्यात्मनास्थितस्वस्वकार्यजनकतन्मात्रादिग्रन्थिसप्तककारणस्य गुणतत्वस्याव्यक्तादुद्भवः ॥ १९ ॥

दीपिका ।

अथ प्रकृतितत्वं साधयितुं "तत इत्यादि सूत्रं" व्याचष्टे । **ततो मायात इत्यादि । पुंस्तत्वप्रसवादिति ।** साक्षात्कार्यकलातत्वादित्यर्थः । **यत्प्रधानमित्यादि** अस्य गुणादिपृथिव्यन्तस्य तत्वभुवनात्मनो जगतो जन्मकारणं यत् तत्प्रधानमिति । ननु सत्वादिवृत्तय एवाव्यक्तमिति सांख्याः । तदयुक्तम् । तेषामचैतन्ये सत्यनेकत्वात् घटादीनामिवावश्यमविभागावस्थात्मना कारणेन भवितव्यमिति यत्तत्कारणं तत्सत्वादिव्यतिरिक्तं प्रधानमिति । अत एव ये सत्वनित्यत्वमिच्छन्ति ते प्रतिक्षिप्ताः । प्रधानस्याऽपि प्रतिपुरुषनियतत्वेनानेकत्वाच्च कार्यत्वसिद्धेः । ततश्च तत्तत्वप्राप्तानां तेषां न परमोक्ष इत्युक्तं पूर्वमेव । प्रोक्तं च श्रीमन्मतङ्गे । "अस्मात्परं नास्त्यपरं येषां भावः प्रतिष्ठितः । न ते मुक्ता मुनिव्याघ्र पुनरायान्त्यधोगतिम्" ॥ इति ॥ १९ ॥

---

१. मायाकार्येत्यर्थः । २. प्रधानतत्वपटले सप्तमश्लोकः । ३. अधोमुखा इति पाठभेदः ।

वृत्तिः।

**ततो बुद्ध्याद्युपादानं**
**गौणं सत्वं रजस्तमः।**
**तद्वृत्तयः प्रकाशाद्याः**
**प्रसिद्धा एव भूयसा ॥ २० ॥**

तत इति। तस्मात्प्राधानिकात्तत्वात् वक्ष्यमाण-भावप्रत्ययसहिताया बुद्धेरुद्भवहेतुः[1] गौणं तत्वं सत्वरजस्त-मोरूपमजीजनदिति पूर्वेण संबन्धः। तेषां च सत्वादीनां प्रकाशप्रवृत्तिनियमात्मिकास्तिस्रो वृत्तयो बाहुल्येन प्रथि-ता इतीह नोक्ताः ॥ २० ॥

दीपिका।

ततश्च कारणरूपादविभागात्मनः प्रकृतितत्वाद्भिन्नमेव कार्यरूपं गुणतत्वमिति वक्तुं ततो बुद्ध्यादीत्यादिसूत्रं व्याचष्टे। तत इत्यादि तेषां च गुणानां सद्वृत्तं यथास्वं बुद्ध्यादिपृथिव्यन्तेषु व्यक्तं ज्ञायत इति कृत्वा बुद्ध्यादीत्यादिना कार्यद्वारेण गुणतत्वं विशेषितमित्याह। वक्ष्यमाणेत्यादि। ततश्च बुद्धेरुद्भवहेतुरिति साक्षात्कारणमुक्तम्। अन्येषां च परंपराकारण-मित्यर्थः। बुद्ध्याद्युपादानमित्यादिशब्देन सर्वेषां गृहीतत्वात्। सप्तग्रन्थी-त्याद्यनन्तर[2]सूत्रे सूचितत्वाच्च। उक्तं च श्रीमन्मतङ्गे। "[3]व्यक्तीभूतेषु सर्वेषु गुणतत्वं स्वकं स्वकम्। विस्पष्टं शक्यते वक्तुं नान्यथा मुनिसत्तम" इति॥

---

१. तमिति शषः। २. अनन्तरसूत्रे अव्यवहितपूर्वसूत्रे इत्यर्थः। ३. गुण-पटले १६-तमश्लोकः।

सांख्यैरप्युक्तं "प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्गुणश्च षोडशकः। तस्मात् षोडशकात् पञ्चभ्यः पञ्चभूतानि इति"। प्रकाशप्रवृत्तिनियमात्मिकास्तित्र इति प्राधान्यादुक्तं अन्यासामपि गुणवृत्तीनां स्थैर्यधैर्यादीनां सम्भवात्। तदुक्तं मतङ्गे "[1]स्थैर्यं [2]धैर्यं तथा दाक्ष्यं मार्दवं लघुता तथा। सन्तोष आर्जवं शौचं व्यवसायस्तथा स्मृतिः। सौहित्यं परता क्षान्तिः दया दानं घृणा सदा। औत्सुक्यञ्चेति सत्वस्य वृत्तयस्समुदाहृताः॥ क्रौर्यं शौर्यं महोत्साहस्साभिमानस्सकल्कता। दार्ढ्यं च निर्दयत्वं च भेदो दम्भश्च [3]वृत्तयः। रजसः प्रतिपत्तव्यं तन्त्रेऽस्मिन् पारमेश्वरे। अरतिर्मन्दता दैन्यं पैशुन्यं गुरुता सदा। निद्राधिक्यं मदालस्यं निरोधो मुग्धता च या। तमसो वृत्तयः ख्याता विभिन्नास्सर्वजन्तुषु" इति ॥ २० ॥

वृत्तिः।

त्रयो गुणास्तथाप्येकं
तत्वं तदवियोगतः।
एकैकश्रुतिरेतेषा
वृत्त्याधिक्यनिबन्धना ॥ २१ ॥

गुणानां त्रित्वेऽपि परस्परावियोगात् गुणतत्वमेकं ज्ञेयम्। ननु "ये चैव सात्विका भावा राजसा ये च तामसाः। इत्यादौ भिन्नमेषां सत्वादीनां कार्यं श्रूयते। नत्ववियोगादेकमेतत्तत्वमित्याह। एकैकश्रुतिरित्यादि। येषां

---

१. गुणपटले सप्तदशश्लोकः। २. धृतिर्दाक्ष्यमिति पाठभेदे धैर्यधृत्योर्भेदश्चिन्त्यः। ३. दम्भोरजोगुणा इति पाठभेदः।

गुणानां इदं सात्विकमिदं राजसमिदं तामसमित्यादिका एकैकश्रुतिः वृत्त्याधिक्यहेतुकी अधिकवृत्तिसत्वं यस्य स सात्विकः पदार्थः। एवं राजसतामसावपि ज्ञेयौ ॥ २१ ॥

दीपिका ।

त्रयेत्यादिसूत्रं व्याचष्टे। त्रित्वेपीत्यादि। यदुक्तं तत्रैव[1] "विमिश्राश्च[2] यथा तेषां गुणानां युगपत्स्थिताः। प्रवृत्तिर्नेष्यते यस्मात् व्यस्तानां कारणोदिते। शास्त्रेऽस्मिन् मुनिशार्दूल तथाप्युत्कृष्टदर्शनात्। व्यस्तास्संपरिगीयन्त इति ॥ २१ ॥

वृत्तिः ।

इत्थं च ।

**न तदस्ति जगत्यस्मिन्**
**वस्तु किञ्चिदचेतनम् ।**
**यन्न व्याप्तं गुणैर्यस्मिन्**
**नैको वाऽमिश्रको गुणः ॥ २२ ॥**

**न तदस्तीति**। अस्मिन् जगति तादृगचेतनं वस्तु न किंचिदप्यस्ति यन्न व्याप्तं गुणैः यत्र वाऽमिश्रकोऽन्यासम्प्रक्तो एक एव[3] सत्वादिर्गुणः। उन्मग्ननिमग्नादिवृत्तिसत्वादिगुणत्रयान्वितं सर्वं जगदिति तात्पर्यम् ॥ २२ ॥

---

१. मतङ्ग एवेत्यर्थः। २. विमिश्राश्चेति पाठभेदः। ३. तद्बहुत्वापि नेत्यन्वयः।

दीपिका ।

न तदस्तीत्यादि । न चात्र चेतनानां सात्विकादित्वमुच्यते इत्याह अस्मिन् जगतीत्यादि । यस्मिन्नित्यादिना चेतनानां सूक्ष्मदेह युक्तानां गुणसम्पर्कः प्रोच्यत इत्याह । यत्र चेत्यादि ॥ २२ ॥

वृत्तिः ।

एवं गुणतत्वमुक्त्वा बुद्धितत्वं वक्तुमाह ।

**बुद्धितत्वं ततो नाना-**
**भावप्रत्ययलक्षणम् ।**
**परं तदात्मनो भोग्यं**
**वक्ष्यमाणार्थसंस्कृतम् ॥ २३ ॥**

वक्ष्यमाणलक्षणा धर्मादयो भावास्तज्जाश्च विपर्यया अशक्त्यादयः प्रत्ययास्त एव लिङ्गं सत्तागमकं यस्य तदभिधास्यमानैर्विषयैस्संस्कृतमुपरक्तं बुद्धितत्वं परं प्रकृष्टमव्यवहितमात्मनो भोग्यम् । विषयाणां भोग्यत्वेऽपि तत्प्रतिबिंबितत्वेनासन्निकृष्टत्वात् अपकृष्टत्वं यतः । उक्तंच तत्रभवत्सद्योज्योतिपादैः "बुद्धिर्विषयाकारा[1] सुखादिरूपा समासतो भोग्या" इति ॥ २३ ॥

दीपिका ।

बुद्धितत्वमित्यादिसूत्रं व्याचष्टे । वक्ष्यमाणलक्षणेत्यादि । तज्जाश्चेत्यादि । धर्मादय एव कार्यद्वारेण भोग्यदशामापन्नाः प्रत्यया इत्यर्थः ।

---

१. अष्टप्रकरणे तत्वसंग्रहे तृतीयश्श्लोकः ।

त एव लिङ्गमिति । अयमभिप्रायः । धर्माद्यात्मकानि ज्योतिष्टोमादीनि कर्माण्यनुष्ठीयमानानि समनन्तरमेव स्वर्गादिफलं न जनयन्ति। आमुष्मिकफलत्वात्स्वयं च ऋत्विग्यजमानव्यापाररूपत्वेन नष्टान्येवावभासन्त इत्यतो न फलं कर्मानुवर्तत इति शक्यते वक्तुम्। प्रत्यक्षाविरोधात्। ततस्तैः प्रत्यात्मनियतोऽपूर्वाख्यसंस्कारः फलश्रुत्यन्यथानुपपत्त्या क्रियत इत्यभ्युपगतं परैरपि । सच नात्मनि सम्भवति। अविकारित्वात्। कर्मणां च कृष्यादीनामात्मसंस्कारत्वादृष्टेरित्युक्तमपितु जड एवेति यत्र तानि संस्कारं कुर्वन्ति सा धर्माद्यष्टगुणा बुद्धिरिति । एवं ज्ञानादिसंस्कारेऽपि वाच्यः। तद्बलादेव स्वप्नस्मृतिप्रतिभादावसत्यप्यर्थे उल्लेखो दृश्यते यतः। **तदभिधास्यमानैरित्यादि**। अत एवाध्यवसायलिङ्गा बुद्धिस्सिद्धा। द्विविधोऽह्यवबोधः । अध्यवसायात्मकोऽनध्यवसायरूपश्च । यदाहुः "अस्ति ह्यालोचनं ज्ञानं प्रथमं निर्विकल्पकम्। बालमूकादिविज्ञानसदृशं शुद्धवस्तुज"मिति। ततः परं पुनर्वस्तुधर्मैर्जात्यादिभिर्यया । बुद्ध्यावसीयते साऽपि प्रत्यक्षत्वेन सम्मता" इति । तयोरनध्यवसायात्मकस्सर्वदा ग्राहकरूपेणैवावभासमान आत्मस्वभाव एवेत्युक्तम्। यस्त्वध्यवसायरूपस्स उत्पन्नत्वोपपत्त्याऽनित्यत्वेनावभासमानो न पुंसः स्वभावः । नित्यस्यानित्यस्वभावत्वायोगात्। अनयाऽपि न तेषामध्यवसेयता सम्भवति। ननु गुणैरेव भगवान् बुद्ध्यादिकार्यं विदधातु । किं बुद्ध्यादिभिः । यद्येवमीश्वरशक्तिरेव सर्वं करोतीति किं गुणादिभिरपि । अथ गुणादिव्यवधानेनैव कार्यं करोतीत्युच्यते यद्येवं बुद्ध्याद्यधिष्ठानेन तत्तदध्यवसायादिकार्यं करोतीति न कोऽपि विरोधः॥२३॥

**भावा बुद्धिगुणा धर्म-**
**ज्ञानवैराग्यभूतयः।**

---

१. उत्पन्नोपस्थितेनावभासमानेन इति पाठभेदः।

सात्विका व्यत्ययेनैते
रागमुत्सृज्य तामसाः ॥ २४ ॥

वृत्तिः ।

भावाश्चत्वारः । धर्मज्ञानवैराग्यैश्वर्याख्या बुद्धिगुणा भावसंज्ञया विज्ञेयाः । भावयन्ति आत्मनो लिङ्गं तेन भावाः इति स्मृताः । एते च सात्विका बोद्धव्याः । व्यत्ययेन विपर्ययेणैते रागमुसृज्यावैराग्यविवर्जितास्तामसाः अधर्माज्ञानानैश्वर्यरूपाः । अवैराग्यलक्षणस्तु भावो राजसः ॥ २४ ॥

दीपिका ।

भावा इत्यादिना धर्मादयो भावाः प्रोच्यन्त इत्याह । भावाश्चत्वार इत्यादि भावशब्दार्थमाह भावयन्त्यात्मनो लिङ्गमिति । बुद्धौ वासनात्वेन स्थिता धर्मादयोऽष्टौ भावा इत्यर्थः । एते चेत्यादि । सात्विकशुद्धा मतिः प्रवृत्ता यस्य पुंसः तस्य धर्मादयश्चत्वारो भावा भवन्तीति भावः । एवं राजसतामसानामपि ज्ञेयम् ॥ २४ ॥

वृत्तिः ।

प्रत्ययान् व्याचष्टे ।

प्रत्ययास्तदुपादाना-
स्तेष्टौ नव चतुर्गुणाः ।
सप्त पञ्च च विख्याता-
स्सिद्ध्याद्या वर्गशो मुने ॥ २५ ॥

ते धर्मादय उपादानमुत्पत्तिहेतुर्येषां ते संसार्यणोः प्रत्यायनात् प्रत्यया इष्टाः । कियन्त इत्याह । **अष्टौ नवे-** त्यादि । अष्टविधा सिद्धिः । नवविधा तुष्टिर्वक्ष्यमाणलक्षणा । उक्तं च सांख्यैः "ऊहश्शब्दोऽध्ययनं दुःखविघातत्रयं सुहृत्प्राप्तिः । दानं च सिद्धयोऽष्टाविति" । तथा "आध्या- त्मिकाश्चतस्रः प्रकृत्युपादानकालभाग्याख्याः । बाह्यविषयो- परमात् पञ्च नव तुष्टयोऽभिहिता" इति । चतुर्गुणा- स्सप्त अष्टाविंशतिसंख्या भवन्ति । तावत्संख्यासंख्याता अशक्तिः । कर्मेन्द्रियबुद्धीन्द्रियमनसां विघाता एकादश । बाधिर्य[1]मांध्यमघ्रात्वं मूकता जडता च या । उन्मादकाण्ड- कौण्यानि क्लैब्योदावर्तपङ्गुता" इति । बुद्धिवधाश्च प्रागु- क्तानां तुष्टिसिद्धीनां विपर्ययाः सप्तदशेत्यष्टाविंशतिः । तथा चाहुः कापिलाः । "एकादशेन्द्रियवधास्सह बुद्धिवधैरशक्ति- रुद्दिष्टा । सप्तदशवधा बुद्धेः विपर्ययास्तुष्टिसिद्धीनाम्" इति । **पंचच विख्याता** इति विपर्ययभेदास्तमोमोहमहा- मोहतामिस्रान्धतामिस्राख्या एते पंच । सिद्धयोऽष्टौ तुष्टयो नव अशक्तयोऽष्टाविंशतिरित्येवं वर्गशः क्रमेण पञ्चाश- त्प्रत्ययाः ॥ २५ ॥

---

१. बाधिर्यं श्रोत्रस्य । आन्ध्यं चक्षुषः । अघ्रात्वं नासायाः । मूकता वाचः । जडता जिह्वायाः । उन्मादो मनसः काण्डत्वं त्वचः । पाणेः कुणित्वम् । उपस्थस्य क्लैब्यम् । पायोर्गुदावर्तः । पादस्य पङ्गुतेति विवेकः । छन्दोनुरोधात्क्रमोऽविवक्षितः ।

## दीपिका।

प्रत्यया इत्यादि व्याचष्टे ते धर्मादय इत्यादि ते धर्माद। एव प्रकर्षावस्थां प्राप्ताः स्थूलेन रूपेण भोग्यदशां प्रतिपन्नाः प्रत्यया इत्यर्थः। तदेवाह संसार्यणोरित्यादि। यदुक्तं "प्रत्याययन्ति क्षेत्रज्ञं प्रत्ययास्तेनते स्मृताः"[1] इति। धर्मश्चात्र यमनियमभेदात् द्विधा भिद्यते। चित्तसंयमो हि यमः। नियमस्त्विन्द्रियसंयमः। उक्तंच मतङ्गे "धर्मश्च द्विविधः प्रोक्तो यमश्च नियमोऽपरः। अहिंसा सत्यमस्तेयं ब्रह्मचर्यमकल्कता। यमोऽयं पञ्चधा प्रोक्तो नियमश्चाप्यथोच्यते। अक्रोधो गुरुशुश्रूषा शौचं सन्तोष एव च आर्जवं चेति नियम इति[2]। गुरुशुश्रूषाचात्रोपलक्षणं अन्येषां नित्य-नैमित्तिकानां कर्मणाम्। यत्ते लक्षणे तत्रैवोक्ते। "दानोपवासतीर्थानि कीर्तितावसथादयः"[3]। तत्र कीर्तितं "स्वाध्यायस्याध्ययनं आवसथस्त्वाहिताग्निः इति। अष्टविधा सिद्धिरित्यादिना ते च सिध्यादयः पञ्चाशत्प्रत्ययाः सांख्यसिद्धा एवात्र दर्शिताः। नतु सिद्धान्तसिद्धाः श्रीमन्मतङ्गादावन्यथैव तल्लक्षणस्य तत्संख्यायाश्चाभिधानात्। अत एव सूत्रकारेणाभिहितार्थः सांख्यमतादौ प्रसिद्ध इत्यर्थः वृत्तिकारेणाऽपि तदपेक्षयैवोक्तम् उक्तं च सांख्यैरित्यादि। के पुनस्सिद्धान्तसिद्धाः प्रत्ययाः अत्रोच्यन्ते। तत्र धर्मो यमनियमभेदात् दशधा भिद्यते इत्युक्तम्। ज्ञानमेव च प्रकर्षावस्थां प्राप्तं सिद्धिरित्युच्यते तत्र गुरूपदेशानपेक्षणात् स्वबुद्ध्यूहादेव यज्ज्ञानमुत्पद्यते सैका सिद्धिः। यदाहुः "साक्षात्कृतधर्माणो ऋषयो बभूवुः। ते परेभ्योऽसाक्षात्कृतधर्मेभ्य उपदेशेन मन्त्रान् सम्प्राहुरिति" तथा स्वयं शास्त्रालोकनात् गुरूपदेशादाद्ध्यात्मिकादिदुःखत्रयोपघातात् कल्पनम्। मित्रप्राप्तिदानादिना भावितात्मनां चेत्येवं कारणभेदादष्टधा भिद्यते। यदुक्तं पराख्ये

---

१. पौष्करे पुंस्तत्वपटले ६८ तमश्श्लोकः। २ बुद्धिपटले २९=३१=तमौ श्लोकौ। ३. तत्रैव ४७-तमश्श्लोकः।

ज्ञानं चाभ्यसतो नित्यं निजबुद्ध्या यदूहितं इत्यादि । इहाऽपि वक्ष्यति । "लोकधीगुरुशास्त्रेभ्यो भाति वैनयिको गुणः" इति । एताश्च दानादीना-मुपलक्षणतया ज्ञेया इति । उक्तं च सांख्यैः "ऊहश्शब्दोऽध्ययनं दुःख-विघातत्रयं सुहृत्प्राप्तिः । दानं च सिद्धयोष्टावि"ति । एतानि च ज्ञानानि परमात्माव्यक्तगुणबुद्ध्यहङ्कारमन इन्द्रिय तन्मात्रभूतचेतनिकानां वेदान्तादि-चार्वाकान्तानां तत्तत्पदप्राप्तिहेतुतया ज्ञेयानीति मतङ्गादौ दर्शितम् । इहापि वक्ष्यति "पुंप्रेकृत्यादिविषया बुद्धिर्या सिद्धिरत्र सा" । इति । ततश्च तत्त-त्ज्ञानरूपा सिद्धिर्दर्शनभेदाद्दशधा भिद्यमाना पूर्वोक्तकारणभेदात् प्रत्येक-मष्टधा भिद्यते । एवमशीतिसंख्या भवति । सांख्यैरेतास्वज्ञानव्यतिरिक्ता-स्तुष्टयः कथिताः । यदुक्तम् "आध्यात्मिकाश्चतस्रः प्रकृत्युपादानकालभाग्या-ख्याः । बाह्यविषयोपरमात् पञ्चनव तुष्टयोऽभिहिताः" इति । तेषां त्रिंश-त्तत्वावधिमुख्यमुक्त्यपेक्षया तेषामिव सांख्यानामपि सा तुष्टिरेव यतः । यदाहुः ("लोकोन्मूलसम्प्राप्तो)ऽर्धेन तुष्टः पादेन तुष्टः" इति । इहाऽपि वक्ष्यति "तुष्टिर्नुरकृतार्थस्य कृतार्थोऽस्मीति या मतिः" । इति । अतस्त्वे-कृतावधि साध्यस्य साधनादसौ सिद्धिरुच्यते । तदितरत्राऽपि समानामिति सर्वाण्येतानि सिद्धिभेदत्वेनोक्तानि इत्यविरोधः । काः पुनरत्र तुष्टयः । अस्यैव भूततन्मात्रादिज्ञानयुक्तस्य वैराग्यादिहेतुभेदेन तुष्टिभेदो भवति । यदुक्तं श्रीमत्पराख्ये "तस्मादेकतमात्ज्ञानाद्वैराग्यमुपजायते" इति । इह हि व्याध्यादियुक्तप्राणिदर्शनेनाऽऽध्यात्मिकाधिदैविकाधिभौतिकदुःख-त्रययोगेन, धनार्जनादिना रोदनादेस्स्वजनादितः स्वस्माद्विरागतो बुद्ध्यादेः प्रतिग्रहाच्च दशभिः वैराग्यनिमित्तैः क्रमेण जुगुप्साऽऽध्यात्मिक्याधिभौति-

१. नचान्यत्स्वतन्त्रं सांख्यपातं जलानामित्यपि पुस्तकान्तरेऽधिकतया पाठोऽस्ति । २ प्रत्ययादिप्रकरणे द्वितीयश्लोकः । ३ अकृतामित्यनेन तत्संज्ञकं गुण-तत्वभुवनं कथ्यते ।

क्याधिदैविकी निश्वा प्ररोदिका विडम्बिका कामोद्भविका क्षीबिका वेग्वानसी चेति दश तुष्टयो वैराग्यभेदात् भिन्ना भवन्ति । एतत्प्राप्त्याऽऽत्मा तुष्ट एव भवति यतः । यदाहुः "यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः । स मुक्तस्सर्वपापेभ्यो याति ब्रह्मसनातनम् । इति । साच दशविधा तुष्टिः पूर्वोक्त दर्शनभेदेन भूततन्मात्रादिज्ञानयुक्तस्य प्रत्येकं भवतीति शतसंख्या भवति । तथैश्वर्यमप्यणिमादिभेदेनाष्टविधम् । तत्पुनः पिशाचादिपितामहान्तानां देवयोनीनां भूलोकस्य जलभूमिभेदेन द्विविधत्वात् तदादिष्विष्टासु स्थानेषु क्रमेणाष्टाष्टवृद्ध्या चतुष्षष्टिर्भवति । एवं धर्माणां प्रागुक्तयमनियमानां विपर्ययेषु अधर्मेषु दशसु पुंसो बुद्धिः प्रवर्तत इति अधर्मो दशधा भिद्यते । अज्ञानमपि तमो मोहमहामोहतामिस्रान्धतामिस्रं चेति पञ्चविधमेव । तत्र तमसा पुंसः प्रागुक्तास्सिद्धयो न प्रवर्तन्ते । वैराग्यात्तुष्टिरिवावैराग्यात्प्रागुक्तदर्शनभिन्नात् दशैवाऽतुष्टयः । जुगुप्सादीनां तुष्टिहेतुत्वात् न तद्भेदाद्भेद इति । ऐश्वर्यादिनाऽणिमादिशक्तिरिवाऽनैश्वर्यादणिमाद्यभावाष्टकम् । शरीराशक्तिरिन्द्रियाशक्तिर्दशधामनोऽहङ्काराशक्तिरेवेति एकविंशतिसंख्या भवन्ति । बुद्ध्यशक्तेरसिद्ध्यतुष्टिरूपाया अज्ञानावैराग्यभेदत्वेनोक्तत्वात् इति सांख्योक्तस्यापवादमेव । "एकादशेन्द्रियवधास्सहबुद्धिवधैरशक्तिरुद्दिष्टा" इति । एवमेते धर्मादयः शतत्रयसंख्या भवन्ति । उक्तं च भगवता रामकण्ठेन । धर्मोदशभिर्भेदैः ज्ञानमशीत्या शतेन वैराग्यम् । ऐश्वर्यं चतुष्षष्ट्या दशभिरधर्मः तदर्धतोऽज्ञानम् । दशभिरवैराग्यं चानैश्वर्यं भिन्नमेकविंशत्या । भावप्रत्ययभेदः संक्षेपोक्तश्शतत्रयेणायम् । इति । ननु के पुनरत्र तमोमोहादयः । उच्यन्ते । अत्र तमोनामाऽनात्मन्यात्मभावादिना दशविधसिद्ध्यहेतुत्वात् दशविधः । मोहोऽणिमाद्यप्रतिपत्तिहेतुरष्टविधः । दृष्टानुश्रवणानर्हभूतेषु यश्शब्दादिविषयेषु परत्वावबोधः स दशविधो महामोहः ।

---

१. तेच हिंसा चौर्य मिथ्याकथनं गुर्वंगनाभिगमन अपकारप्रतिकृतिः क्रोधनित्यलोप अशौच अतोषः अनार्जवाः ।

एतेषां दशानां शब्दादीनां अणिमादीनां चाष्टानां यथा साधनानुष्ठानेऽपि अप्राप्तिं पश्यतः प्राप्तानां वानाशान् यस्सन्तापस्स तामिस्रोऽष्टादशविधः । एवं प्रागुक्तेष्वष्टादशसु बलवताऽन्येन योगिना संहारे सति यद्दुःखमुत्पद्यते सोऽष्टादशविधोऽन्धतामिस्र इति । एवमवान्तरभेदादेते विपर्ययाश्चतुष्षष्टि-भेदा भवन्ति । तच्च तमश्शक्तिबलावेशादित्यादिना श्रीमन्मतङ्ग एवो-क्तमिति ॥ २५ ॥

वृत्तिः ।

येचैवं संख्यातः प्रतिपादिताः ।

**भावास्सप्रत्ययास्तेषां**
**लेशाल्लक्षणमुच्यते ॥ २५½ ॥**

दीपिका ।

भावास्सप्रत्यया इत्यादि व्याचष्टे । येचैवमित्यादि ॥ २५½ ॥

वृत्तिः ।

किं तदित्याह ।

**सांसिद्धिकाः वैनायिकाः**
**प्राकृताश्च भवन्त्यणोः ॥ २६ ॥**

एते भावास्सांसिद्धिकादिभेदात् त्रिविधास्संसारिणो भवन्ति ॥ २६ ॥

दीपिका ।

भावलक्षणमाशङ्कापूर्वमाह । किं तदित्यादि एते च भावा ब्रह्मा-दीनां सांसिद्धिका बोद्धव्याः ॥ २६ ॥

1 बुद्धिपटले १७५ तमश्श्लोकः ।

वृत्तिः ।

अथ तेषां सांसिद्धिकादीनां स्वरूपमभिधत्ते ।

विशिष्टधर्मसंस्कार-
समुद्दीपितचेतसाम् ।
गुणस्सांसिद्धिको भाति
देहापायेऽपि पूर्ववत् ॥ २७ ॥

विशिष्टेनेष्टापूर्तादिधर्मसंस्कारेण सम्यगुद्दीपितं प्ररोचितं चेतो येषां तेषाम् न परं देहसंयोगे यावद्देहापायेऽपि प्राग्वद्यो गुणः प्रकाशते स सांसिद्धिको नाम बोद्धव्यः ॥ २७॥

वृत्तिः ।

लोकधीगुरुशास्त्रेभ्यो
भाति वैनयिको गुणः ।
समार्जितो वैनयिको
मनो वाक्तनुचेष्टया ॥ २८ ॥

यस्तु यथावस्थितलोकबुद्धेर्गुरुतश्शास्त्राद्वा समार्जितस्स वैनयिको भाति प्रकाशते। **समार्जित इति ।** यो मनोवाक्तनुचेष्टया शुद्धव्यापारेणार्जितस्स वैनयिको बोद्धव्यः ॥ २४ ॥

दीपिका ।

लोकधीत्यादि व्याचष्टे । यस्त्वित्यादि । यथावस्थितलोकबुद्धे-रिति। लोकात् । कल्याणमित्रादेश्च सुबुद्धेरित्यर्थः । एते च प्रागुक्तानां दानादीनामप्युपलक्षणत्वेन ज्ञेयाः । समार्जित इत्यादिनाऽस्यैव प्रकारान्त-रेण त्रैविध्यमुच्यते इत्याह । य इत्यादि ॥ २८ ॥

**प्राकृतो देहसंयोगे**
**व्यक्तस्स्वप्नादिबोधवत् ॥ २८½ ॥**

यः पुनस्स्वप्नमदमूर्च्छाप्रबुद्धस्य यथा प्रस्तुतसंस्कार-रूपदेहसंयोग एव व्यज्यते। न देहापायेऽपि स प्राकृतो नाम गुणो विज्ञेयः ॥ २८½ ॥

वृत्तिः ।

अथैतेभ्यस्सांसिद्धिकादिभ्यो धर्मेभ्यः फलविशे-षान् वक्तुमाह।

**स्वर्गो मुक्तिः प्राकृतत्वाविघातौ**
**योनिक्रान्तिर्निरयप्राप्तिबन्धौ ।**
**रूपेष्वर्था वैनयप्राकृतेषु**
**सम्पद्यन्ते संविघातः क्रमेण ॥ २९½ ॥**

तत्र तावत् वैनयिकेषु प्राकृतेषु च रूपेषु क्रमेणा-र्थास्सम्पद्यन्ते स्थितिमुपयान्ति । के त इत्याह। **स्वर्ग इति।**

धर्मात् स्वर्गः। ज्ञानान्मुक्तिः। वैराग्यात्प्रकृतिलयः। ऐश्वर्यादविघातः। यथेष्टसिद्धिरित्यर्थः। अधर्मात्तिर्यगादियोनिप्राप्तिः। अज्ञानान्निरयावाप्तिः। अवैराग्याद्बन्धः। अनैश्वर्याद्विघातः॥ २९½ ॥

स्वर्ग इत्यादिसूत्रं सम्बन्धयति। अथेत्यादि। रूपेष्विति। धर्मादिषु भावेष्वित्यर्थः। ज्ञानान्मुक्तिरिति पूर्वोक्तदर्शनस्थानां तत्तज्ज्ञानात् तत्तत्वावधि मुक्तिरित्यर्थः। यदुक्तं "बुद्धितत्वे स्थिता बौद्धा इत्यादि"। न तु परामुक्तिः। तस्या दीक्षया विनाऽसम्भवादित्युक्तं वक्ष्यामश्च। अनैश्वर्याद्विघात इति। प्रागुक्ताऽशक्तिः॥ २९½ ॥

वृत्तिः।

अथ सांसिद्धिकेषूच्यते।

**वश्याक्रान्तिस्तत्परिज्ञानयोगो**
**भोगानिच्छा विघ्नसङ्घव्यपायः।**
**भोगासक्तिर्न्यक्कृतिर्देहबुद्धि-[1]**
**र्विघ्नश्चार्थास्तेषु सांसिद्धिकेषु ॥३०॥**

वृत्तिः।

धर्मादिषु सांसिद्धिकेषु सत्सु इदमिदं सम्पद्यत इति पूर्वेणान्वयः। किं किमित्याह वश्याक्रान्तिरिति वश्या-

१. देहलब्धिरिति पाठभेदः।

क्रान्तिस्सांसिद्धिकाद्धर्मात् । तत्परिज्ञानयोगस्तादृग्विधात्ज्ञानात् । भोगेष्वनभिलाषो वैराग्यात् । विघ्नसमूहापगमः ऐश्वर्यात् । भोगेष्वासक्तिस्सांसिद्धिकादधर्मात् । न्यक्कृतिः न्यक्कारः तथाविधादज्ञानात् । देहबुद्धिरवैराग्यात् । कार्येषु विघ्नोऽनैश्वर्यात् ।

इति भट्टविद्याकण्ठात्मजश्रीभट्टनारायणकण्ठविरचितायां मृगेन्द्रवृत्तौ
कलादिकार्यनिरूपणप्रकरणं समाप्तम् ।

## दीपिका ।

**वश्याक्रान्तिरिति** । वश्यानां स्वतत्त्वावधीनां लोकानामधिष्ठानम् । **तत्परिज्ञानयोग** इति तद्विषयज्ञानप्राप्तिः । उक्तं चैतद्भोगकारिकास्वपि "अधर्मादित्रयं रागो धर्मादि च चतुष्टयम्" इत्युपक्रम्य "एषामधोगतिर्बन्धो विघातस्संसृतिः क्रमात् । स्वर्गो मुक्तिः प्रकृतिभावोऽविघातश्च फलानि च । भवस्थानापराधोऽथ विघ्नो भोगानतिक्रमः । वश्योर्ध्वस्थितिसद्दृष्टिभृत्त्वं भोगस्पृहा फलम् । स्वचिन्तितेषु चाविघ्नोरूपे सांसिद्धिके फलम् । विनयप्राकृते रूपे पूर्वोक्तफलसङ्ग्रहः इत्यन्तेनोक्तम् ।[1]

इत्यघोरशिवाचार्यविरचितायां मृगेन्द्रवृत्तिदीपिकायां
कलादिकार्येषु बुद्धितत्वविचारप्रकरणं
दशमं समाप्तम् ।

---

१. २१ तमेपुटे ५७-तमश्लोकः ।

## अथ प्रत्ययादिप्रकरणमेकादशम् ।

वृत्तिः ।

इत्थं भावान् विचार्य प्रत्ययान् प्रागुद्दिष्टान् लक्षयितुं समनन्तरोपसंहृतप्रकरणशेषभूतं प्रकरणान्तरमाह ।

**अथ सिद्ध्यादिवर्गाणां**
**लेशात्सामान्यलक्षणम् ।**
**कथ्यते विप्लवो माभूत्**
**समासोक्तेः प्रभेदशः ॥ १ ॥**

भावोक्त्यनन्तरं प्रत्ययसम्बन्धिनां सिद्धितुष्ट्यादिवर्गाणां संक्षेपात्साधारणं लक्षणं कथ्यते । किमर्थमित्याह । **विप्लवो माभूदिति** । प्रभेदशः । प्रविभागशः या संक्षेपोक्तिः कृता तस्यास्सकाशात् विप्लवो मतिसम्मोहो माभूत् । "तेऽष्टौ नव चतुर्गुणाः । सप्त पञ्च चे"त्येतावता संक्षिप्तप्रभेदकथनेन बुद्धिविप्लवो यश्शङ्क्यते स एवंविधा तुष्टिः इत्थंविधा सिद्धिरित्येवं सामान्यलक्षणे संक्षिप्ते कृते न भवतीत्येतदर्थमित्यर्थः ॥ १ ॥

---

१ कलादिप्रकरणे पञ्चविंशश्लोकः ।

दीपिका ।

## अथ प्रत्ययादिप्रकरणमेकादशम् ।

**इत्थमित्यादि** । अनन्तरप्रकरणशेषभूतत्वादेवास्य न पृथक् सम्बन्धप्रदर्शकं वाच्यम् । शेषिसम्बन्धेनैव तत्सिद्धिरिति भावः । अथेत्यादि सूत्रं व्याचष्टे । **अथेतीत्यादि** । ननु प्रत्ययानां सामान्यलक्षणं पूर्वमेवोक्तं "प्रत्ययास्तदुपादाना"इति । तत्र हि सर्वेषां प्रत्ययानां भावजत्वमात्रमुक्तम् । इह तु सिद्ध्यादीनां वर्गानां प्रत्येकस्वरूपमित्यविरोधः । **किमर्थमित्यादि** । अयमर्थः । अष्टौ नवेत्यादिना संक्षेपेण सांख्याश्रितसिद्धपञ्चाशत्प्रत्ययसंख्याया दर्शितत्वात् सिद्ध्यादीनां स्वरूपलक्षणमपि तदुक्तमेवेति (या मतिस्सह श्रोतॄणां सामान्यलक्षणं प्रत्येकमुच्यत इति) विशेषलक्षणमस्माभिः पूर्वप्रकरण एव दर्शितम् ॥ १ ॥

वृत्तिः ।

अथ तदुच्यते ।

**पुंप्रकृत्यादिविषया**
**बुद्धिर्या सिद्धिरत्र सा ।**
**तुष्टिर्नुरकृतार्थस्य**
**कृतार्थोऽस्मीति या मतिः ॥ २ ॥**

पुंस्यात्मनि प्रकृतौ अव्यक्ते आदिग्रहणाद्व्यक्ते च या बुद्धिर्विज्ञानं सा सिद्धिरित्युच्यते । या त्वकृतार्थस्य नुः पुंसः कृतार्थोऽस्मीति बुद्धिः सा तुष्टिः ॥ २ ॥

दीपिका ।

पुंप्रकृत्येत्यादि सूत्रं व्याचष्टे । **पुंसीत्यादि** । आदिग्रहणाद्व्यक्ते **चेति** । अहङ्कारादिभूतपञ्चकपर्यन्तेषु पूर्वोक्तेषु । तदुक्तं भोगकारिकायां "व्यक्ताव्यक्तज्ञसंबुद्धिस्सिद्धिस्सम्प्रति सिद्ध्यति" । इति । **यात्वित्यादि** । **तेषु वैराग्यजनितोक्तपदप्राप्तिमात्रेणाकृतार्थतानपगमात्** । परमुक्तिप्राप्तानामेव कार्तार्थ्यं परमं यतः । अत एवोक्तं प्राक् "वैराग्यात्प्रकृतिलय" इति ॥ २ ॥

वृत्तिः ।

**अशक्तिः कारकापाये**
**सदर्थाप्रभविष्णुता ।**
**किंचित्सामान्यतोऽन्यत्र**
**मतिरन्या विपर्ययः ॥ ३ ॥**

कारकाणामन्तःकरणबहिःकरणानामपाये विनाशे सति विद्यमानेऽप्यर्थेऽप्रभवनशीलत्वमशक्तिः अन्धबधिरादेरिव रूपशब्दादौ । किञ्चित्साधारण्यादन्यस्मिन्नन्यादृशी बुद्धिर्विपर्ययः । मरुमरीचिकास्विव जलावगतिः ॥ ३ ॥

दीपिका ।

अशक्तिरित्यादिसूत्रेणाशक्तिविपर्ययावुच्येते इत्याह । **कारकाणामित्यादि** । अन्तःकरणबहिःकरणानामित्युपलक्षणं शरीरस्यापीति । **यदुक्तं** मतङ्गे "कार्यं न वशमायातीति" । अत **एवाणिमादीनामपि शरी-**

रेन्द्रियजन्यत्वात् तेषामभावोऽप्यशक्तिरित्युक्तम् । यदुक्तं तत्रैव" "[1]त्रितयं कार्यतस्सिद्धमैश्वर्यमणिमादिकम् । प्राप्त्याद्या गुणाः पञ्च योगिनां कारणात्मजाः" इति । "तथा नाणिमा लघिमा वापीत्यादि" ॥ ३ ॥

वृत्तिः ।

प्रकाशकतया सिद्धि-
र्व्यक्तादेस्सत्वभावजा ।
प्रकाशार्थप्रवृत्तत्वात्
रजोंशप्रभवाऽपि च ॥ ४ ॥

तुष्टिर्मिथ्यास्वरूपत्वात्
तमोगुणनिबन्धना ।
सुखरूपतया ब्रह्मन्
सात्विक्यप्यवसीयते ॥ ५ ॥

अशक्तिरप्रवृत्तत्वात्
तामसी दुःखभावतः ।
राजस्यपि गुणो दृष्टः
कार्ये कारणसंश्रयः ॥ ६ ॥

---

१. बुद्धिपटले ११४ तमश्लोकः ।

विपर्ययस्तमोयोनि-
र्मिथ्यारूपतया स च।
सामान्यमात्रकाभासात्
सत्वमेति विनिश्चितः ॥ ७॥

सैषा सिद्धिर्व्यक्तादिप्रकाशकत्वात् सात्विकी सत्वस्य प्रकाशस्वरूपत्वात्। किंच प्रकाशार्थप्रवृत्ततया हेतुभूतया रजोंशप्रभवाप्यसौ सिद्धिर्ज्ञेया। न ह्यमिश्रा गुणजनका इत्युक्तम्। अकृतार्थस्य कृतार्थोऽस्मीति बुद्धिस्तुष्टिः योक्ता सेयं मिथ्यारूपत्वात्तमोगुणलक्षणा सुखरूपतया सात्विकयप्यवसीयते। अप्रवृत्तिरूपाऽशक्तिरुक्ता। अतश्चासौ तामसी। दुःखहेतुत्वाच्च राजस्यापि विज्ञेया। यो हि कार्येऽशक्त्याख्ये दुःखरूपः प्रभविष्णुनारूपो वा गुणोऽस्ति सोऽवश्यं कारणाश्रयः रजस्तमोलक्षणकारणजनित इत्यर्थः। विपर्ययस्य मिथ्यारूपत्वात् तमः प्रभवत्वम्। स च विपर्ययस्साधारण्यमात्रप्र[1]काशनात् प्रकाशरूपसत्वात्मकोऽपि विनिश्चितः॥ ४=५=६=७॥

दीपिका।

प्रकाशकतयेत्यादिना सिद्ध्यादीनां सत्वादिगुणादनन्यत्वमित्याह। सैषेत्यादिना। सिद्धेर्ज्ञानभेदेनोक्तत्वात् ज्ञानस्य च सात्विकत्वात् कथं

---

१. प्राधान्यादिति पाठभेदः।

रजोंशप्रभवत्वमत आह । **नहीत्यादि** । "एकैकश्रुतिरेतेषां वृत्त्याधिक्य-निबन्धना"। इत्युक्तत्वात् । ज्ञानस्य च सात्त्विकत्वं यतो नामिश्रं परिणमत इति । एवं तुष्ट्यादिष्वपि बोद्धव्यम् ॥ ४=९=६=७ ॥

वृत्तिः ।

उपसंहरन्नाह ।

**इति बुद्धिप्रकाशोऽयं**
**भावप्रत्ययलक्षणः ।**
**बोध इत्युच्यते बोध-**
**व्यक्तिभूमितया पशोः ॥ ८ ॥**

इत्येवं प्रतिपादितो भावप्रत्ययलक्षणो बुद्धिप्रकाशः पशोस्संसारिणोर्बोधव्यक्त्याश्रयत्वात् बोधसंज्ञयोच्यते ॥८॥

दीपिका ।

इत्यादिसूत्रं व्याचष्टे । **इत्येवमित्यादि** । **बोधव्यक्त्याश्रयत्वा-दिति** । धर्मादयोऽपि भावाः संसारावस्थायां भोग्यत्वेनात्मनो ज्ञानव्यक्ति-हेतवो भवन्ति । यदुक्तं "भोगोऽस्य वेदना पुंसस्सुखदुःखादिलक्षणा" इति ।

वृत्तिः ।

अथाऽत्र मुनिस्सांख्यच्छायया प्रश्नयति ।

बुद्धिर्बोधनिमित्तं चेत्
विद्या तद्व्यतिरिच्यते ।
रागोऽपि सत्यवैराग्ये
कलायोनिः करोति किम् ॥ ९ ॥

उक्तया नीत्या बोधनिमित्तत्वं बुद्धेर्यदुच्यते तद्विद्याया आनर्थक्यं तस्या अपि बोधहेतुत्वेनाभ्युपगमात् । यदि च सामान्यव्यापारत्वेऽपि तदभ्युपगमः तदानवस्था । किंचावैराग्यलक्षणे बुद्धिधर्मे रागरूपे सत्यपि कलाजन्मा रागः किं करोति । न किंचिदप्यस्य कार्यमवैराग्येणैवातिशयवतातत्प्रयोजनस्य सम्पत्तेः ॥ ९ ॥

दीपिका ।

अत्र बोधप्रसङ्गात् भावप्रत्ययप्रसङ्गाच्च प्रागुक्तयोर्विद्यारागयोरानर्थक्यमाशङ्कमानो मुनिर्बुद्धिरित्यादिना चोदयतीत्याह । अथात्रेत्यादि ॥

वृत्तिः ।

अथैतत्प्रतिक्षेपः ।

व्यंजकान्तरसद्भावे
व्यंजकं यद्यपार्थकम् ।
मनोदेवार्थसद्भावे
सति धीरप्यनर्थिका ॥ १० ॥

बोधव्यञ्जकं विद्याख्यं तत्त्वं बुद्ध्यात्मकव्यञ्जकान्तरसद्भावे सति यद्यनर्थकं तर्हि भवतोऽपि कापिलस्य मन इन्द्रियलक्षणार्थसद्भावे बुद्धिरप्यनर्थिका । तथाहि रूपादिग्राहकचक्षुरादिकरणावधारितमनासि व्यञ्जके सति व्यञ्जकान्तरेण बुद्ध्याख्येन किं प्रयोजनम् । मनोऽधिष्ठितैरिन्द्रियैरेव तत्तत्कार्यसिद्धिर्यतः ॥ १० ॥

दीपिका ।

व्यञ्जकान्तरेत्यादिना विद्यानर्थक्यं परिहरतीत्याह । अथैतादित्यादि । बोधव्यञ्जकमिति । रूपग्रहणादावालोकेन्द्रियसन्निधानादीनामनेकेषां व्यञ्जकानां सार्थकत्वं दृष्टमिति भावः ॥ १० ॥

**अथैवं ब्रुवते केचित्**
**करणत्वविवक्षया ।**
**सोऽपि देवैर्मनष्षष्ठैः**
**पक्षोऽनैकान्तिकस्स्मृतः ॥ ११ ॥**

अथ प्रोक्तवद्बुद्धेरप्यानर्थक्यप्रसङ्गतया व्यञ्जकान्तरसद्भावे व्यञ्जकस्यानर्थक्यं प्रसज्यत इत्येवं न पर्यनुयुज्यते । किं तु करणत्वविवक्षया एवं केचिद्ब्रुवते चोद्यं कुर्वन्ति । यदुत बुद्ध्याख्ये करणे सत्यपि किं विद्याभिधानेन करणेन । यथोक्तम् । सा विद्या तत्परं करणं

1. अत्र प्रकरणे तत्त्वसंग्रहे द्वादशश्लोकः ।

इति। इहाप्युक्तम् "तत्त्वं विद्याख्यमसृजत्करणं परमात्मनः" इति। सोऽप्ययं पक्षो मनष्षष्ठैः बुद्धीन्द्रियैरनैकान्तिकः। तथाहि बुद्धीन्द्रियपञ्चकस्य स्वस्वविषयग्रहणक्रियायां करणस्य सतष्षष्ठेन मनसा करणानन्तरेण अङ्गीक्रियमाणेनानैकान्तिकीकृतमेतत् यत्करणान्तरसद्भावे करणानर्थक्यमिति प्रत्युत करणान्तरापेक्षस्य करणस्य कासुचित्क्रियासूपलम्भात्। उक्तं श्रीमत्पराख्ये "करणं करणापेक्षमाजाविभकरास्त्रवत्।" इति। यथा चैषां श्रोत्रादीनां पञ्चानां मनष्षष्ठत्वं करणत्वे सामान्येप्यात्मवादिभिरिष्टः तथा बुद्धौसत्यामपि तद्ग्राहिका विद्या सेत्स्यतीति न कश्चिद्दोषः ॥ ११ ॥

दीपिका।

सोऽप्ययं पक्ष इत्यादि। रथेन पथा दीपिकया यातीत्यादिवत् ॥ ११ ॥

एवं च पक्षद्वयेनाशङ्कितं चोद्यं समर्थ्य पक्षान्तरेणाप्याशङ्कमानस्तद्दूषणायाह।

**अथैकविनियोगित्वे**
**सत्येकमतिरिच्यते।**
**श्रोत्रदृक्पाणिपादादि**
**ततो भिन्नार्थमस्तु नुः ॥ १२ ॥**

---

१ कलादिप्रकरणे नवमश्लोकः।

नन्वेकस्मिन्विषये विनियोगोऽस्ति यस्य स पदार्थ एकः। अन्यः एकविनियोगित्वे सति अतिरिच्यते अधिकीभवति। ध्वान्तध्वंसक्षममण्यालोकसम्भव इव दीपः। ततश्च सुखदुःखमोहात्मकपुम्भोगसाधनत्वं बुद्धेरेव पर्याप्तम्। अतस्तदर्थमिष्यमाणायाः पुनरपि विद्यायाः आनर्थक्यमित्याशंक्यैतन्निरासः। **श्रोत्रदृक्पाणिपादादीत्यादि।** श्रोत्रदृक्पादपाण्यादीनि तत इति एवमभ्युपगमात् एकविनियोगित्वे सति एकस्यातिरेकत्वाङ्गीकरणे सतीत्यर्थः। नुरिति पशुत्वयोगिनो भोक्तुः पुंसः। यदुक्तं प्राक् "भोगभूमिषु नाभुङ्क्ते भोगान् कालानुवर्तिन इति। तस्य नुः पुंसः श्रोत्रदृगादि पाणिपादादि च भवत्पक्षे भिन्नार्थमस्तु एकविषयं माभूत्। ननु केनोक्तं श्रोत्रदृगादेरेकविषयत्वम्। नहि श्रोत्रग्राह्यमर्थं दृक् गृह्णाति। पाणिकार्यं वा पादः करोति। पृथगर्थत्वेनैषां प्रातिस्विकस्वरूपत्वात्। सत्यं किन्तु भोगैकसाधनत्वविवक्षयैवमुक्तम्। तथाहि भोक्तुः पुंस आदौ आम्रादिसौरभानुभवतस्तदन्वेषणोद्यमः ततश्चाम्रास्सन्तीति श्रवणात् तत्र प्रवर्तनम्। दृशा तद्दर्शनं रसनेनचास्वादनम् इत्येकविनियोगित्वमिन्द्रियाणामनुभूयमानमपि भवत्पक्षे न युक्तमभ्युपगन्तुम् आनर्थक्यभयात्। ततश्च भिन्नार्थमेव श्रोत्रदृगादि पाणिपादादि च

युष्मद्दृशा भवतु पुम्भोगकार्यहेतुत्वेनाभिन्नविषयमपि भिन्नं फलमस्त्वित्यर्थः[1] । नचैवम्[2] ॥ १२ ॥

वृत्तिः ।

इत्थं तृतीयमपि पराशङ्काप्रकारं परिहृत्य पराभिमतमेकविनियोगित्वं विद्याबुद्ध्योर्निराकर्तुमाह ।

**न चैकविनियोगित्वं**
**विद्याबुद्ध्योः कथं च न ।**
**विनियोगान्तरद्वारा**
**न दुष्टाऽनेकसाध्यता ॥ १३ ॥**

नच विद्याया बुद्धेश्चैकार्थविनियोगित्वं भिन्नविषयत्वात् विनियोगान्तरं च तद्द्वारं मुखं यस्यास्सा मुखान्तरेणान्येन विनियोगेन प्रवृत्ताऽनेकसाध्यता न दुष्टा । यथा इन्धनोदकदर्व्याद्यनेकसाधनसाध्यायाः पाकक्रियायाः पृथक्प्रयोजनत्वे सति भिन्नकारकाभ्युपगमेन न किञ्चिदपकृष्यते ॥ १३ ॥

दीपिका ।

ननु एकस्मिन्नपि आमोदादौ विषये दर्शनश्रवणादिविनियोगेन भिन्नेन्द्रियाणामानर्थक्यम् । विद्याबुद्ध्योस्तु विनियोगभेदो दृश्यते अत आह । **इत्थमित्यादि** ॥ १३ ॥

---

१ अनुभवत्वित्यर्थः इति पाठभेदः । २. अस्तीति शेषः ।

वृत्तिः ।

अथ किं तत् भिन्नविषयत्वं विद्याबुद्ध्योरित्याह ।

**विद्या व्यक्ताणुचिच्छक्ति-**
**र्नुन्नाक्षेशाक्षगोचरान् ।**
**स्वीकृत्य पुंप्रयुक्तस्य**
**करणस्येति कर्मताम् ॥ १४ ॥**

**मतिस्तेनेतरा रागो**
**न गौणस्तद्धिधर्मतः ।**
**तच्च भोग्यत्वमेतद्वा**
**वीतरागस्ततो हतः ॥ १५ ॥**

विद्या तावद्व्यक्ताणुचिच्छक्तिः । व्यक्ता उद्दीपिता अणोश्चिच्छक्तिर्ययेत्यनेनात्रदेवास्याः करणीयम् । नुन्नं प्रेरितं अवधानेन नियोजितं अक्षेशं मनो येषां तानि तथाविधानि यान्यक्षाणि इन्द्रियाणि तद्गोचरान् तद्विषयान् स्वीकृत्य । पुंप्रयुक्तस्येति । पुंसा प्रकर्षेण युक्तस्य साक्षात्स्वात्मन्येवोपकारकत्वेन स्थितस्यास्यैव विद्याख्यस्य करणस्य बुद्धिर्यतः कर्मतामेति ग्राह्यत्वमागच्छति तेनेतरा

विद्यातो दूरं भिन्ना। तदियता विद्यावैयर्थ्यं निराकृत्याथ द्वितीयचोद्यस्य निरासः। **रागो न गौणस्तद्विधर्मतः इति**। रागो न बुद्धिगुणादवैराग्याज्जातः। कुत इत्याह। **तद्विधर्मतः**। तस्मादागमोक्ताद्रागाद्गौणस्य वैधर्म्यं यतो लुप्तभावप्रत्ययो विधर्मशब्दः किं तद्वैधर्म्यमित्याह। **तच्च भोग्यत्वमिति**। अवैराग्यलक्षणो बुद्धिधर्मः स्रक्चन्दनवनितादिर्वा विषयः एवं बहिष्ठो यः परेषां रागत्वेनेष्टः तस्यैतदेव वैधर्म्यं यद्भोग्यत्वम्। भोगाभिष्वङ्गहेतुना च रागेण भोजकेन च भाव्यम्। न च भोग्यस्य भोगहेतोश्चाभेदः। एतद्वा भोग्यत्वं रागस्याङ्गीक्रियते। तर्हि **वीतरागस्ततो हत इति**। तत इत्येवमभ्युपगमाद्वीतरागाभावदोषः प्रसज्यते। भोक्तृगतरागानभ्युपगमे बहिष्ठवराङ्गनादिभोग्यविशेषरूपरागोपगमे च सति सरागवीतरागसन्निकर्षस्थस्त्र्यादौ भोग्यविषये सर्वेषां सरागता प्राप्नोति। नहि कश्चिदत्रवीतरागो भवेत्। वस्तुतो वीतरागाणामपि भोग्यविशेषसन्निधिमात्रादेव सरागताया इष्टत्वात्। उक्तं च सद्योज्योतिपादैः "भोग्यविशेषे[1] रागे नहि कश्चिद्वीतरागस्स्यात्" इति। तस्माद्भोक्तृगत एव रागोपगमः। न भोग्यविशेषरूपस्सुमादिः अवैराग्यलक्षणबुद्धिधर्मात्मको वा ॥ १५ ॥

---

१. अष्टप्रकरणे तत्वसंग्रहे दशमश्श्लोकः।

दीपिका ।

विद्येत्यादिसूत्रं व्याचष्टे । **विद्यातावदिति । व्यक्ताणुचिच्छक्तिरिति ।** समर्थितभोक्तृज्ञानशक्तिः विद्यया विना तस्य बुद्धिदर्शने सामर्थ्यं न सम्भवतीत्युक्तम् । एतच्च पूर्वोक्तमेवेति । राग इत्यादिना रागवैयर्थ्यं निराकरोतीत्याह **तादियतेत्यादि ।** अवैराग्यलक्षणो बुद्धिधर्म इति सच वासनारूपो न कार्यकर इत्युक्तम् । प्रत्ययरूपोऽपि भोग्यत्वात् नाभिलाषहेतुरित्यनन्तरमेववक्ष्यति । ननु गुणत्रयविषय एवाभिलाषहेतुरस्तु किमन्येनेत्यत आह । **स्रक्चन्दनवनितेत्यादि** एतदपि पूर्वप्रकरण एव साधितमिति । (भोग्यत्वं सम्पादयति विषयानात्मनश्च) ॥ १९ ॥

वृत्तिः ।

अतश्च ।

**रागोऽर्थेष्वभिलाषो यो**
**न सोऽस्ति विषयद्वये ।**
**कर्मास्तु व्यापकं कल्प्यं**
**कल्पितेऽपीतरत्र यत् ॥ १६ ॥**

उक्तवद्भोक्तृगतो रागः योऽर्थेषु स्रगादिषु अभिलाष इत्यभिलाषहेतुरेवाभिलाषशब्देनोक्तः । कारणे कार्यस्याभेदोपचारात् आयुर्घृतमितिवत् । स च रागाख्योऽर्थेष्वभिलाषहेतुर्विषयद्वये एकस्मिन् बाह्ये स्रक्चन्द-

१. कुण्डलान्तर्गतं वाक्यं चिन्त्यम् ।

नादौ वीतरागाभावप्रसङ्गतया नास्तीत्यभ्युपगन्तव्यः। द्वितीयस्मिंस्तु अवैराग्यलक्षणे बुद्धिधर्मे भोग्यरूपत्वादभिलाषहेतुत्वं नास्ति। यस्मादभिलाषहेतुना रागेण जन्यते असौ बुद्धिगतस्पृहात्मकः क्रियारूपो भोग्यत्वसम्पादक इत्यलम्। ननु कर्मैव सुखदुःखादिरूपं भोग्यमभिलाषहेतुत्वेन भविष्यति इत्याह। **कर्मास्तु व्यापकं कल्प्यं इति**। प्रागुक्तेऽस्मिन् विषयद्वये सरागवीतरागात्मकव्यवस्थापकत्वेन व्यापकं कर्मास्तु यत्तदितरत्रेति रागे परिकल्पितेऽपि कल्प्यं किलावश्यमभ्युपगन्तव्यम्। तद्धेतोरपि कर्मैष्टव्यम्। तदेव तद्वस्तुवैचित्र्यात् सरागवीतरागताकारणत्वेनास्त्विति पूर्वः पक्षः ॥ १६ ॥

वृत्तिः।

सिद्धान्तस्तु।

**कर्मणः केवलस्योक्तं**
**नियतावेव दूषणम्।**
**दोषस्सहानवस्थानो**
**नासाम्याद्वेषरागयोः ॥ १७ ॥**

केवलस्य कर्मणो नियतिसिद्धावेव दूषणं दर्शितम्। तथाचोक्तम्। "भोगोऽर्थस्सर्वतत्वानां सोऽपि कर्मनिबन्धनः।

१. कलादिप्रकरणे षोडशश्लोकः।

कर्मैवास्तु शरीरादि ततस्सर्वमपार्थकम् । अथ देहादिसापेक्षं तत्पुमर्थप्रसाधकम् । ततो नियतिसापेक्षमस्तु-कर्मनियामकमिति" । तस्मात्तनुकरणभोगादिवैचित्र्यमात्र एव चरितार्थत्वात् कार्यान्तरे प्रमाणाभावाच्च न कर्मणो रागकार्यसम्पादकत्वम् । अपितूक्तप्रयोजनः कलाजन्यो रागस्सिद्धः । न च रागवत् द्वेषस्याऽपि तत्वान्तरत्वम् । द्वेषादीनां रागजनितप्रवृत्तिविशेषात्मकत्वात् कस्मिंश्चिदभिलषणीये वस्तुनि किल व्याहन्यमानेऽस्य द्वेषादयस्संजायन्ते । नन्वितरेतरोपमर्देन रागद्वेषयोर्यतोऽवस्थितिः तस्मादेकस्मिन् पुंसि सहानवस्थानदोषः प्राप्नोतीत्याह । **दोषस्सहानवस्थानो इति** । कस्तावदयं सहानवस्थानदोषः । यद्येककालतया तदेतन्न दूषणम् । अपितु भूषणमेव । नाहि यदैव यत्र वस्तुनि रागस्तदानीमेव तत्र द्वेषः अथ यस्मिन्नेव भोक्तरि रागस्तत्र द्वेषः इत्येतन्नोपपन्नं तदप्ययुक्तम् । न ह्यनयोराश्रये विरोधः किन्तु विषये [1]अतुल्यकालत्वेन रागद्वेषयोः क्रमिकतयैकस्मिन्नाश्रये विषये व्यापृतौ न कश्चिद्दोषः । भवद्भिरुद्भावितस्य सहानवस्थानस्येष्टत्वात् ॥ १७ ॥

---

१ अतुल्यबलत्वेनेति पाठभेदः ।

दीपिका ।

दोष इत्यादि सूत्रखण्डं व्याख्यातुं पीठिकां रचयति । नचेत्यादि । द्वेषस्य रागजन्यत्वे रागिण्येव पुंसि द्वेषो भवति । ततश्च सहानवस्थानदोष इत्याह । नन्वित्यादि । अस्यैवोत्तरतया दोष इत्यादि व्याचष्टे । कस्तावदिति ॥ १७ ॥

वृत्तिः ।

तथाहि ।

सर्वस्य सर्वदा सर्वा-
प्रवृत्तिस्सुखबुद्धिजा ।
प्रवृत्तस्य सुखं दुःखं
मोहो वाप्युपजायते ॥ १८ ॥

प्रवृत्त्यनन्तरं द्वेषो
रागस्तत्पूर्वकालजः ।
द्वेषान्ते स पुनर्येन
वीर्यवद्योगकारणम् ॥ १९ ॥

सर्वस्य व्यवहर्तुः सर्वा व्यवहृतिस्सुखबुद्धिसम्भवा प्रवृत्तस्य चास्य सुखं वा दुःखं वा मोहो वा जायते । भोजनादि प्रवृत्त्यनन्तरं च तत्रैव द्वेषः । तत्पूर्वकालजस्तु रागः । पुनश्च

द्वेषान्ते कस्मिंश्चित्काले तदभिलाषः। यस्माद्यदेव वीर्यवत् बलीयः तदेव योगस्याभिष्वङ्गजनितस्य संश्लेषस्य कारणं यत एवं तस्माद्रागस्य द्वेषात् बलीयस्त्वात् सहानवस्थानदोषो न दोषः ॥ १९ ॥

दीपिका।

यदेव वीर्यवदित्यादि। रागात्मकः ॥ १९ ॥

वृत्तिः।

इत्थं प्रासङ्गिकं रागतत्वोत्पत्तिमुक्त्वा अहङ्कारतत्वव्यापारमाह।

**अथ व्यक्तान्तराद्बुद्धेः**
**गर्वोऽभूत्करणं चितः।**
**व्यापाराद्यस्य चेष्टन्ते**
**शारीराः पञ्च वायवः ॥ २० ॥**

अव्यक्ताद्व्यक्तं गुणतत्वं व्यक्तान्तरं तत्कार्यं बुद्धिस्तस्यास्सकाशादहङ्कारः चितः आत्मनः संरम्भवृत्त्यन्तःकरणमुपपद्यते। यद्व्यापाराच्छरीरान्तश्चराः प्राणाः पञ्च वायवश्चेष्टन्ते। स्वं स्वं व्यापारं विदधति ॥ १० ॥

वृत्तिः।

के त इत्याह।

प्राणापानादयस्ते तु
भिन्ना वृत्तेर्न वस्तुतः।
वृत्तिं लेशान्निगदतो
भरद्वाज निबोध मे ॥ २१ ॥

प्राणापानादयो ये पञ्च वायवः ते वृत्तेर्व्यापारभेदाद्भिन्नाः । न त्वेषां वास्तवो भेदः । वायुरूपत्वाविशेषात् । अथैषामेव व्यापारभेदं वक्ति वृत्तिं लेशादिति ॥२१॥

वृत्तिः ।

तत्र का प्राणस्य वृत्तिरित्याह ।

वृत्तिः प्रणयनं नाम
यत्तज्जीवनमुच्यते ।
यत्तादृहं मतिः पुंसां
भ्रमत्यन्धेव मार्गति ॥ २२ ॥

तत्कुर्वन्नुच्यते प्राणः
प्राणो वा प्राणयोगतः ।
चित्यातिवाहिके शक्तौ
प्राणशब्दः कलासु च ॥ २३ ॥

प्रकर्षेण नयनं प्रणयनं कोष्ठस्थस्य वायोर्बाह्ये द्वादशान्तं यावत्प्रे[1]याणं सैषा प्राणस्य वृत्तिर्व्यापारः एतच्च व्यापारतो निर्वचनं फलतस्सूच्यते। यत्तज्जीवनं नाम सा प्राणस्यैव वृत्तिः। अयमाशयः प्रणयनात्प्राण इति निरुक्तदृशा व्यापारेण प्राणशब्दो लक्षितः प्रकर्षेणाननं प्राणनं जीवनं ततोऽपि प्राण इत्युच्यते इति फलविषयस्य निर्वचनं फलतस्तूच्यते यतः। पुरुषाणामूहं मार्गयमाणांऽधेव मतिर्भ्रमति स प्राणस्यैव व्यापारः। ऊहो विमर्शात्मकस्तर्कः। तत्रास्या धियः प्राणेनैव प्रेरणं क्रियते प्राणरथाधिरूढाहि सा संविद्विमृशति। प्राणो वा बलम्। तद्योगात्प्राण उच्यते यस्माच्चिति चैतन्ये आतिवाहिके कलादिक्षित्यन्ते तत्वशरीरे शक्तौ च बलात्मिकायां कलासु च सोमसूर्याद्यात्मिकासु प्राणशब्दो ज्ञेयः ॥ २३ ॥

दीपिका ।

[2](करोतीत्येव अत्र एव शब्दोऽवधारणत्वात्) जीवनमपि प्राणकार्यमित्याह। **फलतस्सूच्यत इत्यादि**। प्राणे हि सति शरीरं जीवतीत्युच्यते। व्यापारान्तरमाह। **पुरुषाणामित्यादि**। अन्यथानिर्वचनमाह। **प्राणो वा इत्यादि** ॥ २२ ॥

---

१. प्रापणमिति पाठभेदः। २. कुण्डलीकृतमेतद्वाक्यं चिन्त्यम्।

वृत्ति ।

अपानस्य वृत्तिमाह ।

तथापनयनं भुक्त
पीतविण्मूत्ररेतसाम् ।
कुर्वन्नपानशब्देन
गीयते तत्वदर्शिभिः ॥ २४ ॥

अपनयनं अधः प्रापणं भुक्तपीतविण्मूत्ररेतसां यत्करोति अतस्तत्वज्ञैरपानाख्ययोक्तः ॥ २४ ॥

वृत्तिः ।

अथ समानव्यानयोर्व्यापारोक्तिः ।

समन्ततोऽन्नपानस्य
समत्वेन समर्पणम् ।
कुर्वन् समान इत्युक्तो
व्यानो विनमनात्तनोः ॥ २५ ॥

अन्नपानस्य सर्वत्र साम्येन नियमनात् समानस्य समानत्वम् । देहस्य विनमनात् व्यानस्य व्यानता ॥ २५ ॥

दीपिका ।

देहस्य विनमनादित्यादि फलञ्चोपलक्षणं व्याधिप्रकोपादेः । यदुक्तं श्रीमत्कालोत्तरे, "व्यानो विनमयत्यङ्गं व्यानो व्याधिप्रकोपनम् । प्रीतेर्विनाशकरणो व्यापनाद्व्यान उच्यते" । इति ॥ २५ ॥

वृत्तिः ।

उदानस्य वृत्तिरुच्यते ।

विवक्षायत्नपूर्वेण
कोष्ठव्योमगुणध्वनेः ।
वागिन्द्रियसहायेन
क्रियते येन वर्णता ॥ २६ ॥

स उदानश्शरीरेऽस्मिन्
स्थानं यत्नस्य धारणे ।
जयः फलं वाच्यशेषं
पत्या [illegible]रितम् ॥ २७ ॥

वक्तुमिच्छा विवक्षा यत्नस्संरम्भः तौ पूर्वौ यस्य सः एवं कोष्ठस्य व्योम्न आन्तरस्याऽऽकाशस्य गुणरूपो यश्शब्दस्तस्य येन वागिन्द्रियसाचिवेन विवक्षायत्नपूर्वेण विभज्य वैचित्र्यं क्रियते सोऽस्मिन् देहे उदानशब्दो ज्ञेयः ।

**यस्य च वायोः प्राणादेः यत्स्थानं धारणे सति जयश्च तज्जयात्फलं तदेतद्वक्तव्यं शेषभूतं भगवता प्रकरणान्तरेण योगपादाख्येनोद्दिष्टम् ॥ २६=२७ ॥**

---

इति भट्टविद्याकण्ठात्मजश्रीभट्टनारायणकण्ठविरचितायां मृगेन्द्रवृत्तौ
प्रत्ययप्रकरणमेकादशं समाप्तम् ।

---

## दीपिका ।

विवक्षेत्यादिव्याचष्टे । **वक्तुमिच्छेत्यादि** । यदाहुः "आकाशवायुप्रभवश्शरीरात् समुच्चरन् वक्त्रमुपैति नादः । स्थानान्तरेषु प्रविभज्यमानो वर्णत्वमागच्छति यस्स शब्दः" इति । एतच्चोपलक्षणं स्पन्दादेः । यदुक्तं श्रीमत्कालोत्तरे "स्पन्दयत्यधरं वक्त्रं नेत्रं गात्रं प्रकोपतः । उद्वेजयति मर्माणि उदानो नाम मारुतः" । इति । ते भेदाः प्राधान्यादत्र प्रदर्शिताः । अप्रधानानामपि नागादीनां सम्भवात् । तदुक्तं तत्रैव । "उद्गारे नाग इत्युक्तः कूर्म उन्मीलने स्थितः । कृकरस्तु क्षुधे चैव देवदत्तो विजृम्भणे । धनञ्जयस्स्थितः पोषे मृतस्याऽपि न मुञ्चति" इति । **यस्य च वायोरित्यादि** । स्थानधारणादीनां योगाङ्गत्वात्तत्रैव तानि द्रष्टव्यानीति । अतश्च योगपादशेषभूत एवात्र प्रसङ्गात् वायुभेदस्तद्वृत्तिभेदश्च दर्शितः । यदुक्तं "यस्य येन हि सम्बन्धो दूरस्थस्याऽपि तस्य स" इति । स्कन्धशब्दोऽनन्तरप्रकरणे वक्ष्यमाणानां अहङ्कारस्कन्धानामपेक्षयाऽर्थतश्च ज्ञेय इति ।

---

इत्यघोरशिवाचार्यविरचितायां मृगेन्द्रवृत्तिदीपिकायां
प्रत्ययादिविचारप्रकरणं समाप्तम् ।

---

## अथ द्वादशमिन्द्रियादिप्रकरणम् ।

वृत्तिः ।

इदानीमहङ्कारस्य त्रैरूप्यं तत्कार्याणि तद्विचारश्च प्रस्तूयन्त इति प्रकरणान्तरारम्भः । प्राग्वत्सम्बन्धपञ्चकमत्राप्यनुसन्धेयम् ।

**अथ शेषार्थसिद्ध्यर्थं**
**स्कन्धानस्यात एव सः ।**
**त्रीन्निश्चकर्ष सत्वादि**
**भूयिष्ठानीशशक्तिगः ॥ १ ॥**

अथानन्तरं शेषभूतस्यार्थस्य तन्मात्रेन्द्रियादेस्सिद्ध्यर्थ अस्याहङ्कारस्य । अत एवेति । अहङ्कारादेव स भगवान् अनन्तरप्रकरणान्ते पतिशब्देनोक्तो यः स मायागर्भाधिकारिणामनन्तादीनामीशानां शक्तिगः तदभिव्यक्तशक्तिः सत्वरजस्तमोबहुलान् त्रीन् स्कन्धान् पर्वाणि निश्चकर्ष कृष्टवान् । अविभिन्नमहङ्कारमाविर्भाव्य त्रिधा व्यभजदित्यर्थः ॥ १ ॥

दीपिका ।

अथ द्वादशमिन्द्रियादिप्रकरणम् ।

अथेत्यादिप्रकरणमवतारयति इदानीमित्यादि । प्राग्वदित्यादि । तत्र पाटलिकस्संबन्धः पूर्वपटलान्ते दर्शितः । वाक्यात्मकोऽपि "गुणधी-गर्वचित्ताक्षमात्राभूतान्यनुक्रमात्" इत्यादिवाक्यैः । अन्ये[1] तु पाशपदार्थारम्भ एव प्रोक्ता इति स इति पदं प्रकृतपरामर्शीत्याह । भगवानित्यादि । ननु शुद्धेऽध्वनि शिवः कर्ता प्रोक्तोऽनन्तोऽसिते प्रभुः" इत्युक्तं अत आह । स मायागर्भाधिकारिणामित्यादि । निश्चकर्षशब्दोऽत्र विभागवाचीत्याह । अविभिन्नं इत्यादि ॥ १ ॥

वृत्तिः ।

तदेव त्रैविध्यमाह ।

**तैजसो वैकृतो योऽन्यो**
**भूतादिरिति स स्मृतः ।**
**तेभ्यस्समात्रका देवा**
**मात्रेभ्यो भूतपञ्चकम् ॥ २ ॥**

तैजसवैकारिकभूतादिकसंज्ञकेभ्यस्तेभ्योऽहङ्कारस्कन्धेभ्यो देवा बुद्धीन्द्रियकर्मेन्द्रियाख्याः समात्रकाः

---

१ अन्ये तु संबन्धा इत्यर्थः । इन्द्रियादीनामपि पाशत्वात् पाशप्रकरणारम्भ एवोक्ता इत्यर्थः ।

तन्मात्रासहितास्तन्मात्रेभ्यश्च भूतपञ्चकमभिव्यक्तमिति शेषः ॥ २ ॥

दीपिका ।

तदेवेत्यादि सत्वादिधर्मोऽहङ्कारस्य (दधान) दध्न इव सारात् सारभूततया विभिन्नकार्यजनकस्वभावस्तैजसादिभेदभिन्न इत्यर्थः। एते च तैजसादयः सत्वरजस्तमोबाहुल्यात् भिन्ना इत्यनन्तरमेव वक्ष्यति। कार्यस्य त्रैविध्यादप्यहङ्कारस्त्रिविधस्सिद्ध इति तेभ्य इत्यादिनोच्यत इत्याह। तैजस इत्यादि देवैर्व्यवहारहेतुत्वात् देवशब्देनेन्द्रियाणि उच्यन्त इत्याह। देवा इत्यादि ॥ २ ॥

वृत्तिः ।

अथ कुतः किमभिव्यक्तमित्याह ।

**श्रोत्रं त्वक् चक्षुषी जिह्वा**
**नासा च मनसा सह ।**
**प्रकाशान्वयतस्सत्वा-**
**स्तैजसश्च स सात्विकः ॥ ३ ॥**

श्रोत्रादिबुद्धीन्द्रियपञ्चकस्य मनसश्च यत्प्रबोधकत्वात् प्रकाशान्वयोऽस्ति अतस्सात्विका एते देवाः। सच सात्विक एव तत्प्रकृतिरहङ्कारस्कन्धः तैजसो नाम ज्ञेयः ॥ ३ ॥

---

१. मातृकाद्वयेपि दधान इत्येववर्तते दध्न इति स्थातव्यमिति। २. ज्ञानरूपव्यवहार इत्यर्थः।

दीपिका ।

श्रोत्रमित्यादिना तदेव विभागेन प्रपञ्चयतीत्याशङ्कापूर्वकमाह[1] । अथेत्यादि । सच सात्विक इत्यादि । ततश्च बुद्धीन्द्रियात्मककार्यद्वारेणाऽऽत्मनो ज्ञानशक्तिरुन्मील्यते ॥ ३ ॥

वृत्तिः ।

**वाणी पाणी भगः पायुः**
**पादौ चेति रजोभवाः ।**
**कर्मान्वयाद्रजो भूयान्**
**गणो वैकारिकोऽत्र यः ॥ ४ ॥**

वाक्पादपाणिपायूपस्थाः पञ्च राजसा देवाः । तेषां कर्मान्वयात् कर्मेन्द्रियत्वात् रजोबहुलो वैकारिकाख्योऽहङ्कारस्कन्धः प्रकृतिभूतः ॥ ४ ॥

दीपिका ।

तेषामित्यादि । कर्मेन्द्रियद्वारेण वैकारिकेणापि क्रियाशक्तिरुन्मील्यते ॥ ४ ॥

वृत्तिः ।

**शब्दस्स्पर्शश्च रूपञ्च**
**रसो गन्धश्च पञ्चमः ।**

---

१. सूत्रकृदिति शेषः ।

## गुणाऽविशिष्टास्तन्मात्रा
## स्तन्मात्रपदयोजिताः ॥ ५ ॥

शब्दस्पर्शरूपरसगन्धा अविशिष्टगुणा अनभिव्यक्तविशेषत्वेन तावन्मात्रपदे भूतप्रकृतिरूपे योजितास्तन्मात्राशब्देन ज्ञेयाः । तावत्यश्च मात्रास्तन्मात्रा इति स्त्रीलिङ्गोऽयमिह तन्मात्राशब्दः । गुणाऽविशिष्टत्वं चैतासामित्थम् । यथा पृथिव्यां खटखटादिरूपश्शब्दः स्पर्शश्चाशीतोष्णः रूपमप्यनेकविधं षड्विधश्च रसः गन्धश्च सुरभ्यसुरभिरूपोऽस्ति । नैवं तत्कारणभूतपृथिवीतन्मात्रावस्थिता विशेषा उपलभ्यन्ते । अपि त्वविशिष्टगुणपञ्चकमात्रं पृथिवीतन्मात्रमेवं मन्यते ॥ ५ ॥

### दीपिका ।

शब्द इत्यादिसूत्रं व्याचष्टे । **शब्दस्पर्शेत्यादि** । प्रोक्तानामपीन्द्रियाणां अविभुत्वात्तेषामाधारत्वेनैतानि शब्दादीनि तन्मात्राणि आकाशादीनि च भूतानि स्थितानि इत्युक्तम् । "एतत्कार्यं दशधा करणैराविश्य कार्यते चेष्टाम् । अविभुत्वात्करणानि तु कार्यमविहाय चेष्टन्ते"॥ इत्यादि । ननु भूतान्येवोभयवादिसिद्धानीन्द्रियाधाराणि भवन्तु किमन्तर्गतेन तन्मात्रपञ्चकेन तत्राह । **अनभिव्यक्तविशेषत्वेनेत्यादि** । स्थूलसूक्ष्मरूपत्वेन तानीन्द्रियाधाराणि स्थितानीत्यर्थः तदुक्तं मतङ्गे "तन्मात्राणीह घटवन्महाभूतानि लेपवत्" । इति । किञ्च पृथिव्यादीनि भूतानि पञ्च वक्ष्यमाणानि

---

१. अष्टप्रकरणे तत्वसंग्रहे चतुर्थश्लोकः ।

अस्मदादिबाह्येन्द्रियपरिच्छेद्यगुणत्वात् घटादिवत्कार्याणि । अतस्तेषां कारणेन भवितव्यम् । यानि च कारणानि तानि तन्मात्राणीति ॥ ५ ॥

वृत्तिः ।

एताश्च तन्मात्राः ।

**प्रकाशकर्मकृद्वर्ग**
**वैलक्षण्यात्तमोभवाः ।**
**प्रकाश्यत्वाच्च भूतादि**
**रहंकारेषु तामसः ॥ ६ ॥**

प्रकाशकृत्सात्विको बुद्धीन्द्रियमनोलक्षणो यो वर्गः यश्च कर्मकृद्राजसत्वाद्व्यापारप्रवृत्तः कर्मेन्द्रियवर्गस्ताभ्यां वर्गाभ्यां वैलक्षण्यं वैसादृश्यं यस्मादेतासां तन्मात्राणामतस्तमोभवा एताः । **प्रकाश्यत्वाच्चेति** एषु चाहङ्कारस्कन्धेषु मध्याद्योऽयं भूतादिरहङ्कारस्कन्धः स यस्मात्प्रकाश्यः तत्कार्यस्य तन्मात्रात्मनो मनोबुद्धिभ्यां बुद्धीन्द्रियैश्च योगिभिरुपलभ्यत्वात् ततोऽयं तामसो ज्ञेयः । उक्तं च सांख्यैः "भूतादेस्तन्मात्रास्स तामस"इति ॥ ६ ॥

दीपिका ।

प्रकाशेत्यादिसूत्रं व्याचष्टे । **प्रकाशकृदित्यादि** । ततश्च तामसेनाहङ्कारेण पूर्वोक्तेन्द्रियशक्तीनामपाटवं जन्यत इत्युक्तं श्रीमन्मतङ्गादौ ।

यथा पादपादीनां इन्द्रियापाटवं दृश्यते । नन्वचेतनास्तरव इति केचित्सौगताः । तदयुक्तम् । मेषादिवत् कृत्स्नत्वगपहरणे मरणदर्शनात् ऋतुभावयुक्तत्वाच्च । यतः कामिनीपरिष्वङ्गगण्डूषादिना कुरवकवकुळादीनां पुष्पोद्गमो दृश्यते । यदाहुः "कुरवक कुचाघातक्रीडासुखेन वियुज्यसे वकुळविटपिन् स्मर्तव्यं ते मुखासवसेचनम् । चरणघटनाशून्यो यस्मादशोक सशोकता निजपुरपरित्यागे यस्य द्विषां जगदुस्त्रियः" ॥ प्रकाशयत्वादित्यादि व्याचष्टे । **एषु चेत्यादि** । अत एव योगिप्रत्यक्षेणापि तन्मात्रासिद्धिरिति ॥ ६ ॥

वृत्तिः ।

अथ मनसो व्यापार उच्यते ।

**देवप्रवर्तकं शीघ्रचारि**
**संकल्पधर्मि च ।**
**मनश्शब्दादिविषय**
**ग्राहकाश्श्रवणादयः ॥ ७ ॥**

देवनाद्द्योतनाद्वा देवा इन्द्रियाणि तेषां प्रवर्तकमुद्योजकम् । आशु सञ्चरणशीलं सङ्कल्पगुणं च मनो बोद्धव्यम् । श्रोत्रादयस्तु देवा यथास्वं शब्दादिविषयग्राहकाः ॥ ७ ॥

दीपिका ।

देवप्रवर्तकमित्यत्र देवशब्दार्थमाह । देवनात् द्योतनाद्वेत्यादि । विषयप्रकाशनात् । ते[illegible]मित्यादि । तच्च मनस्सङ्कल्पेनाऽऽन्तरेण बाह्ये-

न्द्रियाधिष्ठानेन च द्विधाधिकारीत्युक्तं श्रीमन्मतङ्गे "द्विधाधिकारि तच्चित्तं भोक्तुर्भोगोपपादकम्। बहिः करणभावेन स्वोचितेन यतस्सदा। इन्द्रियाणां तु सामर्थ्यं सङ्कल्पेनात्मवर्तिना। करोत्यन्तस्स्थितिं भूयस्तेनान्तःकरणं मन" इति। आशुसञ्चरणशीलमिति। एतच्चानन्तरमेवोपपादयिष्यति। सङ्कल्पगुणं चेति सङ्कल्पोऽवधानमेकाग्रता। तस्य न बुद्धिर्हेतुः अहङ्कारो वा। क्रियारूपत्वेनाप्रत्ययरूपत्वात् ग्राह्यग्राहकप्रत्यययो[2] रेतौ हेतू इत्युक्तम्। ततोऽन्यदेवेदं क्रियात्मकमवधानं नामेति यस्तस्य हेतुस्तन्मन इति। एतच्च तत्वान्तरेत्यादिनाऽनन्तरमेव वक्ष्यति। अथ कथमेव बुद्धीन्द्रियमनेकविषयं बुद्ध्यादिवन्नेष्यते। अत आह। श्रोत्रादयस्त्वित्यादि अयमर्थः। य[3]द्येकमिन्द्रियं स्यात् चक्षुषैव शब्दादयोऽपि गृह्येरन्। श्रोत्रादिना च रूपादयो न गृह्यन्ते। तेन नैकम्। अपि तु बहूनीति ॥ ७॥

**वचनादानसंह्लाद**
**विसर्गविहृतिक्रियाः।**
**वागादीनां पदान्यत्वं**
**पदे सत्यप्यतद्गुणाः ॥ ८ ॥**

वचनं भाषणमादानं ग्रहणं आह्लाद आनंदः विसर्गो मलवियोगः विहृतिस्सञ्चारः एताः क्रियाः क्रमेण वागादीनां ज्ञेयाः। काकाक्षिन्यायेन वागादीनामिति योज्यम्। ततश्च। वागादीनां पदान्यत्वं इति। यत्तस्याऽऽश्रयभूतं स्थानं ततोऽन्यदेवेन्द्रियं न हि कर्णशष्कु-

१. अहङ्कारपटले अशीतितमं पद्यम्। २. बुद्ध्यहङ्काराविल्यर्थः। ३. अनेकविषयमेकं यदि बुद्धीन्द्रियं स्यादित्यर्थः।

ल्यादेरेव श्रवणादित्वम्। अपि तु तत्स्थानस्थाया इन्द्रिय-शक्तेः। कुत इत्याह। **पदे सत्यपीति** पदे सत्यप्यतद्गुणा-स्तच्छक्तिविरहिणो जना दृश्यन्ते। नचैषां तानि स्थानानि न सन्ति ॥ ८ ॥

दीपिका।

एवं क्रियाभेदात्कर्मेन्द्रियभेदो वचनेत्यादिनोच्यत इत्याह। **वचनं भाषणमित्यादि**। अनेन च कर्मेन्द्रियाणि ये नेच्छन्ति नैयायिकादयस्ते प्रतिक्षिप्ताः। नाकरणा कृतिर्जन्यते यतः। नन्वेवं भ्रूलतोत्कम्पादीनां दन्तच्छदनादीनां च कर्मणां करणान्तराणि कल्पनीयानीत्यनन्तता कर्मेन्द्रियाणां प्रसज्यते। नच पञ्चत्वमिति। तत्सत्यं यदि मुख्यतया शरीरैकदेशवृत्तीन्द्रियाणि अभ्युपगम्येरन् त्वगिन्द्रियवत् सर्वशरीरव्यापकत्वेन तेषां कर्मेन्द्रियाणामिष्टत्वात् हस्तस्यैव व्यापारः भ्रूक्षेपादिः। विरेचकाद्यात्मकश्च पाद्वादेरिवेति नानन्तता। सर्वशरीरव्यापकत्वेन च तस्मिन्नधिष्ठाने विशेषाभिव्यक्तेः तन्नामानीन्द्रियाणीति व्यपदेशोऽप्युपपद्यत एव। एतदेवाह। **ततश्च इत्यादि** ॥ ८ ॥

वृत्तिः।

अथ मनस उत्पत्तौ युक्तिमाह।

**आत्मेन्द्रियार्थनैकट्ये**
**सर्वदैवाप्रवृत्तितः।**
**प्रवृत्तिकारकास्तित्वं**
**युक्तितोऽप्यवसीयते ॥ ९ ॥**

आत्मनो भोक्तुरिन्द्रियैर्भोगसाधनैरर्थैश्च शब्दादिभिर्भोग्यैस्सन्निकर्षे सत्यपि सर्वेषां देवानां इन्द्रियाणां यस्मान्न प्रवृत्तिः अपितु कस्यचिदेवाऽऽतो यत्तदिन्द्रियं प्रवृत्तं तस्य प्रवृत्तौ कारकमस्तीति युक्तितोऽनुमानादवसीयते। यदाहुः "युगपत् ज्ञानानुत्पत्तिर्मनसो लिङ्ग" इति। सर्वदैवेति पाठे इन्द्रियार्थसन्निकर्षे सत्यपि कदाचिदेवेन्द्रियाणि अर्थग्रहे प्रवर्तन्ते। न सर्वदा। ततो नूनमेषां प्रवर्तकं किमप्यस्ति। यद्विना न प्रवर्तन्ते इति व्याख्येयम्। अपिस्समुच्चये। न परमागमः मनस्सत्तावेदको। यावद्युक्तिरपीत्यर्थः ॥ ९॥

दीपिका।

इदानीं पूर्वोक्तेन सङ्कल्पाख्येन धर्मेण मनस्सिद्धिता आत्मेत्यादिना प्रपञ्चयत इत्याह। अथ मनस इत्यादि ॥ ९॥

वृत्तिः।

एवं च सति।

**तत्वान्तरोक्तवृत्तिभ्यो**
**वैलक्षण्याद्विलक्षणः।**
**संकल्पो बीजमभ्येति**
**मनस्तत्पारिशेष्यतः ॥ १० ॥**

तत्वान्तराणां कलारागविद्यादीनामुक्ता या वृत्तयो व्यापाराः ताभ्यस्तावद्वैलक्षण्यं सङ्कल्पाख्यस्य कर्मणोऽस्ति। विलक्षणश्चायं सङ्कल्पो बीजमुद्भवहेतुं गमयति ज्ञापयति पारिशेष्याच्च मनस्तद्विज्ञेयम् ॥ १० ॥

दीपिका।

तत्वान्तरेत्यादि व्याचष्टे। तत्वान्तराणामिति। एतच्च पूर्वमेव दर्शितमिति ॥ १० ॥

**ज्ञानं तदक्षयोगात्तत्**
**क्रमयोगितया क्रमात्।**
**तथाप्याभाति युगपत्**
**नाशुसंचरणादृते ॥ ११ ॥**

तस्य मनसोऽक्षैर्योगात् ज्ञानमुत्पद्यते। तच्च क्रमयोगितया क्रमिकं यथा रूपानुभवकाले न स्पर्शानुभवः रसाद्यनुभवो वा। यद्यपि स्वादुसुरभ्यभिजातमर्मरशब्दवदभिरूपं चन्द्रार्चिश्शष्कुल्यादिकमास्वाद्यमानं युगपत्पञ्च ज्ञानोत्पादहेतुः। तथाप्युत्पलपत्रशतव्यक्तिभेदवदलक्ष्यसूक्ष्मक्रमाणि क्रमिकाण्येव तानि रसादिज्ञानानि। एतच्च शीघ्रसंचारितां विना युगपन्मनसः पञ्चज्ञानोत्पादनादिकं नाभाति न प्रकाशते ॥ ११ ॥

---

१. सप्तमश्लोकदीपिकायाम्।

दीपिका ।

इदानीं शीघ्रचारित्वं च पूर्वोक्तं साधयितुं ज्ञानमित्यादि व्याचष्टे । **तस्य मनस इत्यादि** । अतश्चाविभुत्वात् प्रत्यात्मनियततयाऽनेकत्वाच्च कार्यत्वमनेनापि मनसस्सिद्धमिति ॥ ११ ॥

वृत्तिः ।

भौतिकेन्द्रियवाद्यभिप्रायेणाऽऽहङ्कारिकत्वमिन्द्रियाणामाक्षेप्तुमाह ।

**नियतार्थतयाऽक्षाणि**
**नानायोनीनि कस्यचित् ।**
**गन्धादिव्यंजकत्वाच्च**
**तदाधारात्मकान्यपि ॥ १२ ॥**

शब्दैकग्राहकं श्रोत्रं स्पर्शैकग्राहिका च त्वक् इति । अन्यान्यपि नियतार्थतया हेतुभूतया कस्यचिद्वादिनः प्रत्यक्षाणीन्द्रियाणि भिन्नकारणानि । आहङ्कारिकत्वे हि नैषां नियतार्थत्वं स्यात् । गन्धादिव्यञ्जकत्वाच्च हेतोस्तेषां गन्धादीनामाधाराः आश्रयाः पृथिव्यादयस्तदाधारात्मकानि । दृष्टं हि पार्थिवमेव द्रव्यं गन्धव्यञ्जकं घ्राणं च गन्धस्य ग्राहकम् । तस्मात्पार्थिवं घ्राणम् । आप्यं रसनम् । तैजसं चक्षुरित्येवमन्यत् ॥ १२ ॥

दीपिका ।

निश्चतार्थतयेत्यादिना मुनिर्वैशेषिकादिच्छायया चोदयतीत्याह । शब्दैकग्राहकमिति । कस्यचिद्वादिन इति । वैशेषिकादेः ॥ १२ ॥

वृत्तिः ।

तत्किं युक्तं नवा इत्याह ।

**तथास्तु यदि नादत्ते**
**सगुणं कारणान्तरम् ।**
**त्वगिन्द्रियमयुक्तार्थ**
**ग्राहि युक्तपराङ्मुखम् ॥ १३ ॥**

**तेजो वारि महीद्रव्यं**
**दृगादत्ते सरूपकम् ।**
**ततस्त्रिद्रव्यजा सा स्यात्**
**न परेणेष्यते तथा ॥ १४ ॥**

एकैकमिन्द्रियं स्वकारणादन्यत् कारणान्तरं गुणसहितं यदि नादत्ते न गृह्णाति तत् तथास्तु । अयमर्थः यदीन्द्रियं स्वकारणसमानजातीयद्रव्यं तद्गुणं च गृह्णीयात् तदानीं विषयनियमः प्रकृतिनियमगमक इष्यते । यावता द्रव्यान्तराणि तद्गुणांश्च गृह्णाति तस्मादनियतार्थतया न तत्प्रकृतिगमकत्वमक्षाणामुपपन्नम् । अथ किं

तदनैयत्यमित्याह । त्वगिन्द्रियमित्यादि तथाहि त्वगिन्द्रियं युक्तस्य स्वकारणत्वात् गृहीतुमुपपन्नस्य पराङ्मुखं न[1] स्यात् । तदा तदेव तत्परत्वेन गृह्णीयात् । स्वकारणादन्यत्वेन चायुक्तग्रहणानां पृथिव्यप्तेजसामर्थानां ग्रहीतृ । तत्कथं विषयनियमसिद्धिः । तथा दृक् दृष्टिः तेजोद्रव्यमप्द्रव्यं पृथिवीद्रव्यं च भिन्नरूपं गृह्णाति अतश्च सा दृक् त्रिद्रव्यजा भवेत् । नचास्यास्त्रिद्रव्यजत्वं परेणेष्यते तैजसत्वेनाभ्युपगमात् ॥ १३=१४ ॥

दीपिका ।

सिद्धान्तसूत्रमवतारयति । तत्किमित्यादि अयं चात्र प्रकरणार्थः । न नियतार्थतया भौतिकानीन्द्रियाणि । भूतान्तरगतस्य गुणस्य ग्राहकत्वात् गुणव्यतिरिक्तस्य कर्मसामान्यादेः प्रकाशनात् चित्तवदिति । यदुक्तं आहङ्कारिकत्वाविशेषे नैषां विषयनियतिस्वभावभेद इति तदप्युत्पत्तिभेदादिक्षुविकाराणां गुडखण्डशर्करादीनामिव भविष्यतीति न किंचिदेतत् ॥ १३=१४॥

वृत्तिः ।

येनोपलभ्यते योऽर्थ-
स्स तस्यार्थस्य कारणम् ।
न प्राप्तमपि कर्मादि
सेयं व्यसनसन्ततिः ॥ १५॥

---

१ यदि नस्यादित्यर्थः ।

भवत्पक्षे येनेन्द्रियेण योऽर्थो गन्धाद्याश्रयः पृथिव्यादिरुपलभ्यते स पृथिव्यादिस्तस्य कारणमित्यभ्युपगमः। तथाच सति भूतेषु तद्गुणेष्वेव चेन्द्रियेभ्यो बुद्धयः प्रतीतयस्स्युः कर्मसामान्यसमवायादि तद्द्रव्येभ्यो गुणेभ्यश्च पदार्थान्तरम्। नच तदात्मकान्यक्षाणि। तस्मात्कर्मादेरक्षैर्ग्रहणं न प्राप्तम्। उक्तं च खेटकनन्दनेन। "[1]भौतिकत्वाच्च नियमे कर्मसामान्ययोस्स्फुटम्। देवेभ्यो बुद्धयो न स्युस्समवाये च देहिनां" इति। सेयं प्रकृतिनियामके विषयनियमेऽङ्गीक्रियमाणे निष्फला क्लेशपरम्परा प्रसज्यते। तस्माद्विषयाणामिन्द्रियाणां च भवदभिमतग्राह्यग्राहकनियमासम्भवात् न क्षित्यादिप्रकृतिनियमसिद्धिः इत्याहङ्कारिकाण्येवेन्द्रियाणीति सिद्धम्॥ १५॥

वृत्तिः।

अभ्युपगम्याऽपि ब्रूमः।

**कायरन्ध्रविशिष्टं खं**
**शब्दवर्गावभासकम्।**
**नासारन्ध्रविशिष्टं तत्**
**ब्रूत केन निवार्यते॥ १६॥**

---

१ अष्टप्रकरणे भोगकारिकायां चत्वारिंशत्तमं पद्यम्।

**तदट्टष्टावरुद्धं वा**
**तदप्यन्यत्र किंकृतम्।**
**प्राप्तं गृह्णाति नातोद्ये**
**शब्दं केनाऽपि दस्युना॥ १७॥**

नियतविषयत्वेप्यक्षाणामिदं तावद्भवान् पृष्टो व्याचष्टाम्। यदि सर्वः कायरन्ध्रविशिष्टो नभोभागश्शब्दवर्गस्येत्यनेकविधस्य शब्दस्य द्योतकः तन्नासारन्ध्रादिच्छिद्रान्तरं तथाविधत्वादुच्यताम्। केन तद्ग्रहणं निवार्यते। अथात्रादृष्टं पुरुषार्थप्रदं कर्माख्यमस्ति। येन श्रोत्रनभोभाग एव शब्दवर्गावभासकः न नासारन्ध्रादिरिति नियमः तर्हि **तदपीति** तथाऽपि। **अन्यत्रेति**। अन्यस्मिन् पक्षेऽपि तथात्वाभ्युपगमस्य का क्षतिः। तत्र हि किङ्कृतं को बाधको जातः आहङ्कारिकत्वे सत्यपि अदृष्टावरुद्धत्वस्य को दोष इत्यर्थः। अन्यथा हि आतोद्ये तन्त्रीवंशमुरजादिवाद्ये प्राप्तमपि आस्यनासारन्ध्रसन्निकर्षस्थमपि शब्दं तदास्यरन्ध्रं घ्राणच्छिद्रं वा किं केनाऽपि दस्युना दुराचारेण शब्दत्वाच्छब्दं न गृह्णातीति काका व्याख्येयम्। एतच्च प्रोक्तवद्युक्त्युपपन्नम्॥ १६=१७॥

दीपिका ।

एतच्च कायरन्ध्रेत्यादिना दर्शयतीत्याह नियतविषयत्वेपीति । अन्यथेति । भौतिकत्वपक्षे । नासारन्ध्रमप्युपलक्षणमित्याह । आस्यरन्ध्रमित्यादि । शब्दमपि हेतुगर्भविशेषणमित्याह शब्दत्वादिति । एतच्चेत्यादि । आहङ्कारिकत्वमिन्द्रियाणामित्यर्थः । ततश्च बुद्धीन्द्रियाणि कर्मेन्द्रियाणि चाऽऽहङ्कारिकाणि सिद्धानीति ॥ १६=१७ ॥

वृत्तिः ।

यत्राऽपि च युक्तिर्गमिका न सम्भवति तत्र ।

**युक्त्यगम्येऽपि सद्वाक्यात्**
**प्रतीतिरनुपद्रवा ।**
**मितार्थादमितार्थस्य**
**ज्यायस्त्वमिति सूरयः ॥ १८ ॥**

असम्भवद्युक्तिकेऽपि वस्तुनि सदागमोक्तेः प्रतीतिरवगमो निर्बाधः । कुत इत्याह । मितार्थादिति । यस्माल्लिङ्गसाऽपेक्षत्वेन परिमितार्थादनुमानात् । सर्वदर्शिज्ञानस्याऽऽगमरूपस्यापरिमितार्थत्वेन ज्यायस्त्वमित्यागमविदः ॥ १८ ॥

दीपिका ।

एतच्चाऽऽगमेनापि सिद्धमित्यभिप्रायेण शैवागमस्य प्रामाण्यमनिवार्यमित्याह । यत्राऽपि चेत्यादि । तत्र च बुद्धीन्द्रियाणि मनः प्रेरितानि

स्वस्थानादेव प्रवर्तन्ते कर्मेन्द्रियाणि तु स्वस्थाने क्रियामुत्पादयन्तीत्युक्तं श्रीमन्मतङ्गे[1] "विकृष्टं बुद्धिदेवानां सन्निकृष्टं क्रियात्मनां" इति ॥ १८ ॥

वृत्तिः ।

"मात्राभ्यो भूतपञ्चक"मिति यदुपक्रान्तं तद्विशेषयितुमाह ।

**व्योमप्रभंजनाग्न्यंबु-**
**भूमयो भूतपञ्चकम् ।**
**शब्दाद्येकोत्तरगुण-**
**मवकाशादिवृत्तिमत् ॥ १९ ॥**

**धूननज्वलनप्लाव**
**खरत्वावेदिनो गुणाः ।**
**शब्दा वाय्वादिषु व्योम्नि**
**सवर्णप्रतिशब्दगाः ॥ २० ॥**

आकाशो वायुर्वह्निजलं पृथिवी भूतपञ्चकम् । एतच्च **शब्दाद्येकोत्तरगुणम्** । शब्दादय एकोत्तरगुणा यस्य तदेवं तेन शब्दैकगुणकमाकाशं शब्दस्पर्शगुणो वायुः शब्दस्पर्शरूपगुणोऽग्निः शब्दस्पर्शरूपरसगुणं जलं शब्दादिपञ्चगुणा

१. अहङ्कारपटले पञ्चनवतितमश्श्लोकः ।

पृथिवीति वक्ष्यमाणावकाशादिवृत्तियुक्तं चैतज्ज्ञेयम् । य एते वाय्वादिषु गुणाश्शब्दादयस्ते धूननज्वलनाद्यावेदिनः । यतश्शकशकशब्दो वायौ कम्पनावेदकः । धकधकशब्दोऽग्नौ ज्वलनं सूचयति एवं चलचलशब्दोऽम्भसि वहनम् । खडखडशब्दश्च पृथिव्यां खरत्वं कथयति । एते च शब्दा एतेषां परस्पराहतिवशात् उत्पन्नाः । व्योम्न्याकाशे सवर्णं समानाक्षरं प्रतिशब्दं गायन्तीति सवर्णप्रतिशब्दगा भवन्तीति शेषः । तदुक्तं भोगकारिकासु "शब्दस्तद्द्रव्यजनितः पृथक्भूतचतुष्टये । प्रतिशब्दकसङ्घातो नभस्येवोदितो बुधैः"[1] । इति ॥ १९=२० ॥

## दीपिका ।

अथ भूतानि दर्शयितुं व्योमेत्यादिसूत्रद्वयं व्याचष्टे । **शब्दैकगुणकमाकाशमित्यादि** । ननु वैशेषिकैर्न[2] स्पर्शवत् विशेषगुणश्शब्दोऽस्मदादिप्रत्यक्षत्वे सति अकारणगुणपूर्वकत्वात् अयावद्द्रव्यभावित्वात् सुखादिवदिति शब्दस्य वाय्वादिविशेषगुणत्वं निषिद्धमेव । तदयुक्तम् । सिद्धसाधनत्वात् । यतो नास्माभिरपि स्पर्शवतां विशेषगुणश्शब्द इष्यते । अपि तु भूततन्मात्रवर्तित्वेन सामान्यगुण एव । अतस्स्पर्शवतां गुणा न भवन्तीत्येतावदेव साध्यते । तत्राऽपि यदि प्रतिश्रुक्शब्दो धर्मः तथाऽपि सिद्धसाधनता । एतस्याऽऽकाशगुणत्वेनोक्तत्वात् स्पर्शवद्गुणत्वं सिद्धमेव यतः सुखदुःखविशेषगुणवत्साधितस्तत्राऽपि प्रत्यक्षविरोधः । ततः प्रत्यक्षेण

---

१ एकादशश्श्लोकः । २. वैशेषिकोक्तेति पाठो वर्तते ।

स्पर्शवतां पृथिव्यादीनां धर्माः प्रतीयन्ते। एतदेवाह। **यतश्शकशका-दिशब्दो वाय्यादावित्यादि**। प्रतिशब्दस्याऽऽकाश एवाऽऽश्रय इत्यर्थः॥ १९=२०॥

वृत्तिः।

अवकाशादिवृत्तिमदिति भूतपञ्चकस्य सामान्यं यद्विशेषणमुक्तं तद्विभज्य वक्तुमाह।

**व्यूहोऽवकाशदानं च**
**पक्तिसंग्रहधारणाः।**
**वायुव्योमहुताशांबु**
**धरणीनां च वृत्तयः॥ २१॥**

व्यूहो विरचनं वायोर्वृत्तिः अवकाशस्याऽऽस्पदस्य दानं व्योम्नो व्यापारः। पक्तिः पाकस्तेजसः। संग्रहोऽव-ष्टम्भोऽम्भसाम्। धारणं धृतिर्धरण्याः॥ २१॥

दीपिका।

**व्यूहेत्यादिसूत्रं** व्याचष्टे। **व्यूहो विरचनं इत्यादि**। व्यूहोऽवयवघटनम्। इदं चोपलक्षणं कम्पादेः। यदाहुः "स्पर्शशब्दधृतिकम्पलिङ्गो वायुः" इति। **अवकाशस्येत्यादि** अवकाशात्मना कार्येणाऽऽकाशोऽनुमीयत इति भावः। ननु कैश्चिज्जैमिनीयैः अवकाशस्य प्रत्यक्षत्वात् तत्प्रत्यक्षमित्यभ्युपगतम्। यदाह मण्डनः (भगवतो विवेके) "कथं गम्येत वचसो नियता परदे-शता। पततोऽध्यक्षनिर्वृत्तो विभागो देशसङ्गमः"। इति। तदयुक्तम्। मूर्त-

द्रव्याभावात्मकात् अवकाशात्तदाकाशं प्रत्यक्षसिद्धं[1] स्यात्। अरूपत्वाच्च ततोऽन्यथासिद्धाद्धेतोः आकाशस्य प्रत्यक्षत्वासिद्धिः। किमिदं तर्हीहेति दृश्यते। आलोकाख्यतेजोद्रव्यमेव सकलव्यापीति। ततश्शकुनसंयोग-विभागौ प्रत्यक्षसिद्धाविति। कथं तर्हि आकाशस्यावकाशमिति प्रतीतिः। मूर्तद्रव्याभावात्मकमिति मूर्तद्रव्याभावात्मकावकाशावच्छेदेन शब्दस्याऽऽ-श्रयतया सि[2]द्धम्। ततो भ्रान्त्या तद्रूपेण प्रतिपत्तिर्न परमार्थतः। तथाहि शब्दो हि गुणत्वादाश्रयमपेक्षते। यथा चित्ररूपं पटकुड्यादि। न चा-वकाशः मूर्तद्रव्याभावात्मकत्वात् आश्रयो भवितुमर्हति। ततस्तु आका-शविशिष्टस्य शब्दस्य सिद्धत्वादाकाशं शब्दगुणकं ततः प्रतीयत इति। यद्येवं प्रत्यक्षत्वाच्चाकाशं नित्यमेव स्यात्। तन्न। पृथिव्याद्यपेक्षया सूक्ष्म-स्यैवोक्तत्वात् तन्मात्राकार्यत्वेन तदपेक्षया स्थूलत्वात्। असर्वगतत्वाच्च। यदाहुः "असर्वगतद्रव्यपरिमाणा मूर्तिरि"ति। ततो मूर्तत्वादसाधारण-रूपस्य प्रत्यात्मनियतत्वेनानेकत्वाच्च तदनित्यं सिद्धमेव। साधारणरूपस्याऽपि भुवनाधारत्वेन वक्ष्यमाणत्वात्। भुवनानां सन्निवेशविशिष्टानां विनाशो-नुपपत्तेः। यद्वक्ष्यति "दृष्टं पुरादि यद्भोग्यं मूर्तं प्रलयधर्मि चे"ति। पाकस्तेजस इति। एतच्चोपलक्षणं प्रकाशादेः। ततश्चाग्नेर्भौमाऽऽकरजादि-भेदः भौमस्य चाऽऽहवनीयादिभेदश्च श्रीमन्मतङ्गादेरवधेयः॥ २१॥

वृत्तिः।

अत्र मुनिर्वैशेषिकच्छायया प्रश्नयति।

**शब्दः खगुण एवेति**
**तदन्यत्रोपलब्धितः।**

---

१. कथं स्यादित्यर्थः। २ आकाशमिति शेषः।

**ब्रुवते भगवन् केचि-**
**त्सर्वभूतगुणः कथम् ॥ २२॥**

हे भगवन् यतो भेर्यादेरुत्पद्यते। तदन्यत्रोपलम्भात्। खगुण इति। आकाशगुण एव शब्द उपपद्यते। आश्रयादन्यत्रोपलब्धेः। न स्पर्शवद्विशेषगुण इत्यर्थः। अतश्च कथमयं सर्वभूतगुण उच्यते ॥ २२ ॥

दीपिका।

पुनरपि शब्दस्य पञ्चभूतगुणत्वं "शब्दः खगुण" इत्यादिना आक्षिपतीत्याह अत्र मुनिरित्यादि। तदन्यत्रोपलम्भादिति। श्रवणाकाशादौ ॥ २२॥

वृत्तिः।

अत्रोच्यते।

**कान्यत्र श्रवणाकाशे**
**कथमन्यत्र तद्गुणः।**
**परेष्टादाश्रयात्तत्र**
**निर्णीतानुभवो नृणाम् ॥ २३ ॥**

आश्रयादन्यत्रोपलब्धित इति यदुक्तं तत्कान्यत्र। यदि श्रवणाकाश इत्यभिमतं तत्तद्गुणश्चान्यत्र चेति कथम्।

अयमाशयः । तदित्याकाशपरामर्शः । तद्गुणस्सन् श्रोत्राकाशे उपलभ्यमानः कथमन्यत्रेत्युच्यते । अथ परेष्टादाश्रयादित्यभिमतं न तद्युक्तम् । अत्र ह्यनुभवः पुंसां सम्बन्धी निश्चायकः । शब्दाश्रय एव शब्द उपलभ्यते । तथाहि इह मुरजे शब्दः इह वीणायां शब्दः इति प्रतीतिः ॥ २३ ॥

दीपिका ।

परिहारसूत्रं व्याचष्टे आश्रयादित्यादि ॥ २३ ॥

वृत्तिः ।

**कदाचित्कर्णमूलेऽपि**
**संविदित्यथ मन्यसे ।**
**श्रोत्रवृत्तिवदस्याऽपि**
**परिणामोऽस्तु का क्षतिः ॥ २४ ॥**

अथ मन्यसे कदाचित्कर्णमूलेऽपि संविद्भवतीति । किञ्चातः । किमेतावताऽऽकाशैकगुणत्वं शब्दस्य सिध्यति । श्रोत्रवृत्तिवद्वीचीतरङ्गवृत्त्याऽस्यापीति शब्दस्य परिणामाच्छ्रोत्रनिकटेऽपि कदाचिदुपलम्भोऽस्तु । नचैतावता काचित्क्षतिः । नच प्रत्यक्षागमव्याहता हेतवोऽर्थं गमयन्ति ।

हेत्वाभासत्वात् । यथा सेव्यं नरशिरः कपालं शुचित्वात् । जाड्यजनकोऽग्निरनुष्णत्वादित्यादौ ॥ २४ ॥

दीपिका ।

कदाचिदित्यादिपूर्वपक्षशङ्कां व्याचष्टे । अथेत्यादि परिहारत्वेनोत्तरार्धं व्याचष्टे । किञ्चात इत्यादि । ततश्चाऽऽश्रयादन्यत्रोपलब्धेः इत्ययं हेतुः प्रत्यक्षागमबाधितत्वेन कालात्ययापदिष्टत्वात् अयुक्त त्याह । नचेत्यादि ॥ २४ ॥

वृत्तिः ।

तदाह ।

**आगमाध्यक्षविहत**
**हेतवो नार्थसाधकाः ।**
**कालात्ययापदिष्टत्वात्**
**इति न्यायविदो विदुः ॥ २५ ॥**

आगमेन "इति पञ्चसु शब्दोऽयम्" इत्यादिना । प्रत्यक्षेण स्पर्शवद्विशेषगुणत्वानुभवात्मकेन येषां बाधस्संभवति ते हेतवः कालात्ययापदिष्टत्वात् नार्थसाधका भवन्तीति न्यायविदो मन्यन्ते ॥ २५ ॥

वृत्तिः ।

यदि वाऽश्रयादन्यत्रोपलब्धेराकाशगुणत्वं शब्दस्योच्यते । तदानीम् ।

**इत्यपि स्थितमेवायं**
**गन्धोऽप्यस्तु नभोगुणः ॥ २५½ ॥**

इदमपि प्रसज्यत इत्यर्थः । किं तदित्याह **अयं गन्ध** इति । येन केतकीपुष्पादेर्वैकृष्येऽप्युपलभ्यते । आश्रयादन्यत्रोपलब्धेः अयं गन्धोऽप्याकाशगुण इत्यवश्यमवस्थितम् । यतः केतकीचम्पककुसुमादेरतिविप्रकृष्टत्वेऽपि अनुभूयते गन्धः । **अस्य च** प्रत्यक्षेणाऽऽगमेन वा यथा बाधस्तथा प्रागुक्तस्याऽऽश्रयादन्यत्रोपलब्धेरित्यस्य हेतोर्हेत्ववरत्वमिति तात्पर्यम् ॥ २५½ ॥

दीपिका ।

दूषणान्तरमपि इत्यादिसूत्रखण्डेनाऽऽक्षिपतीत्याह । यदिवेत्यादि । अयमित्यादिना तदेव दृश्यत इत्याह । आश्रयादन्यत्रेत्यादि अत एव चास्य हेतोः प्रत्यक्षबाधा सिद्धेत्याह । अस्य चेत्यादि ॥ २५½ ॥

वृत्तिः ।

उपसंहरन् भूतचतुष्टयगुणविशेषानाह ।

**इति पञ्चसु शब्दोऽयं**
**स्पर्शो भूतचतुष्टये ।**
**अशीतोष्णो महीवाय्वोः**
**शीतोष्णो वारितेजसोः ॥ २६½ ॥**

भास्वदग्नौ जले शुक्लं
क्षितौ शुक्लाद्यनेकधा।
रूपं त्रिषु रसोंऽभस्सु
मधुरष्षाड्विधः क्षितौ ॥ २७ ॥

गन्धः क्षितावसुरभिः
सुरभिश्च मतो बुधैः ॥ २८ ॥

इत्यनया उक्तया युक्त्या पञ्चसु भूतेष्वयं शब्दः एष्वेवाऽऽकाशवर्जितेषु स्पर्शः तत्र मह्यां वायौ चाशीतोष्णः अम्भसि शीत एव तेजस्युष्ण एव। रूपं त्रिष्विति। पृथिव्यप्तेजस्स्वेव। तत्राग्नौ भास्वरं प्रदीप्तं जले शुक्लं क्षितौ शुक्लाद्यनेकविधम्। रसः क्षित्यम्भसोः। तत्राप्यम्भसि मधुरः। क्षितौ कट्वम्ललवणतिक्तकटुकषायाः। गन्धः पृथिव्यां सुरभ्यसुरभिरूपो विद्वद्भिरिष्टः ॥ २६=२८ ॥

दीपिका।

भूतानां शब्दाद्येकोत्तरगुणत्वं प्रपञ्चयतीत्याह। इत्यनयेत्यादि ॥ २८ ॥

वृत्तिः।

अथ यथैषां भूतानां शरीरसन्निविष्टत्वं तथोच्यते।

देहेऽस्थिमांसकेशत्वक्
 नखदन्तेषु चावनिः ।
मूत्ररक्तकफस्वेद
 शुक्रादौ वारि संस्थितम् ॥ २९ ॥

हृदि पक्तौ दृशोः पित्ते
 तेजस्तद्धर्मदर्शनात् ।
प्राणादिवृत्तिभेदेन
 नभस्वानुक्त एव ते ॥ ३० ॥

गर्ववृत्त्यनुषङ्गेण
 खं समस्तासु नाडिषु ॥ ३०½ ॥

अस्थिमांसादौ पृथिवी भौतिके शरीरेऽवस्थिता । मूत्ररक्तादौ जलम् । हृत्प्रदेशे पक्तौ पाकक्रियायामन्नपानेन्धनमौदर्यं तेजः । दृशोः पित्ते च तत्स्थितम् । तद्धर्मदर्शनादित्येकैकस्मिन् योज्यम् । तत्र हृदि तद्धर्मस्योष्णस्य पक्तौ तद्धर्मस्य पाकस्य दृशोः प्रकाशस्य पित्ते च सन्तापौज्वल्यादेरुपलम्भात् तैजसं निविष्टम् । प्राणापानादिवृत्तिभेदेन वायुर्यथाऽवस्थानावस्थितः तथाच तवोक्त एवेति

वक्ता श्रोतारं भरद्वाजं मुनिं स्मारयति। यदुक्तं प्राक् "वृत्तिः प्रणयनं नाम यत्तज्जीवनमुच्यते"। इति। सर्वासु च नाडीष्वाकाशं गर्ववृत्त्यनुषङ्गेणेत्यहङ्कारव्यापारानुषङ्गात्स्थितम्॥ २९=३०=३०½॥

दीपिका।

अथ बाह्यशरीरभूतानामस्थ्यादीनां स्थितिः देहेत्यादिनोच्यते इत्याह। **अथ यथैषामित्यादि**। अत्र गर्ववृत्त्यनुषङ्गेणाहङ्कारव्यापारप्रसङ्गेन नभस्वानुक्तः। खमाकाशं समस्तासु नाडीषु अवकाशदायकत्वेन स्थितमिति व्याख्येयम्। कथं पुनराकाशं गर्ववृत्त्यनुषङ्गेणेत्यादि॥ २९=३०=३०½॥

वृत्तिः।

इदानीं कलादिक्षित्यन्ततत्त्ववातं सूक्ष्मदेहारम्भकत्वेन वक्तुमाह।

**प्रयोक्त्र्यादिमहीप्रान्त**
**मेतदण्वर्थसाधनम्।**
**प्रत्यात्मानियतं भोग**
**भेदतो व्यवसीयते॥ ३१½॥**

प्रयोजयति क्रियाशक्त्युत्तेजनेन पुमांसमिति प्रयोक्त्री कला तदादि क्षित्यन्तं चैतत्तत्त्ववृन्दं पुमर्थसाधनमेकैकस्याऽऽत्मनो नियतमसाधारणं भोगभेदात्प्रतीयते।

१. प्रत्ययप्रकरणे द्वाविंशतितमःश्लोकः।

साधारणत्वे भोगभेदानुपपत्तेः । ननु भोगभेदे कर्मणो निमित्तत्वमित्युक्तम् । सत्यम् । न साक्षात् । अपि तु पारंपर्येण । तथाहि कर्मकृतस्तत्वशरीरभेदः तद्भेदकृतं च भोगवैचित्र्यमित्यदोषः । सतु भोगभेदः करितुरगादिभेदाभिन्नसूक्ष्मशरीरवैचित्र्यं विना न भवतीत्यत्राऽपि कर्मण एव हेतुतेति न कश्चिद्दोषः ॥ ३१½ ॥

वृत्तिः ।

एतच्च सूक्ष्मशरीरम् ।

**सर्वतो युगपद्वृत्ते-**
**रनुत्पादादसर्वगम् ।**
**भिन्नजातीयमप्येक**
**फलं दीपाङ्गवस्तुवत् ॥ ३२½ ॥**

यद्येतत्सर्वगं विभु स्यात् तत्सर्वत्र यौगपद्येन वृत्त्युत्पादो भवेत् । नचैवम् । यावता क्वचिदेकदेश एवैतद्वृत्तेः कर्मफलोपभोगलक्षणायास्समुत्पादो भिन्नजातीयमनेककलादि प्रत्युद्भूतमपि चैतद्दीपाङ्गवस्तुवदेकफलं यथा भिन्नकारणजन्यं तैलपात्रवह्निवर्त्यादिवस्तु तमोनिवृत्तिलक्षणैकार्थसाधकमेवं तन्मात्रमहदहङ्कारकलाद्युद्भवमप्येतत्कर्मोपभोगफलं ज्ञेयम् ॥ ३२½ ॥

दीपिका।

सर्वत इत्यादिनास्यैव विभुत्वं भोगैकसाधनत्वं चोच्यत इत्याह। एतच्चेत्यादि ३२½॥

वृत्तिः।

अथ व्याख्यातार्थोपसंहाराय प्रकरणान्तरोपक्रमाय च श्लोकः।

**इत्यातिवाहिकमिदं वपुरस्य जन्तोः**
**चित्संगचिद्गहनगर्भविवर्तिलेशात्।**
**नैतावतालमिति भौवनतत्वपङ्क्ति**
**माधारदेहविषयाभ्युदयाय वक्ष्ये॥ ३३½॥**

इत्थं इदं अस्य संसारिणो जन्तोः अतिवाहयति अवश्यं भोग्यं कर्मेत्यातिवाहिकं वपुर्लेशात् संक्षेपादुक्तमिति शेषः। कीदृशं चित्सङ्गात् चित्संश्लेषवशात् चित्। अचिद्पि चैतन्याावियुक्तत्वात् चिद्रूपमिवेत्यर्थः। गहनं माया तद्गर्भे विवर्तते तच्छीलमिति गहनगर्भविवर्ति। एतावता च न पर्याप्तमितिकृत्वा भोग्याश्रयभूतां भौवनतत्वपङ्क्तिं वक्ष्ये। किमर्थमित्याह। आधारदेहविषयाभ्युदयाय। सूक्ष्मशरीरस्याधारो स्रो वैषयिकोभ्युदयस्स्रक्चन्दनाद्युपभोगस्वरूपः तदर्थम्। यद्वा आधारा आश्रयाः देहास्स्थूलाः तद्भुवनजाः

विषयाः अर्थाः इन्द्रियार्थाः तेषामभ्युदयायोत्पत्तये भौवन-तत्वपङ्क्तिं वक्ष्ये । यतस्तत्वभुवनसन्ततावाश्रयभूतायां देह-वैचित्र्यं भोगवैचित्र्यं च दीक्षायामवश्यं ज्ञेयं यत्तदग्रे वक्तुमिष्टम् ॥ ३३ ॥

---

इति श्रीभट्टविद्याकण्ठात्मजभट्टनारायणकण्ठविरचितायां मृगेन्द्रवृत्तौ
इन्द्रियादिप्रकरणं द्वादशं समाप्तम् ।

---

## दीपिका ।

इतीत्यादिना प्रोक्ताया असाधारणायास्सूक्ष्मदेहारम्भिकायास्तत्व-सृष्टेरुपसंहारः क्रियते । साधारणं चानन्तरप्रकरणे वक्ष्यमाणभुवनरूपा तत्वसृष्टिरुपक्षिप्यत इत्याह । **इत्थं इत्यादि** । **तद्गर्भ इति** । मायागर्भे कलादिक्षित्यन्ते । अत एव सर्वभुवनेषु सूक्ष्मशरीरमेवेति भावः । **न पर्याप्तमिति** । भोगवैचित्र्यं तत्साधनानिचेति शेषः । **भौतिको देह इति** । भुवनजशरीरस्योपलक्षणम् । अत एव व्याख्यान्तरमाह **यद्वेत्यादि** । अस्य चाध्वप्रकरणस्य दीक्षायामुपयोग इत्याह **यत इत्यादि** ।

---

इत्यघोरशिवाचार्यविरचितायां मृगेन्द्रवृत्तिदीपिकायां
इन्द्रियादिविचारप्रकरणं द्वादशं समाप्तम् ।

## अथ अध्वप्रकरणं त्रयोदशम् ।

वृत्तिः ।

"अथोक्तार्थप्रसिध्यर्थ"मित्यादिना भुवनादिवर्णनम् । प्राक्तनप्रकरणान्तसूचितं सम्बन्धप्रयोजनं प्रस्तौति ।

**अथोक्तार्थप्रसिद्ध्यर्थं**
**भुवनादि विनिर्ममे ।**
**साधारणाभ्यो योनिभ्यः**
**कलादिभ्यो महेश्वरः ॥ १ ॥**

अथोक्तेति । अशुद्धात्मनां निरतिशयश्रेयःप्रतिबन्धककर्मपाशप्रशमाय तत्तद्भोगसाधनतनुकरणभुवनासिसृक्षातोऽनन्तरम् । महेश्वरोऽनन्तेशनाथः । उक्तस्य संसार्यणोर्भोगलक्षणस्यार्थस्य प्रकर्षेण साकल्येन सिध्यर्थं निष्पादनाय साधारणाभ्यः कलादिभ्यः प्रकृतिभ्यो भुवनानि रचयांचक्रे । रचना चैषां न प्रागभाववतामुत्पत्तिः । अपि तु सत्कार्यवादप्रकरणोक्तवत् शक्त्यात्मना व्यक्तिरूपतया स्वकारणादभिव्यक्तिः ॥ १ ॥

दीपिका ।

इदानीं पाशपदार्थशेषभूताध्वप्रकरणमवतारयति । **अथेत्यादि** । अस्य पदार्थसम्बन्धः पाशपदार्थतया । प्राकरणिको विद्यापादतयैव । पाटलिकः पूर्वपटलान्ते दर्शितः । सौत्रस्सम्बन्धः पाशजालमित्यनेन । वाक्यात्मकश्च "इति प्रवृत्तः करणैः कार्यरूढैस्सभौवनैः" इत्यादिवाक्यैः । **उक्तस्येत्यादि** । भोगाधिकरणानि हि भुवनानि तत्तद्विचित्रभुवनजदेहविषयाणां जनकत्वादित्युक्तम् । एतानि चात्मनां साधारणाभ्य इत्यादि ॥ १ ।

**तानि कालानलादीनि**
**कलाप्रान्तानि मण्डलम् ।**
**संसारमिति तत्वज्ञा**
**भोगस्थानं प्रचक्षते ॥ २॥**

वृत्तिः ।

तानि च कालाग्निभुवनादीनि कलाभुवनान्तानि । एतच्च भोगस्थानं संसारमण्डलं परमार्थविदः कथयन्ति । प्राक्प्रोक्तं सकलत्वं तेन तल्लिङ्गिनः[1] कलादिभ्यो योनिभ्य इति । न तु मायातः । तस्याश्श्रीमत्स्वायंभुवादावकलत्वश्रुतेः । सन्निवेशवतीत्वाद्भोग्यत्वाभ्युपगमे च भोग्यस्य सन्निवेशवतो घटादेरिवानित्यत्वप्रसङ्गभयात् असन्निवेशावतीत्वमभोग्यत्वं चावश्यमङ्गीकार्यम् । ननु पुंसो माया-

---

१. भोगस्थानमितिशेषः ।

यद्यभोग्या तर्हि तत्कार्यव्यतिरेकेणान्यस्य भोग्यस्यासम्भवात् न किञ्चिद्भोग्यमिति अभोक्तैव पुरुषः प्रसक्तः। सत्यं किंतु कार्यं तदीयं यत् व्यक्तिरूपतयाऽवस्थितं तदस्य भोग्यम्। न त्वसौ शक्तिमात्ररूपत्वात्त्वस्या इत्युक्तम् ॥२॥

दीपिका।

**कलाभुवनान्तानीति**। कलामस्तकस्थगहनेशभुवनान्तानि। यदनन्तरमेव वक्ष्यति "मायायामपि पठ्यन्ते गहनेशादयोऽधिपा" इति। कस्य भोगस्थानमित्याकांक्षायामाह। **प्राक्प्रोक्तमित्यादि**। **तल्लिङ्गिन इति**। सकलत्वलिङ्गिनस्सकलस्येत्यर्थः। **नतु मायात इति**। मायाभुवनान्यपि न मायास्थत्वेनाऽभिव्यक्तानि। किंतु तत्कार्यकलामस्तकस्थानीत्यर्थः ॥२॥

वृत्तिः।

यद्येवमपि तद्गर्भे तत्तद्भुवनविशेषश्रुतेः भुवनानां च सन्निवेशविशिष्टतां विना भुवनत्वायोगात् मायातत्वस्याऽपि सन्निवेशवत्त्वं प्रसक्तमित्याह।

**मायायामपि पठ्यन्ते**
**गहनेशादयोऽधिपाः।**
**तत्वशुद्धिश्च दीक्षायां**
**सर्वं तत्कृतिमस्तके ॥३॥**

**नित्यत्वव्यापकत्वादि-**
**श्रवणादवसीयते।**

**दृष्टं पुरादि यद्भोग्यं**
**मूर्तं प्रळयधर्मि च ॥ ४ ॥**

यद्यपि मायातत्वे मण्डलेश्वरगहनेश्वरादयो रुद्रा भुवनाधिवासिनः पठ्यन्ते । यद्वक्ष्यति "अनन्तस्त्रिकलो गोप्ता क्षेमीशो ब्रह्मणः पतिः । ध्रुवतेजोऽधिपौ रुद्रौ गहनेशश्च सर्वराट् । मायाधिकारिणो रुद्रा मण्डलाधिपतीश्वरा" इति । दीक्षायामपि तत्वशुद्धिर्मायातत्वस्थत्वेन यद्यपि क्रियापादेऽभिधास्यते । तथाऽपि न तत्तस्यास्सन्निवेशविशिष्टतामापादयति । किंतु तानि तत्स्थत्वेनोक्तानि भुवनानि तन्निवासिनश्च मण्डलेशाना इत्येतत्सर्वं तत्कृतेस्तत्कार्यभूतायाः कलाया मस्तके ज्ञेयम् । शक्तिरूपाया मायायाः प्रथमा व्यक्तिः कला तन्मूर्धन्येतत्सर्वं स्थितमित्यर्थः । कुत एतज्ज्ञातमित्याह **नित्यत्वव्यापकत्वादीति** । यतो नित्यत्वव्यापकत्वं चास्याः प्रागुपपादितमागमेषु श्रूयते । यदि च भुवनगर्भत्वमस्याः तदा सन्निवेशवती स्यात् । तथा सति अव्यापिका विनश्वरी च भवेत् । अत्राऽपि हेतुमाह । **दृष्टं पुरादि यद्भोग्यं** इति यद्यस्मात्कारणादृष्टं दृश्यमानं च पुरप्राकारादि यद्यत् भोग्यत्वे सति मूर्तं प्रळयधर्मि च दृष्टम् । अस्याश्च सन्निवेशवन्ति भुवनानि गर्भे स्थितानि । भोग्यत्वञ्च यदि साक्षादङ्गीक्रियते तदा मूर्तत्वं विनश्वरत्वं

च प्रसज्यत इति तत्कार्यस्यैव कलादेर्व्यक्तिरूपस्य भुवनयोगित्वे सति न कश्चिद्दोषः ॥ ३–४ ॥

दीपिका ।

एतदेव दर्शयितुं मायायामित्यादिसूत्रद्वयस्य शङ्कामाह । यद्येवमपीत्यादि । तत्वशुद्धिरित्युपलक्षणं भुवनशुद्धेः । उक्तार्थनेवोपसंहरति अस्याश्चेत्यादि । तेषु च भुवनेषु अधिकारावस्थ एव शिवः ॥ ३–४ ॥

वृत्तिः ।

एष एव च न्यायो महामायाख्यायां शुद्धविद्यायामप्यनुसर्तव्य इत्याह ।

**शुद्धाध्वन्यपि मायायाः**
**परस्याः पतयः कृतौ ।**
**ये तस्यामपि पठ्यन्ते**
**तेऽपि तत्कृतिमस्तके ॥ ५ ॥**

शुद्धेऽध्वनि परस्याः शुद्धविद्यात्मिकाया मायाव्यपदेशः । तथाचोक्तं रौरवे "मायोपरि महामाया इति । तत्र कृतौ करणीये स्वे स्वेऽधिकारे येऽधिकृतास्तेऽपि तत्कार्यमूर्ध्नि श्रीमन्मतङ्गाद्युक्तक्रमेण स्थिताः अवगन्तव्याः ॥ ५ ॥

१. रूपभुवनेति पाठभेदः ।

दीपिका ।

इन्धिकादिभुवनानामप्येतेष्वन्तर्भाव इत्याह । **एष एव च न्याय** इत्यादि । **शुद्धविद्यात्मिकायाः** । महामायायाः । नतु तत्कार्यभूतायाः । यदुक्तं "परा वागीश्वरी विद्या माया विद्याऽपरा" स्मृता । इति । **पूर्वश्च** कृतिशब्दोऽ[1]धिकारीत्याह । **तत्रेत्यादि** । तेषु च भुवनेष्वधिकारावस्थ एव शिवस्तदुपाधिभेदेन तत्तत्संज्ञया भुवनेश्वरत्वेनोच्यते । भुवनानां तु बिन्द्व-वस्थात्मकः पारमार्थिकभेद इति वक्ष्यति । मतङ्गादावप्युक्तमित्याह **श्रीमन्म-तङ्गाद्युक्तक्रमेण** इति । उक्तञ्च । "अधिकारी स भोगी च लयी स्यादु-पचारत" इति । अत्र च येधिकृता इत्यधिकृतशब्देनेदं ज्ञापयति । सूत्र-स्थेन पतिशब्देनाधिकारावस्थानि भुवनानि लक्ष्यन्त इति तेषामेव सन्नि वेशविशिष्टत्वात् तन्मस्तकस्थितिरुच्यते यतः । अत एव च शुद्धविद्या-दिशुद्धाध्वोपादानभूतायाः महामायायास्सिद्धिर्बोद्धव्या । ततश्च विद्या-विद्येश्वरादीनामपि शरीराणि न मायीयानि मायोत्तीर्णत्वात् कर्मादिरहि-तत्वाच्च । तद्भुवनानां तच्छरीरादीनां चोपादानं सा कुण्डलिन्याख्या महा-मायेति ॥ ९ ॥

वृत्तिः ।

इदानीमधस्तादध्वैकदेशवर्तिनो ब्रह्माण्डस्योच्छ्रा-यविस्तारौ तद्गतभुवनप्रमाणं च वक्तुं योजनाप्रमाणं पर-माण्वादिक्रमेण वर्णयति ।

**रजो विलोक्यते तिर्यक्**
**जालाविष्टार्करोचिषाम् ।**

---

१. अधिकारार्थक इत्याहेतिस्थितश्चेत्साधुः ।

तदष्टाष्टगुणस्थाने
तृतीये स्यात्कचाग्रकम् ॥

लिक्षा यूका यवोऽप्येव-
मंगुलं तत्त्रिसंगुणैः ।
तैरेव गुणितः पाणि
र्धनुस्तद्वेदलक्षितम् ॥

दण्डो द्वे धनुषी ज्ञेयः
क्रोशस्तद्द्विसहस्रकः ।
द्विक्रोशमाहुर्गव्यूतिं
द्विगव्यूतिं च योजनम् ॥

कपालमर्बुदं स्थौल्यात्
ब्रह्मणोण्डस्य योजनैः ॥ ६-८½ ॥

आदित्यभासां तिर्यग्जालान्तरप्रविष्टानां सतां सूक्ष्मतमं यद्रजो दृश्यते तदष्टगुणीकृत्य तत्प्रमाणं पुनरष्टगुणितं कार्यं यावत्तृतीये स्थाने कचाग्रं नाम प्रमाणं भवति । उक्तं च श्रीमत्स्वतन्त्रे "अष्टानां [1]परमाणूनां सम-

---

1. जालसूर्यमरीचिस्थानां सूक्ष्माणूनामित्यर्थः ।

वायो यदा भवेत् । त्रसरेणुस्तदाख्यातः तत्पञ्चरज उ-
च्यते ॥ त्रसरेण्वष्टकं देवि वालाग्रं तद्विधीयत" इति ॥
तैरष्टभिः कचाग्रैर्लिक्षा तदष्टकेन यूका ताभिरष्टभिर्यवो
ज्ञेयः । **एवमिति** । यवाष्टकेनाङ्गुलम् । **तत्रिसंगुणै-
स्तैरेव गुणितः पाणिरिति** । तैरेवेत्यष्टभिस्त्रिगुणितैश्च-
तुर्विंशत्यङ्गुलैर्गुणितस्तु पाणिः हस्तो भवति । वेदशब्दस्य
चतुस्संख्यालक्षकत्वात्तेषां पाणीनां चतुष्केण लक्षितं धनु-
स्संज्ञं प्रमाणं बोद्धव्यम् । धनुर्द्वयेन दण्डः दण्डसहस्र-
द्वयेन क्रोशः क्रोशद्वयं गव्यूतिः । तद्द्वयं च योजनं
एषां योजनानामर्बुदं कोटिविस्तृतं ब्रह्माण्डकपालं ज्ञे-
यम् ॥ ६–८३ ॥

दीपिका ।

रज इत्यादि सार्धसूत्रत्रयं सम्बन्धयति । इदानीमित्यादि ॥६-८३॥

**तस्यान्तः काञ्चनं धाम
कालाग्नेस्तावदेव हि ॥ ९ ॥**

**यत्रान्तकालतीक्ष्णांशु
कोटितेजास्तथाविधैः ।
रुद्रैरास्ते वृतो देवः
कालाग्निरिति विश्रुतः ॥ १० ॥**

सर्वाध्ववर्तिभूतानां[1]
यस्मिन्नुद्वृत्ततेजसि ।
भयमुत्पद्यते शक्त्या
संहर्त्र्या चोदिते प्रभोः ॥ ११ ॥

तस्येति ब्रह्माण्डस्यान्तः कालाग्नेस्सौवर्णगृहं कोटिः[2] । यत्र गृहे कल्पान्तार्ककोटिसमदीप्तिस्तथाविधानेकरुद्रैर्वृतः कालाग्निस्तिष्ठति । यस्मिन् पारमेश्वर्या संहर्त्र्याख्यया शक्त्या क्षयाय प्रेरिते उद्दीपिततेजसि समस्ताध्ववर्तिनां भूतानां त्रासस्संजायते ॥ ११ ॥

दीपिका ।

तस्येत्यादिनाऽण्डान्तर्गतानि भुवनानि सप्रमाणान्युच्यन्त इत्याह । तस्येत्यादि ॥ ११ ॥

तस्य स्वभावतो ज्वालाः
प्रवृत्ता दशकोटयः ।
योजनानां तदर्धेन
धूमस्सान्द्रस्सुदारुणः ॥ १२ ॥

वृत्तिः ।

प्रकृत्या तज्ज्वाला दशकोटिप्रमाणाः धूमः पैञ्चकोटिस्सान्द्रो[3] घनो दारुणः दुस्सहः ।

---

१. कालाध्ववर्तिभूतानामिति पाठभेदः । २. कोटियोजनप्रमाणमित्यर्थः । ३. पञ्चकोटियोजन इत्यर्थः ।

ततः पुटास्त्रयस्त्रिंशत्
दशलक्षोनकोटिकाः ।
तदन्तराणि द्वात्रिंश
लक्षकाणि दुरात्मनाम् ॥ १३ ॥
स्थानानि यातनाहेतोः
निर्मितान्यध्ववेधसा ॥ १३½ ॥

वृत्तिः ।

ततः अनन्तरं नरकविस्ताररूपास्त्रयस्त्रिंशत्पुटाः प्रत्येकं नवतिलक्षाणि तदन्तराणि द्वात्रिंशत् तेभ्य एकैकं लक्षप्रमाणं एतानि पापीयसां यातनार्थं कृतानि **अध्ववेधसेति** । भुवनाध्वस्रष्ट्राऽनन्तेशेनेत्यर्थः ॥ १३½ ॥

तानि ते नामभिर्वक्ष्ये
द्विजमुख्य निबोध मे ॥ १४ ॥
रौरवध्वान्तशीतोष्ण
सन्तापाब्जमहाम्बुजाः ।
कालसूत्राष्टमा ह्येते
नरका इति विश्रुताः ॥ १५ ॥

वृत्तिः ।

अथ महानरकाणामष्टानां संज्ञाः ।

सूच्यास्यकालखड्गाख्य
क्षुरधाराम्बरीषकाः ।
तप्तांगारमहादाह
सन्तापाश्चेति हे मुने ॥ १६ ॥

भवन्त्यष्टौ[1] सुभीभत्सा
महाशब्दपदानुगाः ॥ १६३ ॥

वृत्तिः ।

सुभीभत्साः । अतिभयानकाः । महाशब्दस्य पदं नरक इत्याख्यरूपमनुगतं येषां ते महानरकसंज्ञा इत्यर्थः ।

वृत्तिः ।

अथ नरकराजाष्टकम् ।

लाक्षाप्रलेपमांसाद
निरुच्छ्वसनसोच्छ्वसाः ॥ १७ ॥

---

१. अष्टौ च भीभत्सा इति पाठो विद्यते ।

युग्मा[1]द्रिशाल्मलीलोह
प्रदीप्तक्षुत्पिपासकाः ।
कृमीणां निचयश्चेति
राजानः परिकीर्तिताः ॥ १८ ॥

अथ लोहस्तम्भेत्यादिना राजराजेश्वराष्टकसंज्ञा उच्यन्ते ।

लोहस्तम्भोऽथ विण्मूत्र
स्तथा वैतरिणी नदी ।
तामिस्रश्चान्धतामिस्रः
कुम्भीपाकस्सरौरवः ॥ १९ ॥

महापदानुगोऽवीची
राजराजेश्वरास्स्मृताः ॥ १९½ ॥

अथैषां पुटानां सान्तराळानां संख्यामाकलयितुमाह–

एषां पुटानां नरकै
स्साधं योजनसंख्यया ॥ २० ॥

---

१. युग्मार्द्रीति पाठभेदः ।

भवन्ति कोटयस्त्रिंशत्

द्वे च लक्षे द्विजोत्तम ॥ २०½ ॥

त्रिंशद्योजनकोटयो लक्षद्वयं चेति त्रयस्त्रिंशत्पुटानां सान्तरालानां प्रमाणम् ।

ततस्त्रिंशत्सहस्राणि

त्यक्त्वा भूर्नव लाक्षकी ॥ २१ ॥

भवत्ययोमय्यर्धेन

पूर्वेणार्धेन काञ्चनी ॥ २१½ ॥

ततोऽनन्तरं त्रिंशत्सहस्राणि योजनानां त्यक्त्वा नवलक्षप्रमाणा भूः पूर्वेणार्धेन हेममयी । अपरेण त्वयोमयी ।

योऽप्यधस्तात्पुटस्तस्य

मृदर्धं चार्धमायसम् ॥ २२ ॥

तत्र द्वात्रिंशतोऽमीषां

निरयाणां पतिस्स्थितः ।

कूश्माण्ड इति विख्यातः

प्रलयार्कानलद्युतिः ॥ २३ ॥

**करालवदनः क्रुद्धो**
**वृत्तकोटरलोचनः ।**
**टंकपाणिस्तथाभूतैः**
**भूतैर्भूयोभिरावृतः ॥ २४ ॥**

अनन्तरोक्ताया नवलाक्षक्या भुवो हैमात्पुटाद-धस्स्थो योऽयोमयः पुटः तस्याप्यर्धं मृत् अर्धं चायसम् । तत्र चामीषां प्रागुक्तानां नरकाणां द्वात्रिंशत्तस्येशः कू-श्माण्डाख्यः कराळवदनत्वादिविशेषणविशिष्टस्तथाविधैर्भूतैः परिवृत आस्ते । वृत्तकोटराणि परिवर्तुळगर्भाणि शरावा-कारलोचनानि यस्य सः । एवं टङ्कः प्रागुक्तः परशुः ॥२४॥

दीपिका ।

एवमण्डाधोभित्या सह कालाग्निधूमान्तं सप्तदशकोटयो नरकवि-स्ताररूपा इति अन्तराळरूपा ऊर्ध्वाधःपुटाभ्यां सह त्रयस्त्रिंशद्भवन्ति । रौरवादयो द्वात्रिंशन्निरयाः प्राधान्येनात्र दर्शिताः । तेषां चत्वारिंशदधि-कशतसंख्यातत्वात् । यदुक्तं श्रीमत्किरणे "चत्वारिंशत्समाधिकं शतं तेषां प्रकीर्तितम् । द्वात्रिंशत्तत्रराजान" इति । तत्र चामीषामित्यादि । अत एव तदीश्वरस्य कूश्माण्डभूवनान्तर्गतत्वेन भुवनदीक्षायां तच्छुद्ध्यैव तेषां नरकाणां शुद्धिरिति भावः ॥ २४ ॥

**अयोरुक्मपुटादूर्ध्व-**
**मष्टमीयं वसुन्धरा ।**

साहस्राष्षट् परा मध्या
व्यर्कलक्षाग्निकोटिकी ॥२५॥
वसत्यो नव साहस्राः
परा दश सहस्रकी ।
तदासां सप्तकं सद्भिः
ख्यातं [illegible] कम् ॥२६।

काञ्चनमायसं च यत्पूर्वद्वयमुक्तं ततोऽनन्तरं इयं वसुन्धरा भूमिरष्टमी यस्यां वयमास्थिताः । एतद्व्यतिरिक्ताश्चान्याष्षट् भूमयस्सहस्रप्रमाणाः अस्यास्तासां च षण्णां या मध्ये भवा मध्या सप्तमी भूमिः । सा विगतद्वादशलक्षकोटित्रयप्रमाणा द्वे कोट्यावष्टाशीतिश्च लक्षाणीत्यर्थः । एतस्य भूम्यष्टकस्यान्तराळे । वसत्यः । आस्पदानि । एकैकं नवसाहस्रप्रमाणानि । परेति । ऊर्ध्ववर्तिनी या वसतिर्वक्ष्यमाणसहस्रयोजनप्रमाणकाञ्चनास्पदहाटकेशानाधिष्ठानभूता सा दशसहस्रा । आसां च वसतीनां सप्तकं तत्सप्तपाताळमिति विद्वद्भिरुक्तम् ॥२६॥

दीपिका ।

अयोरुक्मेत्यादि व्याचष्टे । काञ्चनेत्यादि । अयमर्थः । आद्यायास्सहस्रप्रमाणाया भुवस्सप्तम्याश्च विगतार्कलक्षकोटित्रयप्रमाणाया मध्ये

1. साष्टादशलक्षाद्विकोटिकीत्यपि विशदः पाठभेदः ।

वसतीनां षट्कं प्रत्येकं नवसहस्रयोजनप्रमाणान्तरायाश्चास्या अष्टम्या भूमेर-
धोभागरूपाया हाटकेशाधिष्ठानभूतया दशसहस्रप्रमाणया वसत्या सह सप्त
वसनानि भवन्ति । अस्या ऊर्ध्वभागः साष्टसहस्रयोजनप्रमाणभूमिपृष्ठमिति ।
एवं भूपृष्ठान्नारकान्तं कोटिद्वयमष्टनवतीश्च लक्षयोजनम् । नरकाणां तु
सान्तरालानां प्रमाणं लक्षद्वयाधिकाः त्रिंशत्कोट्यः पूर्वोक्तधूमान्तास्सप्तद-
शेत्येवं पञ्चाशत्कोट्यो भवन्ति । इदं च मानं सर्वेषु शास्त्रेषु समानमेव ।
यत्राप्यवान्तरमानभेदः तत्राऽपि कुतश्चित् केषां चिदन्तर्भाव इत्यवि-
रोधः ॥ २६ ॥

**तन्नामतोऽधिपतितः**
**उच्यमानं निबोध मे ।**
**आभासं परतालाख्यं**
**नितलं च गभस्तिमत् ॥ २७ ॥**

**महातलं रसांकञ्च**
**पातालं सप्तकं मुने ॥ २७½ ॥**

वृत्तिः ।

इत्थं नामत उक्त्वा अधिपतीन् कथयति ।

**सप्तस्वेतेषु दैत्येन्द्र**
**भुजगक्षणदाचराः ॥ २८ ॥**

सप्तसप्त समाख्याता
स्तानप्यथ निबोध मे ॥ २८ ॥

एकैकस्मिन् दैत्यन्द्रः नागो राक्षसश्चैतेषु सप्त सप्त कथितास्तांश्चोच्यमानान् बुध्यस्व ॥ २८½ ॥

दैत्यश्शंकुश्रुतिः पूर्वं
प्रह्लादश्शिशुपालकः ॥ २९ ॥

कर्कन्दुका हिरण्याक्षो
बृहद्गर्भो बलिस्तथा ॥ २९½ ॥

इति सप्तसु दैत्यसप्तकम् ॥ २९½ ॥

वृत्तिः ।

नागानाह ।

काद्रवेयाः कुटिलको
वासुकिः कम्बळस्तथा ॥ ३० ॥

कार्कोटकोऽथ कालांगः
दुर्दर्शस्तक्षकस्तथा ॥ ३०½ ॥

कद्रोरपत्यानि । काद्रवेयाः ॥ ३०½ ॥

वृत्तिः ।

अथ नागानन्तरोपक्रान्तं रक्षस्सप्तकम् ॥

विकटो लोहिताक्षश्च
यमाख्यो विकटाननः ॥ ३१ ॥
करालो भीमनिर्ह्लादः
पिङ्गलश्चेति राक्षसाः ॥ ३१½ ॥

वृत्तिः ।

अथ हाटकेश्वरभुवनम्—

तेषामुपरि निश्शेष
पातालाधिपतीश्वरः ॥ ३२ ॥

साहस्रे काञ्चने धाम
मण्डले हाटकास्स्थितः ।
यं स्तुवन्ति प्रियप्राप्त्यै
यता यातिविभूषणैः ॥ ३३ ॥

दैत्ययक्षसुराहीश
ललना ललितैः पदैः ॥ ३३½ ॥

तेषां पाताळानामूर्ध्वं तदीश्वरो हाटकेशस्स्थितः । यं भगवन्तं दानवगुह्यकदेवनागाङ्गनास्सुन्दरैस्स्तुतिपदैस्स्तुवन्ति । कीदृश्यस्ता इत्याह यताः । प्रयताः । किं भूतैः पदैस्स्तुवन्ति यतिविभूषणैः । यतिः द्रुतमध्यविलम्बितरूपा परिपाटी सैव भूषणं येषां स्तुतिपदानां तैः गीत्यनुरक्तैश्चाटुभिराराधयन्तीत्यर्थः । किमर्थं प्रियप्राप्त्यै । यतस्ताः कामवशीकृताः ॥ ३३½ ॥

दीपिका ।

अथ पाताळसप्तकं भुवनदीक्षायां हाटकेश्वरभुवनान्तर्गतमेव शोध्यमिति दर्शयितुं तेषामुपरीत्यादिना तस्य तदीशत्वमुच्यत इत्याह **तेषां पाताळानामित्यादि** ॥ ३३½ ॥

**ततः कोटिशतं पृथ्वी**
**नानाजनसमाश्रया ॥ ३४ ॥**
**द्वीपशैलसरिद्वारि**
**निधिमण्डलमण्डिता ॥ ३४½ ॥**

वृत्तिः ।

ततोऽनन्तरं विविधजनास्पदा वक्ष्यमाणद्वीपजलनिधिबृन्दैर्भूषिता भूः ॥ ३४½ ॥

दीपिका ।

एवं भूपृष्ठान्तमूर्ध्वमानमुक्त्वाऽस्मिन् प्रदेशे ब्रह्माण्डस्य तिर्यङ्मान-

मपि शतकोटियोजनप्रमाणामिति दर्शयितुं ततः कोटिशतमित्यादि व्याचष्टे। ततोऽनन्तरमित्यादि। तत एवाण्डकारत्वादण्डमुच्यते। तदुक्तं "सर्व· ज्ञानोत्तरे—कुक्कुटाण्डसमाकारं ब्रह्माण्डमिदमुच्यते" इति ॥ ३४½ ॥

वृत्तिः ।

द्वीपानां प्रमाणं संज्ञां चाह ।

**जम्बूशाककुशक्रौञ्च**
**शाल्मगोमेदपुष्कराः ।**
**लक्षादिद्विगुणा द्वीपाः**
**क्षाराद्याब्धिभिरावृताः ॥ ३५½ ॥**

वक्ष्यमाणवल्लक्षादारभ्योत्तरोत्तरद्विगुणमानकाः क्षारक्षीरादिभिः तत्प्रमाणकैस्समुद्रैः परिवृताः जम्ब्वादिद्वीपास्सप्त ॥ ३५३/२ ॥

वृत्तिः ।

**ततो हिरण्मयी भूमिः**
**लोकालोकश्च पर्वतः ।**
**तमः परस्ताद्गर्भोदः**
**कटाहश्चेति भूतलम् ॥ ३६½ ॥**

पश्चाद्भूमिः काञ्चनमयी लोकालोकसंज्ञोद्रिः तद्ब-

हिस्तमः ततस्तु गर्भोदाख्योऽब्धिः अण्डकटाहश्चेत्येतद्भू-
तलम् ॥ ३६½ ॥

वृत्तिः ।

अथैतद्विभागं विस्तरेण ज्ञातुमिच्छन् मुनिः प्रश्न-
यति ।

चित्रशैलसरिद्वीप
काननोदध्यलंकृताम् ।
पृथ्वीं भगवतीं शक्र
श्रोतुमिच्छामि विस्तरात् ॥ ३७½ ।
त्वयि वक्तरि देवेश
सर्वप्रत्यक्षदर्शिनि ।
निष्ठाज्ञाप्तिरसाकृष्टं
श्रुतौ धावति मे मनः ॥ ३८½ ॥

विविधवननगसरिद्वीपोपवनार्णवमण्डितं भुवनं वि-
स्तरात् श्रोतुमिच्छामि । त्वयि किल सकलप्रत्यक्षदर्शिनि
उपदेष्टरि मम निरवशेषज्ञानौत्सुक्याक्षिप्तं चेतश्श्रवणानि-
मित्तं धावति ॥ ३८½ ॥

वृत्तिः ।

वर्तयिष्य इत्यैन्द्रं वचः ।

वर्तयिष्ये द्विजश्रेष्ठ
प्रस्तुतोक्तिशरीरवत् ।
द्वीपान्नदीर्वनान्तांश्च
शृणुष्वैकाग्रमानसः ॥ ३९½ ॥

इतः परमध्वग्रन्थस्सुगमत्वात् क्वचित्प्रदेशो वृत्त्या व्याख्यायते । वर्तयिष्ये । अभिधास्ये । प्रस्तुतोक्तिशरीर-क्रमेण ॥ ३९½ ॥

जम्बूद्वीपं क्षितेर्नाभिः
तद्वृत्तं लक्षयोजनं
क्षाराब्धिना परिवृतं
परिवृत्तेन तावता ॥ ४०½ ॥

तावतेति । लक्षप्रमाणेनेत्यर्थः ।

तस्य मध्ये स्थितश्शैलो
राजराजो हिरण्मयः ।
तिरस्कृतांशुमज्ज्योति-
र्मेरुस्सुरनिषेवितः ॥ ४१½ ॥

तन्मध्ये पर्वताधिराजो देवसेवितः काञ्चनमयः प्रतिहतार्ककान्तिः मेरुस्स्थितः ॥ ४१½ ॥

स षोडशसहस्राणि
क्षितौ विष्टो महीतलात् ।
तदूनमुन्नतो लक्षं
मूले षोडश विस्तृतः ॥ ४२½ ॥

स भूमेरन्तष्षोडशयोजनसहस्राणि प्रविष्टः महीतलादारभ्योर्ध्वं यावच्चतुरशीतिसहस्रयोजनोन्नतः मूले च षोडशसहस्रविस्तरः ऊर्ध्वतोऽस्य शरावाकृतिः विस्ताराधिक्येन द्वैगुण्यम् । उक्तं च श्रीमत्स्वतन्त्रे । "षोडशैकसहस्राणि बुध्नभागे प्ररोपितः । तान्यस्य मूले विस्तारस्स्यादूर्ध्वं द्विगुणस्तु सः । सशरावाकृतिर्देवि मेरुर्देवाश्रयोऽद्रिराट्" इति ॥ ४२½ ॥

त्रिषु पादान्तरेष्वस्य
चतुर्वृद्धेषु पर्वसु ॥ ४३ ॥

नेमयः कटकाकारा
निर्गता दीप्तिमत्तराः ।
एका दशसहस्रान्या
मनुसाहस्रकी परा ॥ ४४ ॥

नेमिर्या मस्तकोपान्ते
लोकपालसमाश्रया ।
चक्रवाटेति तामाहुः
सर्वरत्नप्रभावतीम् ॥ ४५ ॥

वृत्तिः ।

अस्य मेरोस्स्वोच्छ्रायपादेन पञ्चविंशतिसहस्रात्मकेनान्तरं येषां तेषु तथाविधेषूत्तरोत्तरं चतुस्सहस्रविवृद्धेषु पर्वसु भागसन्धिषु कटकाकारास्सुष्ठु दीप्तास्तिस्रो नेमयः मेखला निर्गताः । तदेवैषु त्रिषु स्थानेषु चतुर्वृद्धत्वं दर्शयति **एका दशसहस्रेत्यादिना** । **एका** आद्या दशसहस्रप्रमाणा । द्वितीया मनुसहस्रप्रमाणा चतुर्दशसहस्रप्रमाणा । चतुर्वृद्धत्वोक्तेश्च तृतीया अष्टादशसहस्रविस्तृता । सा नेमिर्या मस्तकसमीपे लोकपालाश्रयभूता तां चानेकरत्नखचितप्रभाभासुरां चक्रवाटोक्त्या आगमज्ञा आहुः । एवं च प्रागुक्तचतुरशीतियोजनसहस्रोच्छ्रायस्य मेरोः पर्वत्रयं पञ्चसप्ततिसहस्रमानकम् । कटकत्रयं तु नवसहस्रोन्नतं एकैकस्य त्रिसहस्रमानकत्वादित्यागमः ॥ ४३–४५ ॥

दीपिका ।

त्रिषु पादान्तरेष्वित्यादि व्याचष्टे **अस्य मेरोरित्यादि** । **चतुस्सहस्रविवृद्धेष्विति** । तिर्यक्दिशामसौ मानवृद्धिः । उच्छ्रायमानस्य

वक्ष्यमाणत्वात् । अत्र आह । आद्या दशसहस्रप्रमाणा इत्यादि । दशसहस्रप्रमाणविस्तारास्तिस्रो नेमयो निर्गता इत्यर्थः । आसां च सान्तराळानां भूपृष्ठात्प्रभृत्युच्छ्रायमानमागमान्तरेषु ज्ञेयमित्याह । एवं चेत्यादि । पर्वत्रयमिति पर्वशब्देनचात्र भूपृष्ठाच्चक्रवाटान्तं सान्तराळानां तदुच्यते । कटकत्रयं चेति । नेमित्रयमित्यर्थः ॥ ४३–४५ ॥

**सिद्धगन्धर्वमरुतां**
**तदधः पर्वसु स्थितिः ।**
**तस्यामष्टसु शृङ्गेषु**
**पुर्योऽष्टौ समवस्थिताः ॥ ४६ ॥**

**प्राच्यादिष्विन्द्रमुख्यानां**
**नामतस्तान्निबोध मे ॥ ४६½ ॥**

चक्रवाटाधस्स्थितेषु उक्तेषु त्रिषु पर्वसु सिद्धादीनामास्पदं या तु चक्रवाटाख्योर्ध्वमेखला तस्यामित्यर्थः । अन्यत्स्पष्टम् ॥ ४६–४६½ ॥

दीपिका ।

अत एव सिद्धेत्यादि सूत्रं व्याचष्टे । चक्रवाटाधस्स्थितेष्वित्यादि ॥ ४६–४६½ ॥

**नानारत्नप्रभाजाल**
**मण्डलालंकृता हरेः ।**

सिद्धसाध्यमरुज्जुष्टा
रुक्मभूरमरावती ॥ ४७½ ॥

वृत्तिः ।

विविधरत्नकान्तिकलापपरिवेषभूषिता सिद्धादिसेविता हेमभूतला प्राच्यामिन्द्रस्यामरावत्याख्या पुरी ॥४७½॥

रक्तपीतमणिप्राय
हेमप्राकारगोपुरा ।
वह्नेस्तेजोवती वह्नि-
तुल्यभूतनिषेविता ॥ ४८½ ॥

वृत्तिः ।

गोपुरं द्वारशाला । वह्नितुल्यैस्तत्सदृशप्रभावाद्भिः भूतैस्सेविता ॥ ४८½ ॥

मृत्योस्संयमिनी तुङ्ग-
लोहप्राकारमण्डला ।
कालपाशपितृव्याधि-
प्रेतमारीनिषेविता ॥ ४९½ ॥

वृत्तिः ।

कालपाशादिजुष्टाऽत्युन्नता आयसप्राकारसमूहा संयमिनी नाम दक्षिणस्यां दिशि याम्या पुरी । मारी नाम युगपदनेकलोकक्षयहेतुरुत्पातो विशिष्टदेवताधिष्ठानः । सा च देवता प्रेतपतिनाऽज्ञप्ता यत्र कञ्चित्कार्यं करोति ॥४९½॥

कृष्णा दैत्यपतेर्मृत्यो-
धामवद्दैत्यसेविता ।
नीलरत्नप्रभाजाल
वितानवरभूषणा ॥ ५०½ ॥

वृत्तिः ।

वैडूर्येन्द्रनीलप्रभापुञ्जवद्भिर्वितानश्रेष्ठैर्भूषिता यमपुरीवदसितवर्णा दैत्यजुष्टा कृष्णाख्या निर्ऋतेः पुरी ॥५०½॥

शुद्धवत्यम्बुनाथस्य
स्फटिकोपलनिर्मिता ।
पाण्डराभ्रोपमैर्याद-
स्सेविता भाति धामभिः ॥ ५१½ ॥

वृत्तिः ।

शुद्धवती नाम नगरी वरुणस्य नगरी । स्फटि-

कशिलाविरचिता मकरकूर्मादिसेविता श्वेताभ्रशुभ्रैर्गृहैः शोभते ॥ ५१½ ॥

वायोर्गन्धवती तुंग-
श्वेतपीतध्वजाकुला ।
बलवद्भूतसंजुष्टा
सर्वरत्नविनिर्मिता ॥ ५२½ ॥

श्वेतैः पीतैश्च ध्वजैर्युक्ता विचित्ररत्नविरचिता समर्थभूतनिषेविता वायोः पुरी गन्धवतीनाम ॥ ५२½ ॥

महोदया चन्द्रमस-
श्श्वेता मुक्तादिनिर्मिता ।
द्विजसङ्घस्तुता भाति
गृहैर्हिमगिरिप्रभैः ॥ ५३½ ॥

वृत्तिः ।

सोमस्योदीच्यां महोदयाख्या शुक्ला पुरी । मुक्तादिनिर्मितेत्यादिग्रहणात् चन्द्रकान्तदृषद्धा । सा च ब्राह्मणबृन्दस्तुता । प्रालेयादिद्युतिभिः भवनैश्शोभते ॥ ५३½ ॥

ज्वलल्ललाटदृग्दग्ध
स्मरमृत्युयशोभृतः[1] ।
पुरी यशोवती सर्व-
रत्नजा रुद्रसेविता ॥ ५४½ ॥

वृत्तिः ।

ज्वलता तृतीयेनाक्ष्णा दग्धौ कामकालौ येन अत एव तथाविधसकलजगद्वैरिविनाशाद्यशोभृत ईशानस्य सर्वरत्नविनिर्मिता रुद्रैस्सेविता यशोवती नाम पुरी ऐशान्यां दिशि वर्तते ॥ ५४½ ॥

इति सर्वर्तुसुखदा-
श्चक्रवाटार्धविस्तृताः ।
पुर्योऽष्टावनिलोद्भूत
पारिजातरजोरुणाः ॥ ५५½ ॥

वेधसा निर्मिता लोक-
पालचक्रानुवर्तिनाम् ।
भूतये स्वर्ग इत्येता
गीयन्ते कविभिः क्षितौ ॥ ५६½ ॥

---

१. स्मरस्येशस्यशोभितेति पाठभेदः ।

वृत्तिः ।

सर्वेषां ऋतूनां सम्बन्धि सुखदुःखं ददन्तीति सर्वर्तुसुखदाः । तथा चक्रवाटार्धेन नवसहस्रात्मना विस्तीर्णा लोकपालचक्रानुवर्तिनां इन्द्राद्याराधकानां भूतये अभ्युदयाय स्वर्ग इत्येताः पुर्यः कविभिर्गीयन्ते । पारिजातस्स्वर्गद्रुमविशेषः तत्कुसुममकरन्दोज्वलत्वेन मनोरमत्वमासां युक्तम् ॥ ५६½ ॥

वृत्तिः ।

अथ ब्रह्मणः पुरी ।

**चतुर्दशसहस्राणि**
**योजनानां स्वयम्भुवः ।**
**मध्ये मनोवती नाम**
**पुरी लोकेशवन्दिता ॥ ५७½ ॥**
**या चकारारुणानुच्चैः**
**वियन्मार्गान् महाश्रिया ।**
**सावित्र्या स्पर्धमानेव**
**स्वर्गकामातिवर्तिनी ॥ ५८½ ॥**

वृत्तिः ।

**महाश्रियेति** तेजोलक्ष्म्या । स्वर्गे कामास्स्वर्गकामाः

तेषां ततः प्रवृत्तिर्निवर्तेत इति स्वर्गकामातिवर्तिनीत्वम् । अत एव तेजोतिशययोगात् ब्रह्मपदावाप्तिहेतुत्वाच्च सावित्र्या स्पर्धमानेव ॥ ५८½ ॥

तस्यामुपासते देवा
मुनयश्च महौजसः ।
महायोगीश्वरं सिद्ध्यै
यमाद्यैर्भूतवेधसम् ॥ ५९½ ॥

वृत्तिः ।

तस्यामतुल्यबला देवा महर्षयश्च महतां योगिनामपि ध्येयं विधातारं सिद्ध्यर्थं यमनियमादिभिरुपासते सेवन्ते । अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः । शौचसन्तोषार्जवस्वाध्यायेश्वरप्रणिधानानि नियमाः ॥५९½॥

तदीशभागे तस्याद्रे-
श्शृंगमादित्यसन्निभम् ।
यत्तज्ज्योतिष्कमित्याहुः
सदा पशुपतेः प्रियम् ॥ ६०½ ॥

वृत्तिः ।

तस्यां ब्रह्मपुर्यां ईशानदिग्गतं मेरोश्शृङ्गमतिदीप्तं परमेश्वरस्येष्टं ज्योतिष्काख्यम् ॥ ६० ॥

दीपिका ।

परमेश्वरस्येति । श्रीकण्ठनाथस्यानन्तशिष्यस्य सत्यलोकोर्ध्वस्थितस्य यदुक्तं मतङ्गे --"पूर्वोत्तरे तु दिग्भागे ज्योतिष्मच्छिखरं महत् । तत्राहं मुनिशार्दूल लोकानुग्रहकारणात् । कृताधिवास" इति । अत्र च मेरुमूर्ध्नि विष्णोरपि स्थानमागमान्तरेषु श्रूयते । यदुक्तं किरणे "मेरुमध्ये सुपर्वनमित्युपक्रम्य त्रिभिश्शृङ्गैस्समायुक्तो रौप्यकाञ्चनरत्नजैः । कृष्णस्य राजतं शृङ्गं सौवर्णं ब्रह्मणो मतम् । रत्नजं शाङ्करं स्थानं तदधोऽमरवासिनः" इति । श्रीमत्पराख्येऽपि "तन्मूर्ध्नि गणशृङ्गस्था केशाश्चैश्वर्यगर्विता" इति ॥ ६०३ ॥

**तस्य सानुषु हैमेषु**
**रत्नचित्रेषु संस्थिताः ।**
**स्कन्दनन्दिमहाकाल**
**गणेशादिगणावराः ॥ ६१ ॥**

**शासितुर्देवदेवस्य**
**स्थानं त्रिपुरविद्विषः ।**
**रुद्रायुतगणैर्जुष्टं**
**ब्रह्माद्यैश्च सुरोत्तमैः ॥ ६२½ ॥**

वृत्तिः ।

तस्य ज्योतिष्कस्य समभूभागेषु प्रकृष्टानां सदाशिवतत्वादधोवक्ष्यमाणत्वादवराः स्कन्दनन्दीशादयो

गणेश्वराः । शासितुः ब्रह्मेन्द्रादीनां विनेतुः साक्षाज्जगत्र-तस्स्थानम् । अनेकसंख्यैरुद्रैर्ब्रह्माद्यैश्च देवैस्समेवितम् ॥ ६१½–६२½ ॥

इति मेरुरधोऽस्यान्ये
दिक्षु ये भूधरास्स्थिताः ।
तच्छिष्टानि नवद्वीप-
वर्षाण्यस्मिन्निबोध मे ॥ ६३½ ॥

वृत्तिः ।

इत्थं मेरुरुक्तः अस्याधोवक्ष्यमाणविष्कम्भशैलाश्चत्वारः प्राच्यादिदिक्षु ये स्थितास्तद्वर्जितानि द्वीपवर्षाणि नवास्मिन् जम्बूद्वीपेऽवधारय ॥ ६३ ॥

वृत्तिः ।

तत्र विभागाद्रींस्तावदाह ।

निषधो हेमकूटश्च
हिमवांश्चाचलोत्तमः
मेरोर्दक्षिणतो नील-
श्श्वेतश्शृङ्गीति वामतः ॥ ६४½ ॥

सहस्रद्वयविष्कम्भा
दशोत्सेधा नवान्तराः ।
प्रागायतास्सुपर्वाणः
सागराहितकोटयः ॥ ६५½ ॥

वृत्तिः ।

मेरोर्दक्षिणदिग्भागे निषधहेमकूटहिमवन्तः । उत्तरे नीलश्वेतशृङ्गवदाख्या विभागाचलाः । एते द्वियोजनसहस्रविष्कम्भा दशसहस्रोत्सेधा नवसहस्रव्यवधानाः प्राक्पश्चिमदिग्भागवर्तिक्षारोदलग्नपर्यन्ताः । सुपर्वाण इति । सुष्ठु शोभनानि पर्वाणि वक्ष्यमाणानि अन्तरस्थानि वर्षाणि येषाम् ॥ ६४½–६५½ ॥

तदर्धेनात्तविष्कम्भौ
माल्यवद्गन्धमादनौ ।
याम्योत्तरौ प्राक्प्रतीच्यौ
मेरुतस्तावदन्तरौ ॥ ६६½ ॥

वृत्तिः ।

निषधादिशैलमानार्धेन गृहीतविस्तारौ । सहस्र-

विस्तारावितिि यावत् । दक्षिणोत्तरायतौ । मेरुतः प्राच्यां प्रतीच्यां च माल्यवद्गन्धमादनौ । तावदन्तराविति यावदेव चतुर्दिक्स्थितनिषधादिशैलत्रयावृतशिष्टं चतुस्त्रिंशत्सहस्रायाममन्तरं दक्षिणोत्तरदिशोस्तावत्प्रमाणमेवानयोर्मध्यमित्यर्थः ॥ ६६½ ॥

वृत्तिः ।

तदेव विभागाचलैः परिच्छेत्तुमाह ।

**पश्चान्माल्यवतः प्राच्यां**
**गन्दमादनशैलतः ।**
**इलावृतं नीलगिरे-**
**र्याम्यतो निषधादुदक् ॥ ६७½ ॥**

वृत्तिः ।

माल्यवतोऽद्रेः पश्चिमदिग्भागे गन्धमादनाद्रेः प्राक् नीलगिरेर्दक्षिणतः निषधादुत्तरे चेळावृतं वर्षं जम्बूद्वीपमध्यस्थम् ॥ ६७½ ॥

दीपिका ।

तदेव विभागाचलैरित्यादि । निषधादिचतुर्दिग्गतविभागाद्रिचतुष्टयं मेरोश्चान्तराळमिति यावत् ॥ ६७½ ॥

भद्राश्वं माल्यवत्प्राच्यां
　वर्षं भद्रजनाकुलम् ।
सुकेतनं केतुमालं
　प्रतीच्यां गन्धमादनात् ॥ ६८½ ॥

वृत्तिः ।

माल्यवतः प्राक् भद्राश्वं वर्षम् । गन्धमादनात्प्रत्यक् शोभनगृहं केतुमालं नाम ॥ ६८½ ॥

निषधाद्धरिवर्षं यत्
　याम्यतो हेमकूटतः ।
नाम्ना किंपुरुषं ख्यातं
　भारतं हिमवद्गिरेः ॥ ६९½ ॥

रम्यकाख्यमुदग् नीलात्
　हिरण्यं श्वेतपर्वतात् ।
यदुत्तरं शृङ्गवतः
　कुरुवर्षं तदुच्यते ॥ ७०½ ॥

वृत्तिः ।

निषधहेमकूटहिमाद्रिभ्यो दक्षिणभागस्थानि हरि-

किंपुरुषभारताख्यानि वर्षाणि । एवं नीलश्वेतशृङ्गवच्च उत्तरे रम्यकहिरण्यवत्कुरुवर्षाणि ॥ ७०½ ॥

विष्कम्भशैलाश्चत्वारो
　मेरोस्स्थैर्याय वेधसा ।
लक्षार्धोन्नतयः क्लृप्ताः
　तेषां पूर्वेण मन्दरः ॥ ७१½ ॥

श्वेतो हारिद्रचूर्णाभो
　याम्यतो गन्धमादनः ।
प्रतीच्यां विपुलो नीलः
　सुपार्श्वस्सौम्यतोऽरुणः ॥ ७२½ ॥

सहस्रयोजनोच्छ्राया-
　स्तेषु कल्पद्रुमास्स्थिताः ।
कदम्बजम्ब्वाश्वत्थ-
　न्यग्रोधाश्चोत्तरान्तिकाः ॥ ७३½ ॥

वृत्तिः ।

मेरोर्दार्ढ्यार्थं श्वेतपीतनीलारुणवर्णाः प्राच्यादिदिक्षु मन्दरगन्धमादनविपुलसुपार्श्वाख्या विष्कम्भाः पञ्चाशत्स-

हस्रोच्छ्रायास्सृष्टाः । येषु योजनसहस्रोन्नतयः कदम्बजम्ब्वादयश्च कल्पपादपास्स्थिताः ॥ ७१½–७२½–७३½ ॥

जम्बूफलरसोद्भूता
मेरुं पर्येत्य निम्नगा ।
विवेश मूलमेवास्य
कनकीकृत्य तां महीम् ॥ ७४½ ॥

तां पीत्वा पक्षिसर्पाखु
मृगशाखामृगादयः ।
बभूवुः काञ्चना ये च
सत्वास्तस्यां कृतप्लुवाः ॥ ७५½ ॥

वृत्तिः ।

**पर्येत्य** प्रदक्षिणीकृत्य । **अस्येति** मेरोः । **शाखामृगा** वानरा आदिग्रहणेन गजाश्वादयः ॥ ७४½–७५½ ॥

द्वीपकेतुरभूज्जम्बूः
कल्पशाखिषु सत्स्वपि ।
प्रभावातिशयात्ख्यातं
जम्बूद्वीपमिदं ततः ॥ ७६½ ॥

वृत्तिः ।

द्वीपानां केतुः ध्वजः द्वीपकेतुः ॥ ७६½ ॥

वृत्तिः ।

अथ विष्कम्भशैलानां सरांसि उपवनानि चोच्यन्ते ॥ तत्र—

प्राच्यां विष्कम्भशैलस्य
मूले चैत्ररथं वनम् ।
सरोऽरुणोदकं नाम
तत्र हेमाब्जमण्डितम् ॥ ७७½ ॥

स्पष्टम् ।

याम्याद्रिमूले गन्धर्व-
सुरसिद्धाप्सरोवृतम् ।
नन्दनं मानसं तत्र
सरो मानसतस्करम् ॥ ७८½ ॥

वृत्तिः ।

दक्षिणे विष्कम्भशैलमूले नन्दनाख्यमुपवनं सरश्चात्र मनोहारि मानसं नाम ॥ ७८½ ॥

वैभ्राजं वैपुले मूले
सितोदश्च ह्रदोत्तमः ।
देवैर्निषेव्यते च्छन्नः
कमलैरंशुमत्प्रभैः ॥ ७९½ ॥

वृत्तिः ।

विपुलाख्यस्याद्रेर्मूले वैभ्राजाख्यं वनम् । सितोदकं सरः । यदर्ककान्तिभिरब्जैर्मण्डितं सुरैरासेव्यते ॥

सौपार्श्वे धृतिमन्नाम
काननं भद्रको ह्रदः ।
सौगन्धिकाम्बुजच्छन्नः
सेव्यते पितृभिस्सदा ॥ ८०½ ॥

वृत्तिः ।

सुपार्श्वस्य मूले धृतिमन्नाम काननम् । भद्रकाख्यं सरः ॥ ८०½ ॥

वृत्तिः ।

साम्प्रतमिलावृतादिद्वीपनिवासिनो जनस्याऽऽहारायुः कान्त्यादिवर्णनम्——

त्रयोदशसहस्रायु-
र्जम्बूफलरसाशनः ।
मेर्वालोकोपलब्धार्थो
जनस्सुत्विगिलावृते ॥ ८१½ ॥

मेर्वालोकेन तदीयेन प्रकाशेनाधिगतपदार्थः **सुत्विगिति** । कान्तच्छविः ॥ ८१½ ॥

वर्षायुतायुर्नीलाब्ज-
द्युतिः पनससारभुक् ।
केतुमाले जनो दिव्य-
देहबन्धस्सुखी बली ॥ ८२½ ॥

वर्षाणामयुतं दशसहस्राण्यायुर्यस्य सः । तथा पनसाख्यानि फलानि तेषां सारो निष्यन्दस्तं भुङ्क्त इति पनससारभुक् ॥ ८२½ ॥

चन्द्रबिंबद्युतिर्नीला-
ब्जाशनो भद्रवाजिनि ।
दशवर्षसहस्रायु-
र्दुःखशोकभयोज्झितः ॥ ८३½ ॥

भद्रवाजिनीति भद्राश्वे वर्षे ।

**त्रिंशदब्दसहस्रायुः**
**कामवृक्षफलाशनः ।**
**युग्मप्रसूतिः कुरुषु**
**श्यामापुष्पद्युतिर्जनः ॥ ८४१/३ ॥**

वृत्तिः ।

कामादिच्छातो वृक्षफलानि अशनं यस्य । यथेष्टानि वृक्षफलानि निर्माय भुङ्क्ते इत्यर्थः । कुरुष्विति कुरुवर्षे । **युग्मप्रसूतिः** युगपत् कन्याकुमारौ स्तः । श्यामा प्रियङ्गुः तत्पुष्पद्युतिः गौरप्रायकान्तिः ॥ ८४१/३ ॥

वृत्तिः ।

अथात्रैव वर्षे सन्निकर्षस्थौ चन्द्रद्वीपभद्राकरद्वीपावुच्येते ॥

**भूतवेदसहस्रौ द्वा-**
**वेकदिक्सन्धिलक्षितौ ।**
**सोमवाय्वाशयौ सिद्ध-**
**मुनिचारणसेवितौ ॥ ८५२/३ ॥**

चन्द्रभद्राकरौ द्वीपौ
चन्द्ररक्ताब्जरुग्जनौ ।
ऐलावृतं तयोरायुः
फलमूलं च भोजनम् ॥ ८६½ ॥

अन्तर्भावः कुरुष्वब्धौ
सान्निध्यात्कीर्तितौ ततः ।

कुरुवर्षोपान्तवर्तिनि क्षाराब्धौ पञ्चचत्वारिंशद्योजनसहस्राणि आवृत्य स्थितौ एकेन दिक्सन्धिना लक्षितौ दृश्यमानौ उत्तरवायव्यदिग्गतौ सिद्धादिजुष्टौ चन्द्रभद्राकरौ द्वीपौ ज्ञेयौ। तत्र चन्द्रद्वीपे चन्द्रद्युतिर्जनः। भद्राकरद्वीपे च रक्ताब्जरुचिः तद्वासिनां चेळावृतोक्तमायुः अशनं च फलमूलानि। अब्धौ यद्भूतवेदसहस्रसंख्यं स्थानं तस्मिंस्थिताविति व्याधिकरणे सप्तमी। सान्निध्यात् सामीप्यात् ॥ ८७½ ॥

दीपिका।

कुरुवर्षानन्तरं प्रसङ्गादुपद्वीपद्वयमुच्यत इत्याह अथात्रैवेत्यादि ॥

अध्यर्धानि सहस्राणि
द्वादशायुर्हिरण्मति ।

जनस्येन्दुत्विषो नित्य-
मश्नतो लैकुचं फलम् ॥ ८८ ॥

हिरण्यवत्संज्ञे वर्षे लिकुचफलाशिनश्चन्द्रकान्तेर्जनस्य सार्धद्वादशसहस्राण्यायुः ॥ ८८ ॥

नीलनीरजरम्यस्य
रम्यके द्वादश स्थितिः ।
जनस्याब्दसहस्राणि
न्यग्रोधफलमश्नतः ॥ ८९ ॥

रम्यकाख्ये वर्षे नीलाब्जद्युतेर्जनस्य वटफलाशिनो द्वादशसहस्राणि स्थितिः ॥ ८९ ॥

राजतद्युतिरिक्ष्वाद-
स्तावदायुर्हरौ जनः ।
रौक्मः किंपुरुषे प्लक्ष-
भोजनोऽब्दायुतस्थितिः ॥ ९० ॥

हरिवर्षे रजतप्रभः प्रागुक्तायुरिक्षुमेवान्नत्वेन समन्तादत्तीति इक्ष्वादः तदेकभोजनो जनः । किंपुरुषवर्षे तु हेमाभः प्लक्षफलाश्यब्दायुतजीवी च ॥ ९० ॥

इति किंपुरुषादीनि
वर्षाण्युक्तानि यानि ते ।
न तेष्ववस्थाभेदोस्ति
विवर्तिषु कृतादिषु ॥ ९१ ॥

युगानुरूपप्रज्ञायु-
स्तेजोबलधनप्रजः ।
कृष्टाकृष्टाशनो दुःख-
त्रयार्तो भारते जनः ॥ ९२ ॥

गुण एको यदुद्युक्तो
नेष्टं किं किं न साधयेत् ।
सर्वासां फलभूमीनां
कर्मभूः कारणं यतः ॥ ९३ ॥

इत्थमुक्तेषु किंपुरुषादिवर्षेषु युगपरिवर्तनेऽपि नावस्थाभेदोऽस्ति । अस्मिंस्तु भारते वर्षे जनः कृतादियुगानुसारीणि बुद्धिजीवितकान्तिवीर्यार्थापत्यानि यस्य स तथाविधः । एतानि बुद्ध्यादीनि कृतादिषु युगेषु जनस्य यथायथं ह्रासवन्तीत्यर्थः । आध्यात्मिकाऽऽधिदैविकाऽऽधिभौतिकदुःखत्रयार्तः कृष्टजाताकृष्टजातभोजीचात्र जनः ।

एकस्त्वयं गुणः यत्कृतोद्यमः किंपुनर्न साधयेत् । सर्व-मेव साधयितुमलमिति यावत् । कुत इत्याह सर्वासामिति । यस्मात् फलभूमीनामियं कर्मभूमिः कारणम् । यदुक्तं "कर्मभूमिरियं ब्रह्मन् फलभूमिरितः परा । इह यत्क्रियते कर्म तत्परत्रोपभुज्यते ।" सर्वासामित्यतिशयोक्तिरन्यत्रा-सम्भवात् ॥ ९३ ॥

दीपिका ।

सर्वासां फलभूमीनां इत्याशङ्काकरणपूर्वं व्याचष्टे । कुत इत्याहे-त्यादि । तासु फलबाहुल्यादस्यां च कर्मबाहुल्यादेवमुक्तं यतोऽत्रापि कर्म-फलमेव भुज्यते । तासु च नहुषययातिरिवेन्द्रादीनां सुकृतदुष्कृते श्रूयेते । ततः कर्मभूमिरियमित्याद्यपि ज्ञापकं युक्तमेव ॥ ९३ ॥

**नवाब्धिस्रोतासि द्वीपा-**
**नवचात्रार्धकस्थले ।**
**इन्द्रद्वीपप्रभृतयो**
**नामतस्तान्निबोध मे ॥ ९४ ॥**

अत्र भारते वर्षे नवभिरब्धिस्रोतोभिर्युक्तेऽर्धं कं येषां तानि अर्धकानि जलावृनार्धानि स्थलानि यत्र तस्मिं-स्तादृशि । यथोक्तं श्रीमत्किरणे "जलं पञ्च स्थलं पञ्चे"ति

१. तुं ईशयतीति यावदिति पाठभेदः ।

एवं विधे भारते वर्षे इन्द्रद्वीपादिद्वीपनवकं नामतोऽभिधी-यमानमवधारय ॥ ९४ ॥

वृत्तिः ।

अथ तदाह ।

इन्द्रद्वीपः कशेरुश्च
ताम्रवर्णो गभस्तिमान् ।
नागद्वीपश्चान्द्रमसो
गान्धर्वो वारुणस्तथा ॥

कुमारिकाख्यो नवमो
नानापर्वतनिम्नगाः ।
नानाजातिजनाकीर्णा
भारताख्ये प्रकीर्तिताः ॥ ९६ ॥

एते नव द्वीपा विविधजातिजनपदसङ्कुलाः भारत-नाम्नि वर्षे कथिताः। द्वीपशब्दो [1]वाधिपाठात् पुंस्यपि ज्ञेयः ॥ ९६ ॥

दीपिका ।

इन्द्रद्वीपादीनां तदन्तरालाब्धिस्रोतसां च नवानां प्रमाणमुक्तं श्रीमत्स्वतन्त्रे । "एकैकस्य तु द्वीपस्य सहस्रं परिकीर्तितम् । शतानि पञ्च विज्ञेयं

---

१. वैकल्पिकतया नपुंसकपाठादित्यर्थः ।

स्थलं पञ्च जलं तथा ।" इति । एवं च नवसहस्रस्य भारतस्य संख्याविभागसिद्धिः । इन्द्रद्वीपादीनां च दक्षिणसमुद्रात्प्रभृतिस्थितेरे (षकुमारिकाख्यद्वीप) इति ॥ ९६ ॥

आग्नीध्रो नाम नृपतिः
जंबूनाथो मनोः कुले ।
तज्जातनृपसंज्ञाभिः
कथ्यन्ते भारतादयः ॥ ९७ ॥

मनुवंश्यस्याऽऽग्नीध्रनाम्नो जम्बूद्वीपाधिपतेर्भरतादयो नव पुत्रा आसन् । तत्प्रसाधितानि जन्बूद्वीपखण्डानि नव भारतादिसंज्ञाभिः प्रसिद्धानि ॥ ९७ ॥

अथाब्धिसप्तकान्तरितद्वीपसप्तकमुच्यते ।

क्षारक्षीरदधिस्नेह-
रसमद्यामृतोदकैः ।
लक्षादिद्विगुणा द्वीपा
जंबूद्वीपादयो वृताः ॥ ९८ ॥

जम्बूद्वीपादिद्वीपसप्तकं क्षारक्षीराद्यब्धिसप्तकेन लक्षादिद्विगुणप्रमाणेनान्तरितं ज्ञेयम् । जम्बूद्वीपाख्यायाः कारणं "द्वीपकेतुरभूज्जम्बू"रित्यादिना पूर्वमुक्तम् ॥

१ अस्मिन् प्रकरणे षट्सप्ततितमश्लोकः ।

इदानीं शाकादिद्वीपानां स्वसंज्ञयाऽन्वर्थतां वक्ति।

शाके शाकद्रुमस्तुङ्गः
 शाकसंज्ञानिबन्धनः।
कुशोऽभूत्काञ्चनः कौशे
 स्वयंभुवि यियक्षति ॥९९॥

शाकद्वीपे शाकाख्यो वृक्ष उन्नतः शाकाख्याया हेतुः। ब्रह्माणि यष्टुमिच्छति हैमकुशोत्पत्तिः कौशद्वीपे कुशसंज्ञाकारणम् ॥९९॥

क्रौञ्चे क्रौञ्चो हतो दैत्यः
 क्रौञ्चाद्रौ हेमकन्दरे।
स्कन्देन युद्ध्वा सुचिरं
 चित्रमायी सुमायिना ॥१००॥

स शैलस्तस्य दैत्यस्य
 ख्यातश्छिद्रेण कर्मणा।
केतुतामगमत्तस्य
 नाम्ना क्रौञ्चं तदुच्यते ॥१०१॥

क्रौञ्चे द्वीपे काञ्चनकन्दरे क्रौञ्चाद्रौ युध्यमानः क्रौञ्चाख्यो दैत्यः कार्तिकेयेन हत इति क्रौञ्चाद्युपलक्षितत्वात्क्रौञ्चद्वीपसंज्ञा ॥ १०१ ॥

शाल्मले शाल्मलिर्वृक्षो
हैमस्साहस्रिकोऽर्कभाः ।
प्रियोऽमराणां तत्केतु-
स्स तदाख्यानिबन्धनम् ॥१०२॥

सहस्रयोजनोन्नतस्सूर्यद्युतिश्शाल्मलिर्वृक्षः शाल्मलिद्वीपे । तस्या आख्याया निबन्धनं स्थानम् ॥ १०२ ॥

गोमेदे गोपतिर्नाम
राजाभूद्गोसवोद्यतः ।
याज्योऽभूद्वह्निकल्पाना
मौतथ्यानां मनोः कुले ॥ १०३ ॥

स तेषु हरियज्ञाय
प्रवृत्तेषु भृगून् गुरून् ।
वव्रे तं गौतमः कोपात्
अशापत्सोगमत्क्षयम् ॥ १०४ ॥

यज्ञवाटेऽस्य ता गावो
दग्धाः कोपाग्निना मुनेः ।
तन्मेदसा मही च्छन्ना
गोमेदस्स ततोऽभवत् ॥ १०५ ॥

गोसवाख्ययज्ञकृद्गोपातिसंज्ञा राज्ञो-मनुवंश्यः उतथ्यवंश्यानामग्निवत्तेजस्विनामौतथ्यानां याज्योऽभूत्। तेषु चौतथ्येषु इन्द्रयज्ञार्थं गतेषु स भृगून् गुरुत्वे वृणीत। क्रोधाद्गौतमोऽशपत्। स क्षयं ययौ तस्य यज्ञवाटगता गावो गौतमक्रोधाग्निना दग्धाः। तन्मेदश्च्छन्नभूतलत्वात् गोमेदसंज्ञो द्वीपः ॥ १०५ ॥

नदी पुष्करिणी नाम
हेमपुष्करमण्डिता ।
तया स पुष्करद्वीपः
ख्यापितस्सुरसेवितः ॥ १०६ ॥

वृत्तिः ।

हेमाब्जया पुष्करिण्याख्यया नद्योपलक्षितो देवजुष्टः पुष्करद्वीपः ॥ १०६ ॥

यथा किंपुरुषाद्येषु
कृतावस्थस्सदा जनः ।

शाकद्वीपादिषु तथा
क्षीरादिकृतभोजनः ॥ १०७॥

हिमेन्दुहिमनीलाब्ज
सस्यकस्फाटिकद्युतिः ।
दशवर्षसहस्रायु-
र्नष्टदुःखैककण्टकः ॥ १०८॥

किंपुरुषादिषु वर्षेषु यद्वत्त्रेतादियुगेष्वपि कृतयुगावस्थो जनः तथा शाकादिद्वीपेषु क्षीराद्याहारो यथाक्रमं तुहिनचन्द्रादिकान्तिर्दशवर्षसहस्रजीवी दुःखाख्यमहाशोकनिर्मुक्तो ज्ञेयः ॥ १०७—१०८ ॥

सप्तमादुदधेरर्वाक्
द्वे कोटी सत्रिकं दळम् ।
पञ्चाशच्च सहस्राणि
कर्णाद्धेमाद्रिगर्भतः ॥ १०९॥

सप्तमादुदधेरर्वागिति । मेर्वाभिमुख्येन तस्यैव मेरोर्गर्भतस्तन्मध्यभागादारभ्य । कर्णादिति । विष्कम्भशैलानामन्तराळभागादिळावृतवर्षजनितकोणक्रमात् । को-

टिद्वयं त्रिकेन सहितं दळं कोट्यर्धं त्रिपञ्चाशल्लक्षाणि ।
सहस्रं पञ्चाशच्च प्रमाणम् ॥ १०९ ॥

दीपिका ।

अर्धकस्थलमित्यस्य व्याख्यातमर्थमुपसंहरति । त्रिपञ्चाशल्लक्षाणीति । एतच्च द्विकोट्यादिप्रमाणजम्बूद्वीपावृतस्य क्षाराब्धेरस्यार्धलक्षप्रमाणत्वात् ततः परं षण्णां द्वीपानामुत्तरोत्तरं लक्षादिद्विगुणत्वात् क्षीराद्यब्धिषट्कस्य तावत् प्रमाणमर्थात्सिद्धम् ॥ १०९ ॥

ततो हिरण्मयी भूमि-
नानारत्नद्रुमाचला ।
क्रीडार्थं वेधसा सृष्टा
देवानां दशकोटिकी ॥ ११० ॥

विविधानि रत्नानि द्रुमा अद्रयश्च यस्यास्सा । सुराणां विहरणाय हेममयी योजनकोटिदशकप्रमाणा भूः धात्रा निर्मिता ॥ ११० ॥

लोकालोको बहिस्तस्या
लोकालोकनियामकः ।
योजनायुतविष्कम्भ-
स्तुङ्गश्शृङ्गपरिच्छदः ॥ १११ ॥

अन्तस्स्थितं लोकं बहिस्स्थितं चालोकं नियमयतीति लोकालोकनियामकः । तद्बाह्ये लोकाभाव इत्यर्थः । **योजनायुतविष्कम्भ इति ।** दशसहस्रविस्तारोऽत्युच्छ्रितशृङ्गपरीवारः ॥ १११ ॥

**यस्य शृंगेषु तीक्ष्णांशो-**
**र्भासश्चन्द्रातपोपमाः ।**
**न तापयन्ति वैकुण्ठ्या-**
**द्यामान्याशाभृतां मुने ॥ ११२ ॥**

लोकालोकस्याद्रेरत्युन्नतत्वात् शिखरस्थितानि लोकपालविहरणगृहाणि अर्कभाभिर्विप्रकृष्टत्वात् ज्योत्स्नावदालोकमात्रहेतुभिर्न तप्यन्ते ॥ ११२ ॥

**तमः परस्तान्निबिडं**
**लक्षाण्येकोनविंशतिः ।**
**चत्वारिंशत्सहस्राणि**
**पञ्चत्रिंशच्च कोटयः ॥ ११३ ॥**

**सप्तविंशतिलक्षाणि**
**कोटिश्चैका समुद्रराट् ।**

**हैमं कटाहकं कोटि-**
**गर्भोदिति समन्ततः ॥ ११४ ॥**

लोकालोकस्य बहिर्घनमन्धकारं पञ्चत्रिंशत्कोट्या एकोनविंशतिलक्षाणि सहस्रचत्वारिंशता सह । तद्बाह्ये तु गर्भोदाख्योऽब्धिराजो योजनकोट्या सप्तविंशत्यालक्षैर्विस्तीर्णः तस्याऽपि बहिः कोटिप्रमाणं काञ्चनं कटाहमिति कोटिशतप्रविभागः ॥ ११४ ॥

दीपिका ।

**कोटिशतप्रविभाग इति** अण्डभित्त्या सह हेमभूमिपर्यन्तास्सप्तचत्वारिंशत्कोटय षट्चत्वारिंशल्लक्षाणि सहस्रं पञ्चाशच्च प्रमाणम् । तदन्तस्सप्तमाब्धेर्मेरुमध्यान्तं कोटिद्वयं त्रिपञ्चाशल्लक्षाणि सहस्रपञ्चाशच्चेत्येवमेकस्मिन् पार्श्वे पञ्चाशत्कोटयो योजनानां परस्मिन्नपि तथेति शतकोटिविस्तीर्णं ब्रह्माण्डमिति ॥ ११४ ॥

वृत्तिः ।

एवं भूलोकस्य विस्तारप्रमाणमुक्त्वा भुवर्लोकादिलोकषट्कस्योच्छ्रायमानमाह ।

**तिथिलक्षो भुवर्लोको**
**ध्रुवप्रान्तो महीतलात् ।**
**तदूनकोटिस्स्वर्लोकः**
**स्वर्गिवर्यसमाश्रयः ॥ ११५ ॥**

महो द्विकोटिर्यत्रास्ते
मरीच्यादिमुनिव्रजः ।
जनोऽष्टकोट्यवच्छिन्नः
पितृजह्नुजनाश्रयः ॥ ११६ ॥

तपोऽर्ककोटिर्यत्राऽऽस्ते
महायोगी सनन्दनः ।
ऋभुस्सनत्कुमारश्च
सनकश्च महातपाः ॥ ११७ ॥

ततस्सत्याधियस्स्थानं
सत्यलोकस्स्वयम्भुवः ।
कामातिशयसम्पन्नः
कोट्यो नव सप्त च ॥ ११८ ॥

सावित्री मूर्तिमत्यास्ते
यत्र वेदाश्च सानुगाः ॥ ११९ ॥

वृत्तिः ।

महीतलाद्भूपृष्ठादारभ्य ध्रुवप्रान्त इति । ज्योतिश्चक्रालम्बनभूतध्रुवपर्यन्तः पञ्चदशलक्षोच्छ्रायो भुवर्लोकः ।

१. समाश्रय इति पाठभेदः ।

पञ्चाशीतिलक्षोच्छ्रायस्तु स्वर्गिवर्गाणां स्वर्वासिमुख्याना-मास्पदं स्वर्लोकः। महोलोको मरीच्यादिमुनिबृन्दस्थानं द्विकोटिः। जनोलोकस्त्वष्टकोटिपरिच्छिन्नः पितॄणां जह्नु-प्रभृतीनां मुनिजनानां निवासः। तपोलोको द्वादशकोट्यु-च्छ्रायः। सनन्दनऋभुसनत्कुमारसनकाद्याश्रयः। ततो-ऽनन्तरं सत्यैकबुद्धित्वात् प्राप्तकल्पाधिपत्यस्य ब्रह्मणस्स्थानं सकलैश्वर्यसम्पत्तिमान् षोडशकोट्युच्छ्रितस्सत्यलोकः। यस्मिन् मूर्तिमती सावित्री वेदोपवेदाश्चाऽऽसते ॥ ११९॥

दीपिका।

तिथिलक्ष इत्यादिना पूर्वोक्तशेषभूतं भूपृष्ठात् प्रभृत्युच्छ्रायमाह। एवमित्यादि ॥ ११९॥

ततश्चतस्रष्षट्चेति
मधुत्रिपुरविद्विषोः।
स्थाने ज्योतिष्मती चित्रे
कोटिरण्डकटाहकः ॥ १२०॥

शतकोटिप्रविस्तीर्ण
इति ब्रह्माण्डगोळकः।
भूयसा तुल्य एवायं
सर्वस्स्रोतस्सु मानतः ॥ १२१॥

तदुपरि चतस्रः कोटयो मधुविद्विषो विष्णोः कान्तिमत् स्थानम् । त्रिपुरविद्विषश्च शम्भोस्तादृग्विधषष्ट्कोट्युच्छ्रायः । अण्डकटाहकश्चैककोटिः । इत्थं मूर्लोकादधो यथापञ्चाशद्योजनकोटयः । तथा तदूर्ध्वं पञ्चाशदेवेति ब्रह्माण्डपिण्डश्शतकोटिविस्तारोच्छ्रायः । अयं च सर्वेपूर्ध्वपूर्वदक्षिणपश्चिमोत्तरेषु स्रोतस्सु प्रायेण तुल्यमानाकृतिः ॥ १२१ ॥

तस्य प्राचीं दिशं शक्रः
पात्यग्निः पूर्वदक्षिणाम् ।
दक्षिणां भूतसंहर्ता
राक्षसो दक्षिणापराम् ॥ १२२ ॥

पश्चिमां वरुणो देवो
नभस्वान् पश्चिमोत्तराम् ।
उदीचीं सोमयक्षेशा-
वीशः प्रागुत्तरां दिशम् ॥ १२३ ॥

ऊर्ध्वं ब्रह्मा हरिरधः
सर्वार्थावहितास्सदा ॥ १२३½ ॥

तस्य ब्रह्माण्डस्य प्राच्यादिदिक्पालकाः इन्द्रादयः। उदीच्यां सोमवैश्रवणौ। ऊर्ध्वे ब्रह्मा पालकस्स्थितः। अधस्तु विष्णुः। एते च नित्यं सर्वात्मना सावधानास्स्थिताः ॥ १२३½ ॥

एषामपि नियन्तारो
रुद्रा दश दश स्थिताः।
भूतिमन्तोप्यमी येषां
नोत्क्रामन्ति भयात्पदम् ॥१२४½॥

नानारूपैर्महावीर्यै
स्तरुणार्कसमप्रभैः।
वृता नानायुधधरैः
नामभिस्तान्निबोध मे ॥ १२५½ ॥

एषां लोकपालानां रुद्रा अधिष्ठातारः प्रतिदिशं दशदश स्थिताः। यद्भीत्या महैश्वर्ययुक्ता अप्येते स्वं स्वं स्थानं पालकत्वेन नोज्झन्ति। एते चानेकाकारैर्विविधायुधधरैरतिबलैर्बालार्ककान्तिभिरनुचरैर्वृताः ॥ १२५½ ॥

दीपिका।

एषामपीत्यादिसूत्रं व्याचष्टे। एषां लोकपालानामित्यादि।

अत एव तदधिष्ठातृत्वाद्वक्ष्यमाणमण्टपपूजादौ इन्द्रादिद्वारेण शतरुद्रा एव-
पूज्या इति भावः । नहि पारमेश्वरे शास्त्रे पशवः पाशाश्चेज्यन्ते ॥१२५½॥

वृत्तिः ।

अथैषां नामान्याह—

बुध्नवज्रशरीराज
कपालीशप्रमर्दनाः ।
विभूतिरव्ययश्शास्ता
पिनाकी त्रिदशाधिपः ॥ १२६½ ॥

एते शक्रस्य नियन्तारः ॥ १२६ ॥

अथाग्नेः ।

भस्मक्षयान्तकहर-
ज्वलनाग्निहुताशनाः ।
पिङ्गळः खादको बभ्रु-
र्दहनश्चाग्निदिग्गताः ॥ १२७½ ॥

विधातृधातृकर्तारो
याम्यमृत्युवियोजकाः ।
धर्माधर्मेशसंयोक्तृ
हराश्च यमनायकाः ॥ १२८½ ॥

निऋऋत्यधिपतीनाह ।

निऋऋतिर्मारणो हन्ता
क्रूराक्षो धूम्रलोहितौ ।
ऊर्ध्वलिङ्गविरूपाक्ष
दंष्ट्रिभीमाः पलादपाः ॥ १२९½ ॥

पलं मांसमत्तीति पलादः पिशिताशनो राक्षसः निऋऋतिः तं पान्तीति पलादपाः ॥ १२९½ ॥

अथ वरुणेशानाह ।

बलातिबलपाशांक
श्वेतभद्रजलान्तकाः ।
महाबलमहाबाहु
सुनादाब्दरवाः कपाः ॥ १३०½ ॥

अब्दरवो मेघनादः । कं जलं पान्ति रक्षन्तीति कपाः ।

अथ वाय्वधिपा उच्यन्ते--

लघुशीघ्रमरुद्वेग
सूक्ष्मतीक्ष्णक्षयान्तकाः ।

कपर्द्यग्न्देशपञ्चान्त
पञ्चचूडाश्च वायुपाः ॥ १३१½ ॥

निधीशरूपवद्धन्य
सौम्यलक्ष्मीजटाधराः ।
प्रकामश्रीरत्नधर-
प्रसादाश्चेन्दुयक्षपाः ॥ १३२½ ॥

इन्दुयक्षपा इति इन्दुयक्षयोरुत्तरदिक्पालत्वेन पूर्वमुक्तयोरेते पतयः ।

विद्येशसर्ववित्ज्ञानि[1]
वेदविज्ज्येष्ठवेदगाः ।
विद्याविधातृभूतेश
बलिप्रियसुखाधिपाः ॥ १३३½ ॥

वृत्तिः ।

ईशानदिक्स्थाने इमे विद्येशादयो नियन्तारः ॥
अथोपरिष्टादुच्यन्ते ।

---

१ शर्वविद्येशसर्वज्ञज्ञानिज्येष्ठेशवेदगा । बलिप्रियसुरेशानभूतेशा ईशाना-यकाः ॥ इति पाठभेदः ।

शम्भुर्विभुर्गुणाध्यक्ष-
स्त्र्यक्ष[1]श्च त्रिदशेश्वरः ।
विचक्षणनभोलिप्सु-
संविवाहाश्च मूर्धनि ॥ १३४½ ॥

शंभ्वादयो दशरुद्राः मूर्धनीति ब्रह्मणोऽधिष्ठातृत्वे स्थिताः । वाहशब्दस्सम्पूर्वो विपूर्वश्च रुद्रयोस्संवाहविवाहयोर्वाचकः ॥ १३४½ ॥

ब्रह्माण्डादधोवर्तिनो रुद्रान् कथयितुमाह ।

क्रोधनो[2]ऽनिलभुग्भोगी
ग्रसनोदुम्बरेश्वरः ।
विषो विषधरोऽनन्तो
वज्री दंष्ट्री च विष्णुपाः ॥ १३५½ ॥

ततोम्भःप्रमुखा भोग-
भूमयस्तासु संस्थिताः ।
पञ्चाष्टकानि योक्तॄणां
क्षेत्रावाप्तफलाश्रयः ॥ १३६½ ॥

---

१. त्र्यक्षश्चण्डामरस्तुता इति पाठः । २. बुध्नवज्रेति श्लोकादारभ्य क्रोधनोऽनिलेतिश्लोकपर्यन्तेषु पद्येषु बहवः पाठभेदास्सन्ति अर्थवैपरीत्याभावान्नात्र घटिता. ।

अनन्तरं ब्रह्माण्डस्योपरिष्टात् यथायथं जलाद्या-भोगभूमयस्तासु चाष्टकाः अष्टपरिमाणाः पञ्च गणा रुद्राणां स्थिताः। कीदृशा इत्याह **नियोक्तॄणां क्षेत्रावाप्तफल-श्रियः**। क्षेत्रात्तदध्यासितात् स्थानादवाप्ता या फलश्री-स्तस्या नियोक्तॄणां सम्पादकानाम्। तत्तदध्यासितक्षेत्र-फलसम्पत्तिस्तत्प्रसादादेव फलतीत्यर्थः ॥ १३६१ ॥

दीपिका ।

ततोऽम्भःप्रमुखा इत्यादि व्याचष्टे **अनन्तरमित्यादि**। अमीषां चा-प्त्वादीनां प्रमाणमिह नोक्तम्। श्रीमन्मतङ्गादितो ज्ञातव्यम्। यदुक्तं तत्र "तस्माद्दशगुणं तोयं तोयादग्निस्ततोऽनिलः। अनिलाच्चाप्यथाकाशं शा-स्त्रेऽस्मिन् पारमेश्वरे। आकाशाच्चाप्यहङ्कारः तस्माच्च परतो महान्। महतः परतो ज्ञेयं गुणानां त्रितयं मुने। गुणत्रयात्प्रधानाख्यं तत्वं दश-गुणोत्तरम्। शतोत्तरगुणानि स्युरशेषाण्युक्तानि शासने। मायान्तानि तु तत्वानि तेभ्यो ह्यूर्ध्वं सहस्रधा। यावत्सादाशिवं तत्वं तत्परं लक्षधास्थितम्। चतुष्कं शान्तिपर्यन्तं ततोऽमेयः परश्शिव" इति। **तत्तदध्यासितक्षेत्र-फलसम्पत्तिरिति**। तत्तद्भुवनेश्वराराधनतस्तत्तद्भुवनप्राप्तिरित्यर्थः ॥

वृत्तिः ।

अतस्तेषां नामान्याह—

**भारभूत्याषाढडिण्डि-**
**लाकुल्यमरपुष्कराः ।**

१. प्रमाणपटले चत्वारिंशश्श्लोकः ।

प्रभासनैमिशौ चेति
गुह्याष्टकमिदं जले ॥ १३७½ ॥

एतदम्भस्तत्वतस्स्थितं गुह्याष्टकम् ॥ १३७½॥

दीपिका ।

एतानि च भारभूत्यादिपञ्चाष्टकस्थानानि भारतवर्षेऽपि तत्तद्भुवन-प्राप्तिनिमित्तं तत्तन्नाम्ना स्थितानि ज्ञेयानि । यदुक्तं मतङ्गे—तत्प्राप्त्या भारते पुण्ये मानुषाणां हिताशया । निमित्तानि पुरा धात्रा येषु सन्निहितो हर इति ॥ १३७½ ॥

श्रीशैलजल्पकेदार-
भैरवाम्रातकेश्वराः ।
हरिश्चन्द्रमहाकाळ-
मध्यास्सातिपदारुचौ ॥ १३८½ ॥

सातिपदा इति । सह अतिपदेनैते वर्तन्ते अति गुह्याष्टकमेतादिति यावत् । रुचाविति । तेजस्तत्वे व्यवस्थिता इत्यर्थः ॥ १३८½ ॥

महेन्द्रभीमविमल-
कुरुक्षेत्रगयाखलाः ।
सनापदोत्तरास्साट्ट-
हासास्सनखलाः खगे ॥ १३९½ ॥

सनापदोत्तरा इति । सह नापदेन वर्तत इति सनापदः उत्तरोऽन्त्यः खलशब्देनोक्तो रुद्रो येषान्ते महेन्द्राद्यास्सनाखला इत्यर्थः । खगे नभस्वति वायुतत्वे । गुह्याद्गुह्याष्टकमेतत्[1] ॥ १३९½ ॥

दीपिका ।

वायुतत्वस्थञ्चाष्टकं गुह्याद्गुह्यतराष्टकम् ॥ १३९½ ॥

**स्थाणुस्वर्णाक्षगोकर्ण-**
**भद्रकर्णमहालयाः ।**
**वस्त्रापदाविमुक्ताह्व-**
**रुद्रकोट्यः खमण्डले ॥ १४०½ ॥**

**पवित्राष्टकमित्याहुः ॥**

खमण्डल इति । आकाशतत्वे एतत्पवित्राष्टकमिति वदन्ति ॥ १४०½ ॥

**गर्वमात्रेन्द्रियोदरे ।**
**स्थाण्वष्टकं द्विजश्रेष्ठ**
**नामतः कथयामि ते ॥ १४१½ ॥**

---

१ गुह्यतरमित्यर्थः ।

**गर्वमात्रेन्द्रियोदर** इति। अहङ्कारतन्मात्रेन्द्रियतत्त्वान्तर इत्यर्थः। वक्ष्यमाणमाकोटादिस्थाण्वष्टकं स्थितम् १४१½॥

दीपिका।

अथ गर्व इत्यादि व्याचष्टे। अथ गर्व इत्यादि। ननु "तन्मात्रेष्वथ ये रुद्रा योगैश्वर्यगुणान्विताः" 'इत्यादिना श्रीमन्मतङ्गे तन्मात्रेष्वपि विश्वेदेवानां भुवनानि पठ्यन्ते। तत्कथमहङ्कारादितन्मात्रान्ततत्त्वमध्येऽष्टकमेव स्थितमित्युक्तम्। अत एव तान्यपि भुवनदीक्षायामत्रैतदष्टकान्तर्गतान्येव शोध्यानीति ज्ञापयितुमित्यविरोधः॥ १४१½॥

वृत्तिः।

तेषां नामान्याह।

**माकोटमण्डलेशान-**
**हिरण्डच्छगलण्डकाः।**
**स्थलस्थूलेश्वरौ शंकु-**
**कर्णकालांजनावपि॥ १४२½॥**

वृत्तिः।

अथ बुद्धितत्त्वस्थं भुवनाष्टकमाह।

**सूक्ष्मामरपुराण्यष्टौ**
**बुद्धौ पैशाचमादितः।**

**राक्षसं याक्षगान्धर्वं**
**माहेन्द्रं च महर्धिमत् ॥ १४३½ ॥**
**सौम्यं प्राजेश्वरं ब्राह्मं**
**दीप्तं परमया श्रिया ॥ १४४ ॥**

बुद्धितत्त्वे सूक्ष्मभुवनाष्टकम् । तेषु **पैशाचमादित इति** । आदौ पैशाचं ततो राक्षसादिब्राह्मान्तम् । **दीप्तं परमया श्रियेति** । महर्धिमतो माहेन्द्रादप्यतिशायि अधिककान्ति ॥ १४४ ॥

दीपिका ।

बुद्धितत्त्वे सूक्ष्मभुवनाष्टकमिति । सूक्ष्ममेतद्देवयोन्यष्टकं स्थूलानां देवयोनीनामण्डमध्यस्थत्वात् । यदाहुस्सांख्याः "अष्टविकल्पो दैवस्तिर्यग्योनिश्च पञ्चधा भवति । मानुष्यश्चैकविधस्समासतो भौतिकस्सर्गः ।
इति ॥ १४४ ॥

वृत्तिः ।

अथ गुणतत्वयोगिनां भुवनाष्टकमाह ।

**गौणे योगीशधामानि**
**त्वकृतं कृतभैरवम् ।**
**ब्राह्मवैष्णवकौमार-**
**मौमं श्रीकण्ठमन्तिमम् ॥ १४५ ॥**

वीरभद्रस्य रुचिम-
द्धामयोगिवरस्तुतम् ।
स्वपदाधोऽधिकारस्थ
सर्वरुद्राधिकश्रियः ॥ १४६ ॥

स्वस्मात्पदादधोऽधिकारस्थेभ्योह्यधिका श्रीर्यस्य-साक्षात्परमेश्वरानुगृहीतत्वात् तस्य वीरभद्रस्य योगिभिरभिष्टुतं भास्वरं भुवनम् । अत्रैव चैते रुद्रा गुणतत्वमूर्धनि स्थिताः ॥ १४६ ॥

दीपिका ।

**कृतभैरवमिति** । कृतं च भैरवं चेति यावत् । वीरभद्रस्येत्यादि व्याचष्टे **स्वस्मात्पदादित्यादि** । अत एव भारभूत्यादयो भुवनेश्वरा अनन्तनियुक्ता एव। किंचामी गुणतत्ववासिनश्श्रीकण्ठस्याऽपि प्रेर्या इत्युक्तम् । "श्रीकण्ठानुमितास्सर्वे चामोघा बलशालिनः ।" इति । तस्याऽपि शिवनियुक्तत्वाच्च[1] । तस्माद्गुणतत्वादूर्ध्वं प्रधानस्याधोभागे वीरभद्रस्य भुवनं गुणतत्वान्तमध्यमप्रळयकालेप्यवस्थानार्थं उक्तम् । यद्वक्ष्यति । "तदा रुद्रशतं वीरश्रीकण्ठौ च प्रधानपाः । शक्त्याक्रम्य जगत्सूक्ष्मं सूक्ष्मदेहांश्च चिद्वतः । प्रकृतिस्थाश्शयान् कालं तत्स्वापान्तमुपासते" इति । अत एव मतङ्गे श्रीकण्ठस्य प्रधानाद्यभुवनमुक्तम् । एतत्स्थितिकाले तु शतरुद्राणामिव वीरभद्रस्याऽपि अण्डोर्ध्वमेव । अधिकारोऽप्यस्य तदवधिरेव । न तु श्रीकण्ठस्येव गुणतत्वावधिरिति बोद्धव्यम् । यदुक्तं रौरवे "शतरुद्रादयः

---

१. अनन्तानियुक्ता एवेति पूर्वेणान्वयः ।

ख्याता वीरभद्रपुरस्सराः । श्रीकण्ठाधिष्ठितास्सन्त" इति । अन्यत्राप्युक्तं अण्डस्याधारकाश्चैव वीरभद्रपुरस्सराः" इति । ततश्च तत्स्थान **एव तद्भु-**वनं शोध्यम् । गुणतत्व इव श्रीकण्ठभुवनमिति गुरवः । वामदेवादयस्तु त्रयोदशरुद्रा वीरभद्रस्याधो गुणमूर्धन्येव स्थिता इत्याह । **अत्रैव चे-त्यादि** ॥ १४६ ॥

के त इत्याह—

**वामदेवभवानन्त**
**भीमोमापत्यजेश्वराः ।**
**सर्वेशानेश्वरावेक-**
**वीरैकशिवसंज्ञिताः ॥ १४७ ॥**

**उग्रः प्रचण्डदृक् चेशः**
**गुणानां मूर्ध्नि संस्थिताः ।**
**तपसा गुरुणोपास्य**
**क्रोधादीन् गुरुतां गताः ॥ १४८ ॥**

**स्वाधिकारविधौ तीक्ष्णा**
**रुद्रास्सर्वार्थदृक्क्रियाः ॥ १४८½ ॥**

ऊर्ध्वस्थान् क्रोधेशादीन् महता तपसाऽऽराध्य गुरुतामनुग्रहकृत्त्वं प्राप्ताः । निजेऽधिकारविधौ तीक्ष्णाः रुद्राः कुशलाः सर्वार्थज्ञानक्रियायोगिनश्चैते ॥ १४८½ ॥

दीपिका ।

सर्वार्थज्ञानक्रियायोगिन इति स्वावधिकविषयमेव ॥ १४८३ ॥

तेभ्यो दशगुणश्रीकान्
प्रधानाधिपतीन् शृणु ।
क्रोधेशचण्डसंवर्त-
ज्योतिः पिङ्गळसूरगाः ॥

पञ्चान्तकैकवीरौ च
शिखेद इति ते स्मृताः ॥ १५० ॥

वामदेवादिभ्यः प्रागुक्तेभ्यो दशगुणा श्रीर्येषां ते । इमे क्रोधेशादयः प्रधानाधिपाः ॥ १५० ॥

दीपिका ।

तेभ्य इत्यादि व्याचष्टे वामदेवादिभ्य इत्यादि । चण्डसंवर्तक इत्येकस्यैव नाम । एते च क्रोधेशादयोऽष्टौ शिवनियुक्ता एवेत्युक्तम् ॥

सर्वेन्द्रियस्सर्वतनु-
स्सर्वान्तःकरणाश्रयः ।
पुरुषे नियतौ यन्ता
काले कलनशक्तिमान् ॥ १५१ ॥

वृत्तिः ।

पुरुषतत्ववर्तिनि भुवने सर्वेन्द्रियत्वादिविशेषण-विशिष्टो रुद्रोऽधिष्ठाता । यदुक्तं प्राक्पुंस्तत्वनिरूपणावसरे "भौवने रुद्रसंश्रयामि"ति । एवं नियतौ नियन्तृसंज्ञः काले च कलनशक्तिमान् स्थितः ॥ १५१ ॥

दीपिका ।

पुरुषतत्वर्तिनीत्यादि । एतच्च भुवनं प्रधानमूर्ध्नि रागादिभुवनाधोभाग एवावस्थितं पुरुषस्य भुवनाधारत्वायोगात् इत्युक्तम् । एतदेव ज्ञापयति यदुक्तमित्यादि ॥ १५१ ॥

भुवनेशमहादेव
वामदेवभवोद्भवाः ।
एकपिंगेक्षणेशाना-
ङ्गुष्ठमात्राश्च भास्वराः ॥ १५२ ॥

परमेशोपमा राग-
विद्यागर्भे कलापदे ।
महापुरश्चतुष्षष्टि-
मण्डले मण्डलाधिपाः ॥ १५३ ॥

---

१ कलादिप्रकरणेऽष्टादशश्लोकः ।

रागाविद्येगर्भे प्रागुक्तरीत्या यस्मिंस्तस्मिन् कलाभुवनेऽष्टाष्टक्रमेण श्रीमन्मतङ्गाद्युक्तेन क्रमेण महापुरचतुष्षष्टिमण्डलं यत्स्थितं तत्रामीभुवनेशादयो मण्डलाधिपतयः परमेश्वरोपमशक्तिमत्त्वात् सुकान्तयास्स्थिताः। कथं पुनश्चतुष्षष्टिमण्डलं स्थितमिह नोक्तम्। श्रीमन्मतङ्गादिनोक्तं ज्ञेयम् ॥ १५३ ॥

दीपिका।

**तस्मिन् कलाभुवन** इति भुवनशब्देनात्र स्थानमुच्यते। रागादिकलान्ताध्वनीत्यर्थः। **तत्रामी भुवनेशादय** इति। अत एवैतच्छुद्ध्यैव दीक्षायां तेषामपि शुद्धिरिति भावः। **परमेश्वरोपमशक्तिमत्वात् सुकान्तय** इति। अतश्च क्रोधेशादय एतेऽपि मण्डलिनः शिवानुगृहीता एव। नतु गहनेशादिवत् अनन्तनियुक्ता इति। कथं पुनः गहनेशादयो मण्डलाधिपतीश्वरा इत्यनन्तरमेव वक्ष्यति। ऊर्ध्वस्थभुवनवासित्वमात्रेण तेषां प्रेरकत्वमुक्तमित्यविरोधः ॥ १५३ ॥

वृत्तिः।

अथ तेषामप्याधिपतीनाह—

**अनन्तस्त्रिकलो गोप्ता**
**क्षेमीशो ब्रह्मणः पतिः।**
**ध्रुवतेजोऽधिपौ रुद्रौ**
**गहनेशश्च विश्वराट् ॥ १५४ ॥**

मायाधिकारिणो रुद्रा
मण्डलाधिपतीश्वराः ।
संसारचक्रकारूढ-
भूतग्रामविवर्तकाः ॥ १५५॥

एतावत्येव घोरेयं
सर्वभूतभवाऽवनिः ।
सीदन्त्यज्ञानिनो यस्यां
पंके गाव इवाबलाः ॥ १५६ ॥

अमी मायाधिकारिणोऽनन्तेशादयोऽष्टौ रुद्रास्संसार एवाजस्रभ्रमाच्चक्रम् तदारूढस्य भूतग्रामस्य विवर्तकास्सांसारिकाः। इयत्येव चैषा घोराऽशिवा सर्वभूतानां भूमिः। यस्यामविद्वांसः कर्दमनिमग्नाशक्तबलीवर्दवदवसादं यान्ति ॥ १५६ ॥

दीपिका ।

इयानेव मायीयो शुद्धाध्वा इत्याह इयत्येवेत्यादि ॥ १५६ ॥

अथ विद्याभुवनस्था विद्याराज्य उच्यन्ते ।

भृगुणी ब्रह्मवेताळी
स्थाणुमत्याम्बिका परा ।

रूपिणी नन्दिनी ज्वाला-
स्सप्तस्सप्तार्बुदेश्वराः ॥ १५७ ॥

विद्याराज्ञ्यस्तु कथिता
विद्यायां रुद्रसंस्तुताः ॥ १५७½ ॥

एतास्सप्तविद्याराज्ञ्योऽनन्तरोक्तमण्डलाधिपतिरुद्राभिष्टुतास्सप्तानां मन्त्रकोटीनामीश्वर्यः ॥ १५७½ ॥

दीपिका ।

भृगुणीत्यादिना शुद्धाध्वभुवनान्युच्यन्त इत्याह अथेत्यादि ॥

तासामुपरि दीप्तश्री-
र्देवो विद्याधिपस्स्थितः ।
मन्त्रेशेशाचिदाविष्ट-
रुद्रव्यूहाष्टकानुगः ॥ १५८½ ॥

उच्छुष्माश्शबराश्चण्डा
महावीर्याः पदद्रुहः ।
रुद्रा गणास्सादिक्पालाः
शास्त्राणि पतयस्स्थिताः ॥

**ते चानन्तप्रभृतयो**
**गदिता एव नामतः।**
**स्वरूपतश्च ते विप्र**
**पूर्वं प्रश्नानुषङ्गतः ॥ १६० ॥**

भृगुणीप्रभृतीनां विद्याराज्ञीनामूर्ध्वं विद्याधिपाख्यो रुद्रो **दीप्तश्रीः** निरतिशयज्ञानक्रियासम्पद्युक्तः स्थितः। कीदृगित्याह **मन्त्रेशेति** मन्त्रेशानामनन्तादीनां प्रेरकत्वेनेश ईश्वरभट्टारकः तच्चिदाविष्टास्तदुत्तेजितदृक्क्रिया ये रुद्राः तेषां यद्व्यूहाष्टकं तदनुगं यस्य स व्यूहाष्टकानुगः। तत्र ये रुद्रास्स्थितास्ते ईश्वरप्रेर्या इत्यर्थः। उक्तञ्च। "ईश्वरोऽधस्थविद्यानां पतीन् स प्रेरयत्यणून्। तेन प्रेरितमात्रास्ते कुर्वतेऽधस्तनं जगदिति।" उच्छुष्मादयश्च रुद्राः गणाश्चात्र देवीस्कन्दचण्डेशवृषप्रभृतयः दिगीश्वराश्चेन्द्रादयः। शास्त्राणि च निश्वासकारिकादीनि। पनयश्चानन्तादयस्स्थिताः। ते चानन्तादयो नाम्ना स्वरूपेण च प्रश्नानुक्रमेण पूर्वमुक्ताः ॥ १६०॥

दीपिका।

तासामुपरीत्यादि व्याचष्टे। भृगुणीप्रभृतीनामित्यादि। अत्र तु रुद्रव्यूहाष्टकं विद्याधिपभुवनान्तर्गतमेव शोध्यम्। उच्छुष्मादयस्तु अनन्तादिविद्येश्वरभुवनान्तर्गताश्शोध्या इति गुरवः। अत एवाह मन्त्रे-

**शानामित्यादि** । अनन्तादीनां सहगादीश्वरभट्टारकोऽनन्त एव प्रेरकः । अन्ये तु तदधस्स्थितास्सर्वे तस्य प्रेर्या इत्युक्तं पूर्वमेव । **गणाश्चात्रेत्यादि** । एते च गणेश्वरादयः क्रियाकाण्डे गणेशादिषु पूज्यत्वेन वक्ष्यमाणाः । **शास्त्राणिचेति** । शास्त्राणि च दर्शनात्मतां गतानीत्यर्थः । **पतयश्चानन्तादयस्स्थता इति** । एतेषां च महामायाध्वन्येवोपसंहृतस्वकार्यविद्याधिपतिभुवनोर्ध्ववर्तित्वात् अनन्तस्य चेश्वरशब्दवाच्यत्वादीश्वरतत्वास्थितमेतद्भुवनाष्टकं ज्ञेयम् । यद्वक्ष्यति "ईशानतीत्य शान्तान्तं तत्रं सादाशिवं स्मृतं" इति । श्रीमत्पराख्येऽपि "अनन्ताख्यस्तथेश्वर" इति ॥ १६०½ ॥

**सदाशिवे पवित्राग-**
**सकळादिपरिच्छदः ।**
**देवस्सदाशिवो बिन्दौ**
**निवृत्यादिकलेश्वराः ॥ १६१½ ॥**

**नादेध्वानि पतिश्शक्तौ**
**सर्वशक्तिमतां वरः ।**
**योनिर्विश्वस्य वागीशाः**
**पतयः परतश्शिवः ॥ १६२½ ॥**

सदाशिवभुवने पवित्राणि सद्योजातादीनि ब्रह्माणि । अङ्गानि च । सदा शिवज्वालिन्यादयः सकळनिष्कळादयोष्टौ रुद्राः परिच्छेदाः परिवारा यस्य स एवं

---

१. दय इति पाठभेदः ।

विश्वस्सदाशिवनाथस्स्थितः । बैन्दवे तु स्थानेनिवृत्ति प्रतिष्ठाविद्याशान्त्याख्यकलाधिपतिचतुष्कम् । नादभुवने-ध्वनिपतिर्नादेश्वरस्स्थितः । यथोक्तं नादाधिकारोक्तौ श्रीमत्स्वतन्त्रे "सुषुम्नेशस्स्थितस्तत्र चन्द्रकोट्यर्बुदप्रभः । दशबाहुस्त्रिणेत्रश्च श्वेतपद्मासने स्थितः । शशाङ्कशेखर-श्श्रीमान् पञ्चवक्त्रो महातनुः" इति । **शक्ताविति** । शाक्तसंश्रये सकलशक्तिमतां वरिष्ठः परमेश्वरस्स्थितः । अत्रैव च **योनिर्विश्वस्येत्यादि** । नादबिन्द्वादिक्रमेण सकलजगदुत्पत्तिहेतुः कुण्डलिन्याख्या शक्तिस्स्थिता । यथोक्तं श्रीमत्स्वतन्त्रे । "तत्र कुण्डलिनी शक्तिर्माया-कर्मानुसारिणी । नादबिन्द्वादिकं कार्यं तस्या इति जग-त्स्थितिः ।" इति । **वागीशाः पतयः** इति । अस्मिन्नेव स्थाने भुवनेश्वरत्वेन स्थिताः । यथोक्तं तत्रैव । "भुव-नाधिपतीनां च हेतुस्तद्वासिनां प्रिये" इति । **परतश्शिव** इति । सकलकारणातीतं निष्कळं परशिवस्वरूपं ज्ञेयम् । तथाहि श्रीमत्स्वतन्त्र एवोक्तं—"तदतीतं वरारोहे परं तत्वं निरामयं" इति ॥ १६२½ ॥

## दीपिका ।

सदाशिवे इत्यादि व्याचष्टे **सदाशिवभुवन इत्यादि** । ब्रह्माङ्गानां सकळनिष्कळादिशक्तिपक्ष एवान्तर्भावः । यदुक्तं कालोत्तरवृत्तौ तत्रभ-वता रामकण्ठेन शिवभेदाष्टकप्रकरणे । "सकळं निष्कळं शून्यं कलाढ्यं

खमलं कृतम् । क्षपणक्षममन्तस्थं कण्ठोष्ठं चाष्टमं स्मृतम् ।" इत्यादिना प्रासादभेदमष्टधाप्रतिपाद्योपसंहारसूत्रव्याख्याने । "ते मन्त्रा विद्येश्वराधिष्ठातृशक्तिभेदस्य प्रतिपादकत्वात्तद्भेदा एव ब्रह्माङ्गादिवत् आख्याता इति । यद्येवं कथमष्टौ रुद्रा इति । अष्टधा रुद्रस्य शिवस्य धर्मत्वेनोपचारादित्यविरोधः । ध्वनिपत्यादिभेदस्तु सदाशिवावस्थाभेदवत् शिवस्यैव तद्भुवनाधिष्ठानोपाधिवशादुपचारेणोच्यते । यद्वक्ष्यति । "ईशानतीत्य शान्तान्तं तत्वं सादाशिवं स्मृतम् । भुवनान्यपि नादादिकला नान्यः पतिश्शिवात्" इति । अत एव शिवस्य शाक्तशरीरत्वात्परिवारत्वमप्येषामधिष्ठेयत्वेनोपचारादुक्तं तत्तद्भुवननिवासिनस्तु तत्तद्भुवनेश्वरावस्थोपासनाद्दीक्षया वा तत्परियोजितानां संस्कार्यात्मनां पारमार्थिक एव भेदो बैन्दवशरीरयोगश्च । ननु शक्तिशिवतत्वयोरपि शास्त्रान्तरेषु श्रवणात्कथमीशानतीत्य शान्तान्तं तत्वं सादाशिवं स्मृत"मिति वक्ष्यमाणवचनोपपत्तिरत आह । **बैन्दवेत्वित्यादि** । अयमभिप्रायः । अधिष्ठातुश्शिवस्य तच्छक्तेश्च भेदाभावादेकत्वमेव युक्तं परिग्रहशक्तेस्तु महामायाख्याया नादबिन्द्वादिभेदेन परिणामः पारमार्थिक एवेति तत्र निवृत्यादिबिन्दुकलाचतुष्टयं शिवस्य भोगस्थानात्मकं शक्तितत्वमुच्यत इति । यदुक्तं श्रीमन्मतङ्गे "चतुर्मूर्तिमयं शुभ्रं यत्तत्सकळनिष्कळम् । तस्मिन् भोगस्समुद्दिष्टः पत्युर्विश्वस्य सर्वदा" इति । ध्वनिपत्युपलक्षितानि वक्ष्यमाणानि इन्धिकादिभुवनानि शिवतत्वान्तर्गतानीत्याह **नादभुवन** इति । नादश्चात्रमहामायाशक्तेर्भुवनात्मकः प्रथमः प्रसरः । उपसंहृतकार्यायास्तु महामायाया निष्कळश्शिवस्सर्वदाऽधिष्ठानत्वेन स्थित इत्याह **शक्तावितीत्यादि** । अस्या एव च शब्दोत्पत्तिहेतुरवस्थाविशेषः शास्त्रान्तरे कुण्डलिन्याख्ययोक्तोत्र शिवतत्व एवान्तर्भूत इत्याह **अत्रैव चेत्यादि** । (अत्र च विश्वशब्देननान्यतरात्मक इति) वागीशाः पतय इत्यपि नादबिन्द्वादिक्रमेण शब्दोत्पादकस्य शिवस्यैवोपचारेण कार्यभेदादुच्यते । एते च नादबिन्द्वादिभुवनेश्वरसमानधर्मत्वाच्छास्त्रान्तरेषु भुवनेश्वरशब्देनोच्यन्त इत्याह । **अस्मिन्नेवेत्यादि** । तत-

श्राचेतनत्वेन महामायायाश्शिवाधिष्ठानं विना शब्दादिकार्योत्पादकत्वाभावात् शब्दब्रह्मवादिनः प्रतिक्षिप्ताः । शब्दानां च कार्यत्वं सिद्धमिति वक्ष्यामः क्रियापादारम्भे "शक्तेर्नादो भवेद्बिन्दुरक्षरं मातृका ततः" इति । परेतश्शिव इत्यनेन च सर्वशक्तिमतां परत्वेन पूर्वमुक्तस्य परमशिवस्य पारमार्थिकं स्थानं एवंरूपाया महामायायाः परत एवेत्युच्यत इत्याह सकलकारणातीतमित्यादि ॥ १६२१ ॥

वृत्तिः ।

अथैतदाक्षेप्तुं मुनिः प्रश्नयति ।

**सदाशिवशिवान्ताध्व-**
**कल्पिताणुवपुस्स्थितिः ।**
**सर्वातिशयविश्राम-**
**स्तदूर्ध्वं पतयः कथम् ॥ १६३२ ॥**

सदाशिवतत्वादूर्ध्वं शिवनाथान्तं यावद्योऽध्वा तत्राणूनां निवृत्यादिकलेश्वराणां ध्वनिपातिप्रभृतीनां च वपुस्स्थितिर्दिव्यदेहयोगः कल्पितः । तत्र च सदाशिवतत्वे सर्वातिशयविश्रामः नहि ततोऽन्यत् निष्कळशिवतत्वादृतेऽतिशायि किमप्यस्ति । एवं च कथं तदूर्ध्वं पतय उक्ताः ॥ १६३ ॥

---

मूलप्रतीकम् ।

दीपिका ।

अत्र च संक्षेपोक्त्या सन्दिहानो निश्चोदयतीत्याह अथैतदित्यादि ।

वृत्तिः ।

अत्र सिद्धान्तस्तु ।

**ईशानतीत्यशान्तान्तं**
**तत्वं सादाशिवं स्मृतम् ।**
**भुवनान्यपि नादादि-**
**कला नान्यः पतिश्शिवात् ॥१६४१/२॥**

वृत्तिः ।

अनन्तेशादिविद्येश्वरोपलक्षितमीश्वरतत्वमतिक्रम्य निष्कळतत्वान्तं सदाशिवतत्वं ज्ञेयं अत्र च नादबिन्द्वादिकला एव भुवनत्वेन बोद्धव्याः । शिवभट्टारक एव चात्र सर्वतत्वाधिपतिः । नान्यः कश्चित् । ततश्च तदूर्ध्वं पतयः कथमित्यस्य चोद्यस्य नावकाशः ॥ १६४१/२ ॥

दीपिका ।

सिद्धान्तसूत्रं व्याचष्टे अनन्तेशादित्यादि अत एवाऽस्मिंश्च शास्त्रे तत्वदीक्षायां सदाशिवशक्तिशिवतत्वानां एकेनैव प्रयोगेण शुद्धिर्बोद्धव्य अत्रचेत्यादि । एतच्च पूर्वमेवदर्शितामिति ॥ १६४१/२ ॥

वृत्तिः ।

यद्येवं "नादेध्वनिपतिश्शक्तौ सर्वशक्तिमतां वर" इति भिन्नत्वं पतीनां यदुक्तं तत्कथमित्याह ।

**किन्तु यः पतिभेदोऽस्मिन्**
**स शास्त्रे शक्तिभेदवत् ।**
**कृत्यभेदोपचारेण**
**तद्भेदस्थानभेदजः ॥ १६५½ ॥**

शिवभट्टारकादन्यो नात्राधिपतिः किन्तु निवृत्यादिकलेश्वराणां योऽस्मिन् शास्त्रे भेदः स यथैकस्या एव शक्तेः कृत्यभेदोपचारेण वामादिभेदभिन्नत्वम् एवं स्थानभेदहेतुकः कृत्यभेदकृतश्च ज्ञेयः ॥ १६५½ ॥

तमेव कार्यभेदं दर्शयितुं बिन्दुभुवनस्थनिवृत्त्यादिकलेश्वरचतुष्टयस्य साधारणं तावद्रूपमाह ।

**करोत्युन्मीलनं याभि-**
**श्शक्तिभिर्नरतेजसः ।**
**ता निवृत्त्यादिसंज्ञानां**
**भुवनानामधीश्वराः ॥ १६६½ ॥**

वृत्तिः ।

आणवस्य सर्वज्ञत्वसर्वकर्तृत्वात्मनस्तेजसो याभिश्शक्तिभिः प्रकाशनं देवः कुरुते ताश्शक्तय एव निवृत्तिप्रतिष्ठादिसंज्ञानां भुवनानामीश्वरत्वेनोक्ताः इत्येतत्समानमासां स्वरूपम् ॥ १६६॰ ॥

वृत्तिः ।

अथासाधारणत्वं चाह ।

**निवर्तयति भूतानि**
**यया साऽस्य निवर्तका ।**
**निवृत्तिरिति तत्स्थानं**
**तत्रेशोऽपि निवृत्तिमान् ॥ १६७॰ ॥**

यया शक्त्या चतुर्दशविधं भूतसर्गं निवर्तयति । संसारवैतृष्ण्यजननेन कैवल्याभिमुखं सम्पादयति सा भगवच्छक्तिर्भवनिवर्तनव्यापारकारिणी । तच्च तदधिष्ठेयं स्थानं निवृत्तिसंज्ञं तदधिपतिश्च परमेश्वरो निवृत्तिमानित्यतोऽसौ स्थानभेदात्कृत्यभेदाच्च भाक्त उक्तो भेदः । एवं प्रतिष्ठादीनामपि ज्ञेयम् ॥ १६७॰ ॥

दीपिका ।

निवर्तयतीत्यादिसूत्रं व्याचष्टे ययेत्यादि । चतुर्दशविधं भूतसर्गमित्युपलक्षणं बद्धानां अस्मिंश्च स्थाने केवलं सद्योजातमूर्ततयाऽभिध्येयः

तत्पदप्राप्तिकामैर्भगवान् इति गुरवः । एवं प्रतिष्ठाविद्याशान्तिभुवनेष्वपि क्रमात्केवलं वामदेवाघोरतत्पुरुषाकारो ध्येय इति तत्तद्भुवनवासिनां तत्तद्-भुवनेश्वरावस्थोपासकानां बैन्दवशरीरयोगो वास्तव एवेत्युक्तम् । यद्वक्ष्य-त्यनन्तरमेव "येऽपि तत्पदमापन्नाः शैवसाधनयोगतः । ते तत्स्थित्यन्त-माह्लादं प्राप्य यान्ति परं पदं" इति ॥ १६७½ ॥

वृत्तिः ।

तथाहि ।

**निवृत्तस्य गतिर्भूयो**
**यया प्रच्यावलक्षणा ।**
**निषिध्यते प्रतिष्ठा सा**
**स्थानं तद्वांश्च तत्पतिः ॥ १६८½ ॥**

अनुध्यानानुगृहीतस्योन्मुखस्याणोः पुनरधोऽध्वनि संसारलक्षणा गतिर्यया निषिध्यते सा गतिनिवृत्तिहेतु-त्वात् प्रतिष्ठाख्या शैवी शक्तिः । स्थानं च तत्प्रतिष्ठा-भुवनम् । तदीश्वरश्च प्रतिष्ठाधिपतिसंज्ञो विज्ञेयः ॥१६८½॥

**त्यक्त्वाप्तगम्यविषयं**
**यया ज्ञानं ददात्यणोः ।**
**सा विद्या स्थानमप्यस्या**
**विद्येशश्च तदीश्वरः ॥ १६९½ ॥**

आप्तविषयं शब्दविषयं गम्यविषयं चानुमेयं ज्ञानं त्यक्त्वा पारिशेष्यात्साक्षात्कृताशेषपदार्थजातं यया शक्त्याणोरात्मनः परमेश्वरोऽभिव्यनक्ति सा शक्तिः विद्याख्या तच्च भुवनं विद्याख्यं तदीश्वरश्च विद्याधिपाख्यया बोद्धव्यः ॥

**सर्वदुःखप्रशमनं**
**ययाऽस्य कुरुते हरः ।**
**सा शान्तिस्तत्पदं चेति**
**तत्कुर्वन् सोऽपि शक्तिमान् ॥**

वृत्तिः ।

निखिलदुःखप्रशमनं यया शक्त्यास्याऽऽत्मनः शिवनाथः करोति सा शान्तिश्शक्तिः तच्च स्थानं शान्त्याख्यं तच्च कुर्वन् सोऽपीश्वरः शान्तिमानुच्यते ॥ १७०½ ॥

इत्थं बिन्दुकलाचतुष्कमुक्त्वा नादकलोक्त्यर्थमाह ।

**ऊर्ध्वाधोविषयालोको**
**महान् यश्च महत्तरः ।**
**महत्तमश्च क्रियते**
**चितो याभिर्विमुच्यतः ॥ १७१½ ॥**

**ता इन्धिकाद्यास्तत्स्थानं**
**तद्वानीशास्तिसृष्वपि ॥ १७२ ॥**

विमोचनं विमुक्तिर्बन्धापगमः । विमुचमिच्छत्यात्मन इति रूपम् । एवं च विमुच्यतो मोक्षैषिणः पुंस ऊर्ध्वाधोविषयः आलोकः प्रकाशो महानिन्धिकया विधीयते स एव च दीपिकाख्यया महत्तरस्सम्पाद्यते रोचिकया त्वसावेव महत्तमः क्रियते तानिचैतासां स्थानानीन्धिकादिसंज्ञानि । तिसृष्वप्येतासु कलास्वधिपतिः तद्वानिन्धिकाद्युपलक्षितो वेदितव्यः ॥ १७१$\frac{2}{1}$–१७२ ।

दीपिका ।

ऊर्ध्वाध इत्यादि व्याचष्टे विमोचनमित्यादि । एतानि चेन्धिकादिभुवनान्युपलक्षणं शास्त्रान्तरोक्तस्य शान्त्यतीतभुवनस्थानाश्रितादिभुवनानां चेत्यवगन्तव्यम् । यत्र तु शान्त्यतीतभुवनमेकमेव श्रूयते तत्राप्येषामन्तर्भावो ज्ञेयः । एतानि च शिवतत्वभुवनानि महामायायाश्शक्तिरूपत्वेन भुवनाधारकत्वासम्भवात् तत्कार्यशान्तिमस्तकस्थानीत्युक्तम् ॥

वृत्तिः ।

अथ मोचिकायाश्चोर्ध्वगायाश्चोक्तवद्व्यापारमाह ।

**सर्वज्ञत्वादियोगेऽपि**
**नियोज्यत्वं मलांशतः ।**
**प्रमार्ष्टि तद्यया साऽस्य**
**मोचिका तत्पदं च तत् ॥ १७३ ॥**

मोचकस्तत्क्रियाकृच्च
यये़शानं करोति तम् ।
सोर्ध्वगा तत्पदं चेति
तदीशश्चोर्ध्वगापतिः ॥ १७४ ॥

विद्येशाद्याधिकारभाजां सर्वज्ञत्वादिगुणयोगेऽपि मलांशावशेषतः प्रेर्यत्वं यदस्ति तद्यया शक्त्याऽऽत्मनो निवर्तयति साऽस्य भगवतो मोचिकाख्या शक्तिः तस्याश्च यत्स्थानं तत्कृत्यकारी च परमेश्वरः तदेतत्सर्वं मोचिकाख्यया व्यपदेश्यम् । यया कृतानुग्रहमीशानं सम्पादयति सा ऊर्ध्वगाख्या शक्तिस्तच्च स्थानं ऊर्ध्वगाख्यं तदधिष्ठाता चेश्वर ऊर्ध्वगाधिपतिरित्युक्तः ॥ १७३–१७४ ॥

येऽपि तत्पदमापन्नाः
शैवसाधनयोगतः ।
ते तत्स्थित्यन्तमानन्दं
प्राप्य यान्ति परं पदम् ॥ १७५ ॥

नच सृष्ट्यादि कुर्वन्ति
स्वार्थनिष्ठा हि ते यतः ॥ १७५[१/२] ॥

तत्तद्विद्योपदेशरूपेण ज्ञानाख्येन वक्ष्यमाणानेक-

विधभुवनयोजनात्मकेन दीक्षाख्येन शैवेन पारमेश्वरेण साधनेनोपायेन युक्तत्वात् येऽणवस्तत्पदभाजः तत्स्थिति-पर्यन्तं निरतिशयानन्दात्मकं भोगं प्राप्य परमं पदं यान्ति शिवसमानास्संम्पद्यन्ते । नच परमेश्वरवत् सृष्टि-स्थित्यादिकृत्यं विदधति । यतस्स्वार्थे परे निर्वाणावाप्ति-लक्षणे निष्ठा विश्रान्तिर्येषां ते एवं विधाः । ततः परं प्राप्यस्य वस्तुनोऽन्यस्यासम्भवात् प्रेर्यतापगमाच्च सृष्टि-स्थित्यादिकृत्यं न ते कुर्वन्तीति यावत् ॥ १७५–१७५½ ॥

वृत्तिः ।

उपसंहरन्नाह ।

**इति सादाशिवं तत्वं**
**व्याख्यातं लेशतस्तव ॥ १७६ ॥**

लेशतस्त्वल्पया तवेति प्रष्टुर्भरद्वाजमुनेः ॥१७६॥

वृत्तिः ।

"ईशानतीत्य शान्तान्तं तत्वं सादाशिवं स्मृतम्"
इत्युक्त्वा तच्छक्तितत्वमपि तदन्तर्भूतमेवेति वक्तुमति-दिशति ।

---

१. संक्षेपत स्तवेति पाठः ।

शक्तावप्येवमित्येष
सकलः कृत्ययोगतः ।
कृत्यं तदादिविषयं
निष्कळोऽन्यत्र सर्वदा ॥ १७७ ॥

शक्तिरप्येवं व्यापिकैव ज्ञेया । इति एवमुक्तया रीत्या **एषः** सदाशिवनाथः **कृत्ययोगतः** स्थित्यादिव्यापारवशात् **सकळः** सह कलाभिः ब्रह्मपञ्चकसम्बन्धिनीभिरष्टत्रिंशत्संख्याभिस्तारासुतारातरणीत्यादिभिरारब्धमूर्तिः । यथोक्तं प्राक् । "तद्वपुः पञ्चभिर्मन्त्रैः पञ्चकृत्योपयोगिभिः । ईशतत्पुरुषाघोरवामाजैर्मस्तकादिकम्" । तच्च **तदादिविषयमिति** । तदादिर्विषयो यस्य प्रथमस्तदिच्छयैव पञ्चकृत्यनिष्पत्तिरित्यर्थः । **अन्यत्रेति** । स्थित्याद्यप्रवृत्तौ तदुपरमे वा सर्वकालं निष्कळ एव परमेश्वरः कार्यार्थं कलाकल्पितमूर्तित्वात् । ॥ १७७ ॥

दीपिका ।

इति सादाशिवं तत्वमित्यादिना शिवस्य साक्षात् सदाशिवादिभुवनाधिष्ठातृत्वमुपसंहृत्य शक्तावप्येवमित्यनेन तच्छक्तेरपि तत्तद्भुवनाधिष्ठानत्वमुपसंहरतीत्याह । **तच्छक्तितत्वमपीत्यादि** । अत्र निष्कळशक्तिरेव शक्तितत्वमुच्यते । न तु पूर्वोक्तमहामायाकार्यात्मकमिति । **एष सदाशिवनाथ** इत्यादि सदाशिवभुवने प्रवृत्तत्वात् सकळ इत्युच्यते । निवृत्त्या-

दिभुवनेषु कार्योद्युक्तत्वात् सकळानिष्कळ इति । परतत्वप्रवृत्तत्वात् निष्कळ इति । यदुक्तं "शक्तोद्युक्तौ प्रवृत्तश्च कर्ता त्रिविध" इति । कृत्यं तदादिविषयमित्यादि । तच्छब्देनार्थवशात् महामायाकार्यं शक्तितत्वमुच्यते ॥ १७७ ॥

**भूमिप्राधानिकग्रन्थि
विद्याबिन्दुकलादिषु ।
गुणकारा दशाद्यास्स्युः
नादकोटेरधोमुने ॥ १७८ ॥**

भूमिश्च पृथिवी प्राधानिकं च प्रकृतितत्वं ग्रन्थिश्च माया तेषु भूमिप्रधानग्रन्थितत्वेषु विद्यायां च शुद्धविद्यायां बिन्दुनादकलानवके चेत्येवमत्र गुणकाराः । गुणबन्धनस्थानानि स्युः सन्ति इत्यर्थः । तत्र पार्थिव प्राकृतमायीयतत्वत्रये गुणात्मिकाः सत्वरजस्तमोबहुळाः काराः पाशास्सन्ति । सत्वादिगुणत्रयमत्र पाशतया स्थितमित्यर्थः । सत्वस्य रजस्तमोपेक्षया प्रकाशत्वेनोत्कर्षे सत्यपि रजस्तमोभ्यामत्यन्तविश्लेषासम्भवात् पाशत्वसिद्धेः । तथाचोक्तं सिद्धगुरुणा । "सत्वगुणावच्छिन्नो भविनां भोगो मलोऽशुचिर्बन्धः । पतिभावानलदाह्यः पुंसां चेतोगुणप्रभवः ।" इति । विद्यायां बिन्दुनादकलानवके च गु-

णानां सर्वज्ञतातृप्त्यनादिबोधादीनां या निरतिशयस्य महत्तमस्याऽऽलोकस्य कर्त्री मध्यमी कला रोचिकाख्या तदधोवर्ति च नादकलाद्वयं बिन्दुकलाचतुष्कं च शुद्धविद्या अव्यक्तं पृथिवी च काराः प्रतिबन्धकत्वेन स्थिताः। अत एवाऽऽह **दशाद्यास्स्युर्नादकोटेरध** इति। नादस्य या कोटिः ऊर्ध्वगाख्यायाः कलायाः पर्यन्तः तदधो दशैताः प्रोक्तवन्नादबिन्दुकलानवकं शुद्धविद्यातत्वं चेत्येतद्दशकं निरतिशयसर्वज्ञत्वतृप्त्यादिपारमेश्वरगुणप्रातिबन्धकस्थानत्वात् **आद्या इति** मुख्याः काराः बन्धनभुवः। अन्ये तु "भूमिः प्राधानिको ग्रन्थिरित्यसमस्तपाठाभिप्रायेणैवं व्याचक्षते। यदुत गुणानां सत्वरजस्तमसामशुद्धानां प्राधानिकस्तावत्पाशग्रन्थिरिव ग्रन्थिभूमिरिति मुख्यव्याप्तिस्थानम्। विद्यायां बिन्दुनादकलानवके चेत्येवं दशस्वाद्येषु स्थानेषु। अन्ये तु शुद्धास्ते सत्वादयः तत्तद्भुवनं निर्वृत्य तत्तत्कृत्योपयोगिनस्सम्भवन्ति। तदुक्तमागमान्तरे "पार्थिवप्राकृताण्डाभ्यामूर्ध्वमण्डद्वयेऽपरे। शुद्धास्सत्वादयस्सन्ति बिन्दुनादकलासु च" इति॥ अत्र च शुद्धत्वादेव कारत्वमनुपपन्नमिति न चोद्यम्। पर कैवल्यप्रतिबन्धहेतुत्वेन तथाविधानामपि तेषां पाशत्वानपगमात्। उक्तं च। "समनान्तं वरारोहे पाशजालमनन्तकं इति॥ १७८॥

## दीपिका ।

इत्थं भुवनदीक्षोपयोगिनं भुवनाध्वानमुपसंहृत्य वक्ष्यमाणकलादीक्षायां निवृत्त्यादिकलापञ्चकान्तर्भावेन तच्छुद्धाशुद्धमयं समस्तमपि शोध्यमिति दर्शयितुं भूमिप्राधानिकेत्यादिना तासां व्याप्तिस्थानानि प्रदर्श्यन्त इत्याह । **भूमिश्चेत्यादि** । तत्र भूमिः पृथ्वीतत्वं निवृत्तिकलान्तर्भावेन शोध्यम् । प्राधानिकं चैतद्व्यतिरिक्तमप्सत्वादिप्रकृतितत्वपर्यन्तं प्रतिष्ठाकलान्तर्भावेन । ग्रन्थ्युपलक्षितं पुरुषादिमायान्ततत्वजातं विद्याकलांतर्भावेन । विद्योपलक्षितं च शुद्धविद्येश्वरसदाशिवाख्यं तत्त्वत्रयं शान्तिकलान्तर्भावेन। बिन्दुनादकलानवकमपि शान्त्यतीतान्तर्भावेनेति । अथ कथमेषां गुणबन्धनस्थानत्वं अत आह । **तत्रेत्यादि** । ततश्च क्ष्मादेर्देहद्वारेण मायान्तं यावत्सत्वादि सम्भवति । **विद्यायां बिन्दुनादकलानवके चेत्यादि** चशब्दात्पूर्वोक्तेषु सर्वज्ञत्वादीनां गुणानां बन्धनस्थानत्वमिति शेषः । अत एवात्र षष्ठीसमासो गुणकारशब्दो वेदितव्यः । पूर्वतः कर्मधारय इति प्रदर्शितं ननु रोचिकयैव सर्वज्ञत्वादीनां प्रकाशितत्वात् कथं तदादिषु स्थानेषु एषां बन्ध अत आह **या निरतिशयस्येत्यादि** । यद्येवं कथं बिन्दुनादकलानवके चेत्युक्तम् । उच्यते रोचिकादिस्थानेषु "सर्वज्ञत्वादियोगोऽपि नियोज्यस्वं मलांशतः । प्रमार्ष्टि तद्यथा" इत्यादिनाप्रेर्यताळक्षणमलांशावशेषस्य प्रतिपादितत्वात् तिरोधानशक्तिशुद्धिपर्यन्तं परमैश्वर्यात्मकस्य गुणस्य प्रतिबन्धोऽस्तीत्युक्तं वक्ष्यामश्च दीक्षाप्रकरणे । ततश्च विद्यादितत्वत्रयोपलक्षणतया बिन्दुनादकलानवके च मलरूपसत्वादिगुणबलादेषामाद्यत्वं दशाद्या इत्यादिनोच्यते इत्याह । **अत एवाऽऽहेत्यादि** । अन्ये त्वित्यादिव्याख्यानं पूर्वापरासंम्बन्धादयुक्तं वक्ष्यमाणकलादीक्षोपयोगिव्याप्तिप्रदर्शनेन । व्यापकत्वं च द्वयं वाऽऽगमान्तरेषु शुद्धास्सत्वादयस्सन्तीत्युक्तं तत्तु यदुक्तमेव । "शुद्धाध्वन्यपि सूक्ष्मकलादीनां वक्ष्यमाणत्वादिति ॥ १७८ ॥

वृत्तिः ।

इदानीं प्रागुक्तानां गहनेशादीनां कियदास्पदमिति प्राग्यन्नोक्तं तद्वक्तुमाह ।

**ऊर्ध्वं कलाया विद्याध-**
**श्श्रूयन्ते गहनाधिपाः ।**
**तदन्तराळमेताव-**
**दिति धीजाऽत्र लक्षणा ॥ १७९ ॥**

विद्याशब्देनात्र माया ग्राह्या । तदुक्तम् । "श्रीमत्पौष्करे माया विद्या परा स्मृता" इति । अस्या अधः कलायाश्चोर्ध्वं गहनेशादयोरुद्राश्शास्त्रेषु श्रूयन्ते । तत्र तयोर्मायाकलयोरेतावत्प्रमाणं तदन्तराळमिति बुद्धिजैवात्र लक्षणामानं तत्परिच्छिनत्ति । नत्वत्र प्रमाणं परमुच्यते । मायातत्वस्यानन्तत्वश्रुतेः । तथाचोक्तं तत्रभगवद्भिः बृहस्पतिपादैः "अपि सर्वसिद्धवाचः क्षियेरन् दीर्घकालमुद्गीर्णाः । मायायामानन्त्यान्नोच्येत स्रोतसां संख्या" इति ॥

दीपिका ।

ऊर्ध्वमित्यादि सूत्रमवतारयति इदानीमित्यादि । नन्वेतत्सूत्रमत्रासंबद्धम् । अत एव "अनंतस्त्रिकल"इत्यादिना पूर्वोक्तेनैकवाक्यतया व्याख्येयम् । कथं पुनस्तत्रैव न पठ्यते "छन्दोवत्सूत्राणि"इति न्यायात् ।

एवं हि पठितमभ्युदयाय भवतीति । बुद्धिजैवात्र लक्षणा इति । तल्लक्षणा दृष्टिर्ज्ञानमूह इत्यर्थः ॥ १७९ ॥

वृत्तिः ।

उपसंहर्तुमाह ।

**द्वयोरप्यध्वनोरेवं**
**क्रमप्रसवयोगिनोः ।**
**विलयः प्रातिलोम्येन**
**शक्तितत्वद्वयावधिः ॥ १८० ॥**

एवमित्युक्तेन प्रकारेण क्रमिको यः प्रसवस्सर्गः तद्योगिनोः द्वयोरपि शुद्धाशुद्धयोरध्वनोस्सर्गविपर्ययेण संहारक्रमेण विलयः । यत एव यस्य प्रसवस्तस्यैव तत्रान्तर्भाव इत्यर्थः । शक्तितत्वद्वयावधिरिति । शुद्धस्य तावत्पराशक्त्यन्तः । अशुद्धस्य मायाशक्त्यन्तः ॥१८०॥

दीपिका ।

उपसंहर्तुमाहेत्युपलक्षणं (प्रळये....................) प्रळयश्चात्र द्विविधः । असाधारणसर्गविषयः साधारणसर्गविषयश्च तत्र प्रथमश्शरीरविलयात्मको द्विविधः । तत्र हि जात्यायुर्भोगप्रदस्य कर्मणः कस्य चित्परिक्षयात् स्थूलशरीरविषयो भवति । "विज्ञानयोगसन्यासैर्भोगाद्वा कर्मणः क्षयात् इति सर्वस्य कर्मणः क्षयात् सूक्ष्मदेहविषयस्स्थितिकालेऽपि भवति । महाप्रळयकाले तु सर्वेषामिति स एवाऽसाधारणस्य तत्वमार्गस्य

विलयः । द्वितीयस्तु भूरादिलोकानामुपसंहारादिति स एवाऽत्र "विलयः प्रातिलोम्येने"त्यादिनोच्यते । यदुक्तं मतङ्गे "कालो नाम मनुष्याणां द्विविधः प्रळयात्मकः । उपभोगक्षयादेकस्स च देहान्तदर्शनात् । लक्ष्यतेऽन्योपसंहारो लोकत्रयपरिक्षयात्" इति ॥ परशक्त्यन्त इति कुण्डलिनीशक्त्यन्तः ॥ १८० ॥

वृत्तिः ।

अत्यर्थसंक्षेपेण सूचितं संहारक्रमं विशेषेण जिज्ञासुर्मुनिः प्रश्नयति ।

व्यस्तस्याथ समस्तस्य
विलयस्स कथं कियान् ।
तत्वमार्गस्य भगवन्
ब्रूहि सर्वार्थदर्श्यसि ॥ १८१ ॥

यतस्सर्वागमार्थदर्शित्वं त्वयि भगवन् ततोह्यस्माकमादिश कथं केन क्रमेण कियत्कालीनश्च व्यस्तस्य प्राधानिकादेस्समस्तस्य शक्तितत्वान्तस्य तत्वाध्वनो विलयस्संहार इति प्रश्नार्थः ॥ १८१ ॥

दीपिका ।

व्यस्तस्येत्यादिप्रश्नसूत्रं व्याचष्टे । यत इत्यादि । व्यस्तस्य प्राधानिकादेरिति । क्षित्यादिगुणतत्वान्तप्राधानिकस्य जगतः । आदिशब्दात् त्रैलोक्यस्य कदाचिल्लय इत्यर्थः ॥ १८१ ॥

वृत्तिः ।

अथात्रोत्तरम् ।

महास्वापे समस्तस्य
व्यस्तस्याऽवान्तरो लयः ।
सर्गोऽप्येवं स्थितेः कालः
कथ्यमानोऽवधार्यताम् ॥ १८२ ॥

अनवरतमनन्तपुरुषोपभोगसाधनतनुकरणभुवनादिजननापचितशक्तेर्मायातत्त्वस्य पुनस्तत्कार्यनिर्वर्तनक्षमविचित्रशक्त्युत्तेजनार्थं भविनां भवभ्रमणखिन्नानां विश्रान्त्यै व्यस्तस्य प्राधानिकादेरध्वनो विलयः स्वेच्छापरिगृहीतसदाशिवादिसकलरूपोपसंहृतिलक्षणे महास्वापे समस्तस्याप्यध्वनः प्रतिसञ्चारः । यथा यादृशश्चासौ तथाग्रे स्पष्टयिष्यति । सर्गोऽप्येवमिति व्यस्तसमस्तत्वेन । तथाहि परापरविद्येश्वराद्यनेकाधिकारिकृतत्वेन व्यस्तः । परमेश्वरेच्छाप्रेरितानन्तादिरूपतया तु समस्तः । तदित्थं व्यस्तस्य समस्तस्यचाध्वनः कदा विलय इति यत्प्रश्नितं तदियता प्रत्युक्तम् इदानीं कियानिति कियत्कालीनस्सविलय इति प्रश्नस्योत्तरं स्थितेः काल इत्यादिना स्थितिपूर्वकत्वात् विलयस्य स्थितेस्तावत् कालोऽभिधीयमानः श्रूयताम् ॥ १८२ ॥

दीपिका ।

सिद्धान्तसूत्रं व्याचष्टेऽनवरतमित्यादि मायातत्वस्येत्युपलक्षणं प्रकृत्याद्युत्तेजनार्थमत्र मध्यमप्रळयो यतः व्यस्तस्येत्यादि । प्राधानिकादेरध्वनो विलयः प्रथममिति शेषः । त्रैलोक्यप्रळयस्तु प्रथित इत्यनन्तरसूत्रे व्यक्तीभविष्यति। तथाहीत्यादि । मध्यमप्रळयावसाने गुणादितत्वसृष्टेरनन्तकर्तृकत्वात् भुवनसृष्टेः श्रीकण्ठकर्तृकत्वाच्छरीरादिसृष्टेर्ब्रह्मादिकर्तृकत्वादनेकाधिकारिनिर्वर्त्यो व्यस्तस्सर्गः । महाळयान्ते परमेश्वरेच्छया प्रेरितानन्तद्वारेण च समस्त इति ॥ १८२ ॥

वृत्तिः ।

कोऽसावित्याह ।

**चतुर्युगसहस्रान्तं**
**अहर्हैमाण्डजन्मनः ।**
**निशा तावत्यहोरात्र**
**मानेनाब्दपरार्धके ॥ १८३ ॥**

**विलयो व्युत्क्रमेणैष**
**प्रकृत्यादि निवार्यते ॥ १८३½ ॥**

कृतादियुगचतुष्टयसहस्रान्तमानकं कनकाण्डजस्य ब्रह्मणस्संम्बन्धि दिनम् । तावत्येव च रात्रिः । अनेनाहोरात्रमानेन षष्ट्यधिकशतत्रयसंख्यातेऽब्दे एकदशशत-

सहस्रादिगणनया परार्धसंख्या यदाऽब्दानामुत्पद्यते तदा व्यस्तस्य प्राधानिकस्याध्वनो विलयः । एष च व्युत्क्रमेणेति सृष्टिक्रमवैपरीत्येन पश्चाद्यस्तस्याध्वनस्सर्गः भूतसंहारस्तु पूर्वमिति वैपरीत्यं तदा च प्रकृत्यादि प्रधानादि यत्सर्गस्योपादानकारणं तन्निवार्यते । तत्तदधिकृतैरुपसंहृतव्यापारः क्रियते ॥ १८३१ ॥

## दीपिका ।

चतुर्युगेत्यादि सूत्रं व्याचष्टे कृतादीत्यादि । एषां च युगानामिह मानं नोक्तम् । संहितान्तरादेरवगन्तव्यम् । यदुक्तं मतङ्गे । "त्रुटिर्नाम[1] कला सूक्ष्मा लवस्तद्द्विगुणस्स्मृतः । लवद्वयं निमेषस्तु काष्ठा पञ्चदशात्मिका । त्रिंशत्काष्ठात्मिकावाहाः वाहास्त्रिंशत्प्रपीडितः । मुहूर्तसंज्ञो लोकेऽस्मिन् तैस्त्रिंशद्भिश्च सुव्रत । अहोरात्रं समाख्यातं तन्त्रेऽस्मिन् पारमेश्वरे । पक्षोऽहोरात्रवर्गेण ज्ञेयः पञ्चदशात्मना । पक्षद्वयस्स्मृतो मासो द्वौ मासावृतुरुच्यते । ऋतूनां त्रितयेन स्यात् अयनं मुनिसत्तम । अयनद्वितयेनापि वत्सरः परिभाष्यते । सौरो मनुष्यजातीनां तेषां षष्ट्यधिकैश्शतैः । त्रिभिर्दिवौकसामब्दः कथितस्तन्त्रदर्शनात् । चत्वार्यब्द सहस्राणि वैबुधानि कृतं युगम् । सन्ध्यागतानि तावन्ति सन्ध्यांशस्तावदेव हि । एकैकह्रासतोऽन्यानि त्रेताद्यानि युगानि तु । सन्ध्यासन्ध्यांशयुक्तानि कल्पनिष्ठान्यतः परम् । सर्वमेतत्समाख्यातं अब्दानां तु चतुर्युगम् । सहस्राणि दश द्वे च ततो मन्वन्तरं परम् । चतुर्युगैकसप्तत्या विज्ञेयं गणितार्थिभिः" इति ब्रह्मणस्संबन्धिदिनमिति । त्रैलोक्यस्थितिः तावत्येव च रात्रिरिति तस्यैव प्रलयकालः । यदुक्तं तत्रैव "स्वव्यापारनियुक्तानामि-

[1] प्रळयपटले पञ्चदशश्लोकमारभ्य ।

न्द्राणामायुरुच्यते । एकैकस्य भवेदायुः युगानामेकसप्ततिः । तैश्चतुर्दश-भिश्शाक्रैर्दिनं कमलजन्मनः । लोकत्रयस्थितिरियं समासेन तवोदिता । तथा चैतावती रात्रिर्यस्यां लोकत्रयं मुने । क्षयं याति तमः प्राप्ते तदवस्थ-महर्मुखे । ब्रह्माप्युत्थाय शयनादाविष्टः करणात्मना । रुद्रशक्तिबलाद्भूयो निर्मिणोति जगत्तथा" इति । मध्यमप्रलयावधि क्षित्यादिगुणान्तस्य काल-प्रमाणमाह । अनेनेत्यादि इदमेवच मानं तत्प्रलयकालस्यापीति । तदेत-त्कनकाण्डजस्य ब्रह्मणः परमायुः श्रीकण्ठस्य चाहोरात्रमिति शास्त्रान्तरे-ष्वूच्यते ॥ १८३½ ॥

वृत्तिः ।

अथ कथं ते तदधिकृतास्तदानीमासत इत्याह—

**तदा रुद्रशतं वीर-**
**श्रीकण्ठौ च प्रधानपाः ।**
**शक्त्याक्रम्य जगत्सूक्ष्मं**
**सूक्ष्मदेहांश्च चिद्वतः ॥ १८४½ ॥**
**प्रकृतिस्थाशयान् कालं**
**तत्स्वापान्तमुपासते ॥ १८५ ॥**

तस्मिंश्च काले शतरुद्राः श्रीकण्ठवीरभद्रौ च क्रो-धेशचण्डसंवर्तादयश्च प्रधानाधिकृताः प्रकृतिस्वापावसानं यावत् स्वाधिष्ठेयं जगत्तदानीं शक्तिरूपतयावस्थानात् सूक्ष्मंप्रकृतिस्थितकर्माशयान् क्षित्यादिकलान्ततत्वारब्ध-सूक्ष्मदेहान् चिद्वतश्चाणून् स्वशक्त्याधिष्ठाय तिष्ठन्ति ॥

तदनन्तरम् ।

शिवेष्टमन्त्रभृन्नुन्न-
मण्डलाधिपतीरिताः ।
काले जगत्समुत्पाद्य
स्वाधिकारं प्रकुर्वते ॥ १८६ ॥

पुनरवान्तरसर्गप्रारम्भे परमेश्वरेच्छाचोदितानन्तादिविद्येश्वरप्रेरितैर्मण्डलाधिपतिसंज्ञितैरधिकारिरुद्रैः प्रवर्तितास्ते तस्मिन् काले जगन्निर्माय यथास्वमधिकारं विदधति ॥ १८६ ॥

वृत्तिः ।

अत्र प्रकृतिस्थाशयत्वश्रुतेर्मुनिस्सन्दिहानः प्रश्नयति ।

कर्म धर्मादिकं तच्च
गुणत्वेन मतौ स्थितम् ।
गुणिनो न गुणोऽपैति
प्रकृतावुच्यते कथम् ॥ १८७ ॥

धर्माधर्मरूपं यत्कर्म तद्बुद्धेर्गुणत्वेन स्थितमित्युक्तं "भावा बुद्धिगुणा धर्मज्ञानवैराग्यभूतय" इत्यादिना ।

नहि गुणिनस्सकाशाद्गुणस्यापगमो दृष्टः। नहि पटाच्छौक्ल्यं शर्करादेर्माधुर्यं वा पृथक्कर्तुं शक्यम्। ततश्च प्रकृतिस्थाशयत्वश्रुतिः कथमिति प्रश्नार्थः ॥ १८७ ॥

दीपिका।

तत्र प्रसङ्गान्मुनेः प्रश्न इत्याह। अत्रेत्यादि ॥ १८७ ॥

वृत्तिः।

सिद्धान्तस्तु।

सत्यं बुद्धिगुणः कर्म
नापैति गुणिनो गुणः।
देहाक्षफलभूमीनां
तात्स्थ्यात्तत्रोपचर्यते ॥ १८८ ॥

भवत्येव बुद्धिगुणत्वं प्रागुक्तरीत्या धर्माधर्मस्वरूपस्य कर्मणः गुणिनश्च सकाशान्नगुणस्य व्यपगमः। तत्र तु प्रकृतौ तत्कर्म स्थितमित्युपचर्यते। कस्मादुपचारबीजादित्याह देहाक्षफलभूमीनां तात्स्थ्यात्। यतः प्रकृतिस्था एव भोक्तृणां शरीरेन्द्रियार्थभोगभूमयः तस्मात्कर्माऽपि तत्स्थत्वेनोक्तम्। बुद्धिस्थत्वेऽपि कर्माशयस्य बुद्धेस्तत्स्थत्वात् प्रकृतिस्थाशयत्वमात्मनामुक्तमित्यविरोधः ॥ १८८ ॥

वृत्तिः ।

दृश्यन्ते च तात्स्थ्यादेरुपचारबीजादनेकविधाश्शब्दानामौपचारिक्यः प्रवृत्तयः । तथाहि ।

**आधारे कारणे कार्ये**
**समीपे चोपकारके ।**
**धर्माद्यनुकृतौ चेति**
**लक्षणां सूरयो जगुः ॥ १८९ ॥**

मुख्यार्थानुगमानुपपत्तेर्गौणार्थप्रतीतिकारिणीं लक्षणां सूरयस्तद्विदो जगुरूचुः । कुत्र कुत्रेत्याह । **आधार** इत्यादि । तत्र तावदाधारे यथा—मञ्चाः क्रोशन्तीति । अत्र हि मञ्चानामधिकरणभूतानामचैतन्याद्रोदनलक्षणेन क्रोशनार्थेनाननुगमात् आनर्थक्यात् तत्स्थानां बालानां सम्बन्धि यत्क्रोशनं तत्तेषु तात्स्थ्यात्मकलक्षणयोक्तम् । कारणे तु लक्षणा यथा—शालीन् वृष्टो देव इति । अत्र हि मुख्यया वृत्त्या शालिवर्षणस्यार्थोऽनन्वित इति लक्षणया कालोचितायां सम्यक् वृष्टौ शालिकारणभूतायां प्रतिबन्धवैकल्ययोरसम्भवात् सम्पन्नमेव शालिलक्षणं कार्यमुपचर्यते । इति । अथवा आयुर्घृतमिति आयुष्कारणे घृते आयुषस्तत्कार्यस्योपचारः । एवं कार्येऽपि लक्षणा

सम्भवति यथा—ऊर्णाः प्रावरणाः केचित् । अपरे तूलं वास इति अत्र किल सूत्रभावं विना कम्बलपटादिभावेनापरिणतयोः ऊर्णातूलयोर्मुख्यया वृत्त्या प्रावरणमसम्भावितं तत्कार्यस्य कम्बळपटात्मन एव तदुपपत्तेः । ततश्च कम्बळे पटादौ च तयोरूर्णाकार्पासयोरुपचारः कृतः । समीपार्थलक्षणा यथा—गङ्गायां घोष इति । अत्र हि मुख्यया वृत्त्या प्रवाहजलरूपं स्रोतः गुणवृत्त्या वा तद्विशेषं यदिकिंचिद्गङ्गाशब्दः कथयेत् तदस्याऽसम्भाव्यैव ग्रामाधिकरणता इति सामर्थ्यात्तत्सामीप्यं लक्षणात्वेन व्यवतिष्ठते । उपकारकेऽपि लक्षणा दृश्यते यथा—भिक्षा वासयन्ति—कारीषोऽध्यापयतीति । अत्र किल न भिक्षास्तत्प्रावरणं[1] चालं करेण गृहीत्वा गमननिषेधं कुर्वन्ति । नाऽपि सर्वथाऽस्मात्स्थानात् न गन्तव्यामिति प्रणयवचनैरवस्थापयन्ति । अपितु प्रचुरान्नव्यञ्जनवत्त्वस्तृप्तिहेतुत्वात् निवसनक्रियायामुपकारकत्वेन सम्भाव्यमानाः प्रयोजकत्वेनोपचर्यन्ते । एवं च न कारीषोऽङ्ग पुत्राऽधीष्वेति ब्रुवन् माणवकमध्यापयति । नाऽपि तच्छरीरमनुप्रविश्य भूतवेताळादिभिरिवैनं पाठयति ॥ शीतापनोदहेतुतयाऽध्ययनाविध्युपकारकत्वेन आनुकूल्यं भजंस्तत्प्रयोजकत्वेनोपचरितः ॥ किञ्च धर्माद्यनुकृतावित्यादिग्रहणादाकारानुकृतौ जात्यनुकृतौ वा ।

---

१. वस्त्रमित्यर्थः ।

तत्र धर्मानुकृतौ यथा।सिंहो माणवकः गौर्वाहीकः । इति । अत्र किल लक्षणया सिंहधर्माणां शौर्यादीनामनुकृत्यर्थं माणवके सामानाधिकरण्येन सिंहशब्दः प्रवृत्तः । मुख्यया वृत्त्या तस्य सिंहत्वस्याऽसम्भवात् । वाहीकेति । पुंसि पृष्ठवहनासम्भवात् तिष्ठन्भक्षणगच्छन्मूत्रादिबलीवर्दगतधर्मानुकरणाय गोशब्दस्सामानाधिकरण्येनोपचरितवृत्तिरेव प्रवृत्तः । मुख्यया वृत्त्या तथाऽनन्वयात् । एवमाकारानुकृतौ यथा—सूचिभेद्यैस्तमोभिरिति । अत्र हि तमसोऽमूर्तित्वात् सूचिभेद्यत्वं तमसो मुख्यवृत्त्याऽननुगतम् अतो लक्षणयाऽतिनिबिडत्वं वक्तुमाकृतिस्सूचिभेद्यत्वेनानुकृता । एवं नाम घनानि तमांसि यद्वस्त्रादिवत्सूच्यादिना भेदमप्येषां कर्तुं शक्यमित्यर्थः ॥ १८९ ॥

दीपिका ।

प्रसक्तानुप्रसङ्गेन लक्षणाभेदाः कथ्यन्त इति दर्शयितुं आधारसूत्रमवतारयति । दृश्यन्ते चेत्यादि ॥ १८९ ॥

वृत्तिः ।

तदियता प्रासङ्गिकमुपचारबीजमुदाहृत्य प्रकृतमुपसंहारक्रममनुसरन्नाह ।

**एवं गुणादिसर्गाणां**
**परार्धे गुणकारणम् ।**

कला लेढि कलां माया
स्वाधिकारपराङ्मुखी ॥ १९० ॥

तन्निवृत्तौ निवर्तन्ते
देवास्तदधिकारिणः ।
सर्गस्थित्यादिको यस्मात्
अधिकारस्तदाश्रयः ॥ १९१ ॥

गुणादिसर्गाणां प्रागुक्तमानेन परार्धसंज्ञके काले व्यतीते गुणकारणमव्यक्ताख्यं कला स्वात्मन्युपसंहरति । तामपि कलां स्वस्मादधिकारात्पराङ्मुखी स्वव्यापारोपसंहारेच्छुः माया स्वात्मन्येवोपसंहरति । तस्य च मायाधिकारस्य निवृत्तौ तदधिकृतास्सर्वे निवर्तन्ते । विरतव्यापारा आसते । यस्मात्तेषां सर्गस्थित्यादिरूपोऽधिकारस्सर्वो मायाश्रयः तद्विरतौ कथं तेषां न विरामस्स्यात् ॥ १९०—

दीपिका ।

सूत्रद्वयं व्याचष्टे गुणादिसर्गाणामित्यादि । अत्र चाव्यक्तकालयोरुपसंहारो रागादीनामपि स्वकारणोपसंहारस्योपलक्षणत्वेन ज्ञेयः । तस्यचेत्यादि । तत्र परमन्त्रेश्वरा अधिकारत्यागात् परमुक्तिभाजः । अन्येतु भुवनेश्वरयोग्यतानुगुणं प्रळयकेवलिनो विज्ञानकेवलिनो मुक्ता वा भवन्ति ॥ १९०—१९१ ॥

वृत्तिः ।

इत्थमशुद्धेऽध्वनि प्रतिसञ्चर उक्तः । इदानीं शुद्धाध्वनि वक्तुमाह ।

**एवं मन्त्रेशमुख्येषु**
**विशत्स्वाभिमतं पदम् ।**
**विद्यामत्ति सदातत्वं**
**तद्बिन्दुर्बैन्दवं ध्वनिः ॥ १९२ ॥**

**नादमत्ति पराशक्तिः**
**शक्तिमीष्टे स्वयं हरः ॥ १९२१ ॥**

अनेनैव क्रमेण मन्त्रेश्वरप्रधानेषु मन्त्रमहेश्वरेष्वनन्तादिषु निर्वर्तिताधिकारित्वात् परकैवल्यप्रेप्सुषु सत्सु विद्यातत्वं सदाशिवतत्वे समुपसंहृतवैभवं भवति । तच्च बैन्दवे । बैन्दवमपि नादात्मनि । नादोऽपि परस्यां शक्तौ तां तु शक्तिं साक्षात्परमेश्वरस्स्वात्मन्युपसंहृत्य कलाप्रसवां न करोति ॥ १९२ ॥

दीपिका ।

इदानीम्मायोपसंहारकाल एव शुद्धाध्वनोऽपि संहारकाल इति दर्शयन् एवमित्यादिसूत्रं व्याचष्टे । अनेनैवेत्यादि । परस्यांशक्ताविति

महामायात्मिकायामित्युक्तम् । स्वात्मन्युपसंहृत्य कलाप्रसवां न करोतीति तामधितिष्ठतीति यावत् ॥ १९२ ॥

वृत्तिः ।

एवं च कृते सति परमेश्वरः ।

भविनां विश्रमायैवं
मायायाश्च परश्शिवः ।
आकलय्य स्वदृक्छक्त्या
स्वापं सृष्ट्यै प्रवर्तते ॥ १९३ ॥

निजया ज्ञानशक्त्या भवभ्रमणखिन्नानां भविना यथोचितभोगोपयोगितनुकरणभुवनाद्यनेककार्यप्रसवादपचितशक्तेश्च मायाख्यस्योपादानकारणस्य विश्रमाय स्वापमव्यापृतत्वम् । इयता कालेनैते भविनो विश्राम्यन्ति । उपचितसामर्थ्यं च पुनस्सर्गक्षमं मायाख्यं कारणं सञ्जायत इत्येवमाकलय्य परमेश्वरस्सृष्ट्यर्थं प्राग्वत् प्रवर्तते ॥

वृत्तिः ।

यथाचैतान्युक्तानि स्वस्मिन् कारणे विलीयन्ते । एवमन्यदपीत्याह ।

एवं तत्वानि भावाश्च
भुवनानि वपूंषि च ।

शुद्धाशुद्धाध्वनोर्विप्र
　　व्याख्यातानि समासतः ॥१९४१/२॥

अनेनैव क्रमेणान्यदपि तत्त्वभावभुवनादि सितासिताध्ववर्ति यत्किञ्चित्तत्स्वस्मिन् कारणे प्रलीनं संक्षेपतो व्याख्यातं ज्ञेयम् ॥ १९४२ ॥

दीपिका ।

एवं तत्वानीत्यादि व्याचष्टे । अनेनैव क्रमेणेत्यादि । अयमभिप्रायः पूर्वोक्ताशुद्धतात्विकशरीरवत् शुद्धमपि सूक्ष्मशरीरं महामायात्मकं शक्त्यवस्थाविशेषरूपं तावत्तत्त्वात्मकमस्तीति किन्निमित्तमेतच्छुद्धं सूक्ष्मशरीरं कल्प्यत इति चेत् दीक्षायामेवोपयोगार्थं तथाऽहि आत्मनो व्यापकत्वात् दीक्षायां ग्रहणादि नोपपद्यत इति यथा मायीयेऽध्वनि सूक्ष्मदेहद्वारा प्रतिस्थानं सङ्ग्रहयोजनादि क्रियते । एवं शुद्धाध्वनि वाक्शक्त्यात्मकसूक्ष्मदेहद्वारेण तत्तत्स्थानेषु संयोजनग्रहणादि क्रियत इति पूर्वोक्तकालादितत्वसमानाभिधानाच्च तेषां न तत्त्वातिरेकप्रसङ्गः अत एवात्राऽशुद्धाविति यथा मायीयेध्वनि ॥ १९४१/२ ॥

वृत्तिः ।

अत्र मुनिः प्रश्नयति ।

विद्यापञ्चाणुदेहश्च
　　बिन्दुर्नादोऽथ कारणम् ।
पञ्चस्कन्धः परो मार्गः
　　क भावाः प्रत्ययास्स्थिताः ॥१९५१/२॥

शुद्धाशुद्धयोरध्वनोस्तत्वभावभूतभुवनानां संक्षेपादेवंविधस्स्वस्मिन् कारणे प्रतिसञ्चर इति यद्भगवताऽस्माकमादिष्टं तत्र विद्यासदाशिवबिन्दुनादपरशक्तिरूपे शुद्धेऽध्वनि भावाः प्रत्ययाः क्व स्थिता इति प्रश्नार्थः ॥

दीपिका ।

कुत्र कुत्र कानि तत्वानि सूक्ष्मरूपेण स्थितानीति मुनिश्चोदयतीत्याह । अत्रेत्यादि । भावाः प्रत्ययास्स्थिता इति । भावादिकारणा बुद्धिः तदुपलक्षितानि चान्यानि तत्वानीत्यर्थः ॥ १९१३ ॥

वृत्तिः ।

अत्र सिद्धान्तः ।

**नादस्सूक्ष्मः कला काल-**
**रागयुग्मे सपूरुषे ।**
**स्थूलः पञ्चकलो नादः**
**पञ्चतत्वाश्रयो मुने ॥ १९६३ ॥**

**प्रधानादिचतुर्ग्रन्थि**
**निधिर्बिन्दुश्चतुष्कलः ।**
**गर्वे मनोमुखा देवाः**
**बुद्धौ भावादयस्स्थिताः ॥१९७३॥**

पञ्चमन्त्रतनुर्देव-
स्स्थितस्तन्मात्रपञ्चके ।
सूक्ष्मभूतेषु मन्त्रेशाः
मन्त्रास्स्थूलेषु संस्थिताः ॥१९८॥

इदमत्र तात्पर्यं पञ्चस्कन्धस्याऽस्य शुद्धस्याध्वनो व्याप्यत्वेनाऽशुद्धोऽध्वा व्यवस्थितः । तत्र चोच्यमानवद्विशिष्टव्याप्तेर्बिन्दुतत्वस्यान्तर्गतत्वेन भावप्रत्ययानामवस्थितेर्न कश्चिद्विरोधः । तथाहि सूक्ष्मः परोनादः कलेति । कलाव्याप्यत्वादुपचारतः[1] कलाशब्दसामानाधिकारण्येनोक्तः । यथा वा निखिलनादबिन्द्वादिप्रमेयाङ्गीकारेण तत्कारणं परनादस्वरूपमवस्थितमेवं समस्तासिताध्वक्रोडीकारेण कलास्थितेति तद्भावेन तस्या उपचारः कृतः । कालयुग्मे नियतिकालात्मके । रागयुग्मे विद्यारागस्वरूपे **सपूरुष इति** । पुरुषतत्वसाहिते । एतानि पञ्चतत्वान्याश्रयो यस्य स पञ्चतत्वाश्रयः पञ्चकलस्स्थूलो नादः । अनेनैव च क्रमेण प्रधानगुणमहदहङ्कारलक्षणं यद्ग्रन्थीनां पाशरूपाणां प्रकृतीनां चतुष्टयं तन्निधिरिति तद्गर्भः प्रागुक्तनिवृत्यादिकलाचतुष्टयात्मको बिन्दुर्बोद्धव्यः । एतदन्तर्गते च गर्वेऽहङ्कारतत्वे मनसा सह करणदशकं बुद्धौ तु

१. व्यापकत्वादिति पाठः ।

धर्मादयो भावाः तदुपादानाश्च प्रागुक्ताः प्रत्ययास्स्थिताः । इत्थं च सदाशिवनाथः पृथिव्यादितन्मात्रपञ्चकाधिष्ठातृ- सद्योजातादिपञ्चमन्त्रतनुस्तन्मात्रपञ्चके स्थितः । सूक्ष्मेषु च सूक्ष्मदेहारम्भकेषु भूतविशेषेषु मन्त्रेशानां व्याप्तिः मन्त्राणां स्थूलेषु पृथिव्यादिष्वित्येवं शुद्धोऽप्यध्वैतत्प्रमेय- गर्भीकारेणाऽवस्थित इत्यदोषः ॥ १९.. ॥

दीपिका ।

सिद्धान्तसूत्रं व्याचष्टे इदमत्रेत्यादि व्याप्यव्यापकशुद्धाध्वनो या- वन्तो भेदास्तावन्तस्सूक्ष्मरूपाश्शुद्धेऽप्यस्मिन् पञ्चस्कन्धात्मके मार्गे स्थिता इत्यर्थः । तत्र कानि तत्वानीति दर्शयति तथाहीत्यादि । प्रधानगुण- महदहङ्कारलक्षणमित्यादि । एषां च कार्ययोनित्वात् ग्रन्थिशब्देनोक्त इत्यर्थः ॥ १९८३ ॥

वृत्तिः ।

अथ व्याख्यातार्थोपसंहाराय व्याख्येयस्य क्रियापा- दस्य चोपक्षेपाय च श्लोकः ॥

इति । यदणुनिरोधिध्वान्तबीजाद्यदृष्टं
पशुमतमृतदाभिः पाशजालं सुभूरि ।
तदुपशमनिमित्तं वक्ष्यमाणाक्रियातो
रुचदविहतशक्तिश्शांभवी मन्त्रसंपत् ॥

इति श्रीमन्मृगेन्द्रे विद्यापादस्समाप्तः ।

---

१. स्कन्धानीति पाठभेदः ।

इत्येवमुक्तेन प्रकारेणाणून् पशून् निरुणद्ध्यवश्य-मित्यणुनिरोधि ध्वान्तबीजादि मलकर्ममायामहेश्वररोध-शक्त्यात्मकमनन्ताण्वावारकत्वेनानेकशक्तियोगात्सुष्ठु भू-यानतिशयेन भूयिष्ठं पशुमतेष्वनीश्वरशास्त्रेषु सृता प्रसृता दृक् ज्ञानं येषां तैरदृष्टमनवगतं पाशानां सम्बन्धि बन्धन-हेतुत्वाज्जालमिव जालं तस्योपशमनहेतोरभिधास्यमान-क्रियादेर्हेतुभूतादेव दीप्यमानाऽप्रतिहतप्रभावा शिवमन्त्र-समृद्धिः । अयमाशयः । वक्ष्यमाणदीक्षाक्रियाक्रमोत्तेजि-तसहजसामर्थ्यया मन्त्रसमृद्ध्या दीक्षादिकर्मपाशोपशान्ति-निमित्ततामेत्याभ्युदयाय भवतीति यस्मादचिन्त्यानुपम-महिम्नां मन्त्राणां विषापहारादाविव मलकर्ममायीयपाश-च्छेदनेऽपि सामर्थ्यमव्याहतम् । तथाचाह गुरुस्सिद्धस्स-द्योज्योतिः मन्त्रतत्वकरणीयनिरूपणावसरे "[१]विषवन्नि-कृन्तति पशोस्तूर्णं मलकर्मयोनिकार्याणि । आराधितं तु सिद्धीर्यच्छति विविधाश्च साधकेन्द्रेभ्यः" इति ।

किमप्यनुपयोगि यद्यदपि किञ्चिदप्रस्तुतं
प्रमेयमधिकृत्य तन्नखलु निष्फलं गर्जितम् ।
अपित्ववसरोचितप्रकृतवस्तुमीमांसना-
न्मृगेन्द्रविवृताविह स्फुरतु तद्विदामादरः ॥

---

१. अष्टप्रकरणे तत्वसंग्रहे पञ्चत्रिंशश्लोकः ।

शाङ्करकण्ठश्रीम-
द्विद्याकण्ठादनुग्रहं लब्ध्वा ।
नारायणकण्ठ इमां
तत्पुत्रो व्यरचयद्वृत्तिम् ॥

इति श्रीमद्भट्टविद्याकण्ठात्मजश्रीभट्टनारायणकण्ठविरचितायां
मृगेन्द्रवृत्तौ भुवनाध्वप्रकरणम् ॥

॥ समाप्तम् ॥

विद्यापादस्समाप्तः ।

---

दीपिका ।

इत्यादिश्लोकं व्याचष्टे इत्येवमित्यादि । तत्र क्रियात इत्यादिना क्रियापादस्य सामान्येनोपक्षेपः क्रियते । मन्त्रसम्पदित्यनेन तु तत्राऽपि प्राधान्येन वक्ष्यमाणस्य मन्त्रोद्धारणस्येति शुभम् ॥

पाषण्डापजयं सकाव्यतिलकं भक्तप्रकाशादिकं
चक्रे वाक्यपदप्रमाणनिपुणः श्रीजन्यया यस्स्वयम् ।
सोऽयं विप्रशिखामणिश्श्रुतिनिधिश्श्रीमानघोरश्शिवः
पादेऽस्मिन्नकरोन्मृगेन्द्रविवृतेर्विद्याभिधे दीपिकाम् ॥

इत्यघोरशिवाचार्यविरचितायां मृगेन्द्रवृत्तिदीपिकाया-
मध्वप्रकरणं समाप्तम् ॥

विद्यापादस्समाप्तः ।

---

॥ श्रीः ॥

# अथेदानीं योगपादः ।

(श्रीमन्नारायणकण्ठकृतवृत्तिसहितः)

अत्र तावत् "अस्मात्प्रविततादन्धात्परसंस्थानिरोधकात् । दीक्षैव मोचयत्यूर्ध्वं शैवं धाम नयत्यपी"ति श्रुतेर्दीक्षाया एव निरतिशयकैवल्यावाप्तिहेतुत्वात् तस्याश्च सर्वस्या एव पशुपाशेश्वरस्वरूपनिरूपणोपायगतेन समस्ताध्वव्याप्तिप्रदर्शकेन मन्त्रमन्त्रेश्वरादिमाहात्म्यनिश्चायकेन ज्ञानेन विना निष्पादयितुमशक्यत्वात्तदेव बोधको विद्यापादस्सपरिच्छदः पशुपाशेश्वरस्वरूपनिरूपणाय प्रथममुक्तः । ततः क्रियापादोऽप्यनेकविधसाङ्गदीक्षाविधिप्रदर्शनायोपदिष्टः । सम्प्रति तु ज्ञानक्रियाक्रमज्ञेनापि साधकपुत्रकादिना समाध्याद्यनभ्यासादनात्मविदा सता यथोपदिष्टस्वस्वव्यापारानुष्ठानं सम्पादयितुं न शक्यमिति प्राणायामाद्यङ्गसहितो योगज्ञप्तये योगपादप्रक्रमः । अत्र च प्रक्षीणपाशस्याणोः परमेश्वरस्वरूपावभासनं तात्पर्यमिति तन्त्रवस्तुत्रयेण पशुपाशेश्वरलक्षणेन सम्बन्धो व्यवस्थापितः । प्रयोजनं च तदुपन्यस्तं ज्ञेयम् । सौत्रोऽपि स-

म्बन्धः "त्रिपदार्थं चतुष्पाद"मित्युद्देशसूत्रप्रक्रमाल्लब्धः । वाक्यात्मकश्च चर्यायोगक्रियापादैर्विनियोगोऽभिधास्यते" इत्यादिभिर्वाक्यैः । प्राकरणिकोऽपि समयिनः पुत्रकस्य गृहीताभिषेकयोश्च साधकाचार्ययोः अत्रश्योपयोगि योग-प्रकरणमित्युक्तमेतत् । पाटलिकस्त्वनन्तर पादपटलान्ते "सुरयोगिजुष्ट"मित्यनेनोपक्षिप्तः ॥

अथानात्मवतां मत्वा
स्वाधिकारं सुदुष्करम् ।
यतेरन्नात्मवन्तो ये
देशिकाद्या जिगीषवः ॥ १ ॥

आत्मा विद्यते येषां ते आत्मवन्तः आत्मारामत्वेन नियुक्तत्वात् साक्षात्कृताऽऽत्मस्वरूपाः । नित्ययोगे मतुप् । किञ्चैवंविधानां देशिकपुत्रकसमयिसाधकानां निजनिजा-धिकारकरणमर्थं दुष्करं बुध्वा ते देशिकप्रभृतय उत्तरोत्तर-भूमिका जयैषिणः तदर्थं यतेरन् प्रयत्नवन्तस्स्युः इति विधौ लिङ् ।

अथ तावत्किमिदमात्मवत्वं नामेत्याह ।

तदात्मवत्वं योगित्वं
जिताक्षस्योपपद्यते ।

## प्राणायामाद्यनुष्ठाना-
## ज्जिताक्षत्वं शनैश्शनैः ॥ २ ॥

युज्यते शिवत्वलक्षणया स्वस्वरूपाभिव्यक्त्याऽवश्यमिति योगी । तस्य भावो योगित्वं आत्मवत्वाविनाभावि । अत एव "युजिर्योग" इत्यस्माद्धातोर्योगशब्दो ज्ञेयः । न तु "युज्समाधाविति" । अस्य तदङ्गत्वेनेष्टत्वात् । एतच्च जिताक्षस्येति तस्य वशीकृतेन्द्रियग्रामस्यान्यदपि कार्यन्निर्वहति । किं पुनर्योगित्वम् । तथा-चाहुः । "इन्द्रियाणां विचरतां विषयेष्वपहारिषु । संयमी यत्नमातिष्ठेद्विद्वान् यन्तेव वाजिनां" इति । जितेन्द्रियस्यत्वचिरादेव स्वरूपलाभः । उक्तं च सनकेन "इन्द्रियाणीन्द्रियार्थांश्च तन्मात्राणि मनस्तथा । नियम्य गतिसङ्कल्पः परमात्मनि लीयते इति । कथं तज्जिताक्षत्वं स्यादित्याह **प्राणायामाद्यनुष्ठानादिति** । वक्ष्यमाणलक्षणप्राणायामाद्यङ्गसप्तकाभ्यासाज्जितेन्द्रियत्वं शनैः क्रमेण भवति । द्वितीयश्शनैश्शब्दोऽभ्यासविषये शनैर्वक्ष्यमाणमात्राविवर्धनक्रमेण प्राणायामादयोऽनुष्ठेयाः । यस्मादतिमात्रमभ्यस्यतां वातगुल्मगुदोदावर्तोर्ध्वश्वासोन्मादस्मृतिमोषादयो योगविघ्नहेतवो दोषा उद्भवेयुः ॥ २ ॥

अथ साङ्गं योगमुपदेष्टुमाह ।

प्राणायामः प्रत्याहारो
धारणा ध्यानवीक्षणे ।
जपस्समाधिरित्यङ्गान्य-
ङ्गी योगोऽष्टमस्स्वयम् ॥ ३ ॥

प्राणायामादीनि सप्ताङ्गानि । योगस्तु स्वयमष्टमोऽङ्गित्वेन ज्ञेयः ॥ ३ ॥

अथैषां प्राणायामादीनां लक्षणं वक्ति ।

प्राणः प्रागुदितो वायुः
आयामोऽस्य प्रखेदनम् ।
प्रेरणाकृष्टिसंरोध
लक्षणः क्रतुदोषनुत् ॥ ४ ॥

प्राणनादिवृत्तिभेदादेकस्याऽपि वायोः प्राणापानादिपञ्चभेदत्वं तद्वृत्तयश्च विद्यापादे प्रदर्शिताः। तादृग्विधस्य तस्य वायोः खेदनं स्वातन्त्र्यभावादाधिक्येन बहिः प्रेरणम् । तस्यैवचान्तः तथाकर्षणं संरोधश्च कुंभीकरणं रेचनप्रवेशनविरामः एवंलक्षणं यत्प्राणादीनां प्रखेदनं स प्राणायामः । क्रतुशब्देनेन्द्रियाणि सङ्कल्पो वा तेषां दोषाः विहितानतुष्ठाननिषिद्धाचरणकृताः तान्नु-

दत्युपशमयतीति तद्दोषनुत । उक्तं हि "दह्यन्ते ध्मायमानानां धातूनां हि यथा मलाः । प्राणायामैस्तथा दोषाश्शाम्यन्तीन्द्रियगोचरा" इति ॥ ४ ॥

अथ प्रत्याहारस्य लक्षणम्—

ततस्सुखलवास्वादे
तेषां वृत्तस्य चेतसः ।
प्रत्याहारो विधातव्यः
सर्वतो विनिवर्तनम् ॥ ५ ॥

ततः प्राणायामाभ्यासादनन्तरं प्रत्याहारः कार्यः । किंरूपोसावित्याह तेषामिति तेषामिन्द्रियाणां सम्बन्धी वैषयिको यस्सुखलव आनन्दलेशस्तदास्वादे वृत्तस्य तत्परस्य चेतसस्सर्वेभ्य एवेन्द्रियार्थेभ्यः प्रत्याहरणं प्रत्याहारः विधेयः ॥ ५ ॥

इत्थमनुष्ठितः किं स्यादित्याह ।

तेनेन्द्रियार्थसंसर्ग
विनिवृत्तोंश्रितो मतिः ।
धारणायोग्यतामेति-
पदे स्वेच्छाप्रकल्पिते ॥ ६ ॥

तेन प्रत्याहारेण चितश्चित्तस्येन्द्रियार्थसंयोगात्प्रत्याहृतत्वाद्या विनिवृत्तिः स्वव्यापारविरतिस्तस्या हेतुभूतायाः स्वेच्छाप्रकल्पिते पदे वक्ष्यमाणधारणायोग्यतां मतिरभ्येति। नचात्र मतिर्बुद्धिः अपि तु मननं मतिस्सङ्कल्पाख्यश्चेतसो व्यापारः तस्यैव धारणाश्रवणात्। यदाह पतञ्जलिः "देहबलश्चित्तस्य धारणा" इति। तथा "धारणासु मनसोयोग्यते"ति ॥ ६ ॥

ध्यानं वक्तुमाह—

**चिन्ता तद्विषया ध्यानं**
**तच्चादिष्टं मुहुर्मुहुः ॥ ६½ ॥**

धारणारुद्धस्य चित्तस्य त्रिनेत्रपञ्चवक्त्राद्याकारविषया या चिन्ता तद्ध्यानम्। तच्चादिष्टमिति "हेमाळिहिमरत्नाभवक्त्राम्बुजचतुष्टयम्" इत्यादिनाऽवसरान्तरेषु मुहुर्मुहुरुक्तम् ॥ ६½ ॥

अथ समाधेर्लक्षणम्—

**तदेकतानतामेति**
**स समाधिर्विधीयते ॥ ७ ॥**

तद्ध्यानमेकतानतां ध्येयैकनिर्भासत्वं यदाभ्येति तदा

समाधिरिति शास्त्रेषु प्रदृश्यते यदाह पतञ्जलिः "तदेवार्थ-मात्रनिर्भासं स्वरूपशून्यमिव समाधि"रिति ॥ ७ ॥

वृत्तिः ।

जपस्य लक्षणं कथयति ।

**जपस्तद्भाषणं ध्येय**
**सम्मुखीकरणं मुने ॥ ७½ ॥**

मानसस्यान्तस्संजल्परूपस्योपांशुसंज्ञस्य च स्वसं-वेद्यलघुध्वनेर्भाष्यस्य च श्रूयमाणस्य मन्त्रस्य ध्येयसम्मु-खीकरणाय आवर्तनं जप इत्युक्तम् ॥ ७½ ॥

ऊहमिदानीं लक्षयितुमाह—

**ऊहोऽभिवीक्षणं वस्तु**
**विकल्पानन्तरोदितः ॥ ८ ॥**

"यत्तदूहं मतिः पुंसां भ्रमत्यन्धेव मार्गति । तत्कु-र्वन्नुच्यते प्राण" इत्यनेन विद्यापादे प्राणाख्यस्य वायो-स्सौक्ष्म्याच्च लक्ष्यन्नुदन्नूहन् यदुक्तं तथा च श्रीमत्स्वायम्भुवे "तदनूहःप्रवर्तते"[1] । इति । स ऊहो वीक्षणात्मकः तत्तद्रू-

---

1. प्रत्यचादिप्रकरणे द्वाविंशश्लोकः ।

मिकावाप्तितो लब्धे वस्तुनि असन्तोषकृताद्विकल्पात्समन-न्तरमुदित उद्भूतो ज्ञेयः ॥ ८ ॥

अथ कस्मिन्नूहोऽसौ कार्ये योगिन उपयोगीत्याह ।

**यदा वेत्ति पदं हेय**
**मुपादेयं च तत्स्थितेः ।**
**तत्पोषकं विपक्षं च**
**यच्च तत्पोषकं परम् ॥ ९ ॥**

तस्योहस्य स्थितिरवस्थानं ततो हेतोः क्रमेण **यदेति** यस्मादर्थे यस्मात्कारणाद्योगी समुत्पद्यमानः यथा-वस्थितसकलवस्त्ववभासनया हेयं पदं तस्य च पोषकं तद्विपक्षकं विपक्षपोषकं च वेत्ति । यथा उपादेयं तत्पो-षकं विपक्षकं विपक्षपोषकं च जानाति अत एव प्रकृष्टं योगाङ्गम् । यथोक्तं मालिनीविजये “योगाङ्गत्वे समानेऽपि तर्को योगाङ्गमुत्तमम् । हेयाद्यालोचनाये”ति श्रीमत्स्वाय-म्भुवेऽपि “अनेन लक्षयेद्योगी योगसिद्धिप्रवर्तकम् । नि-रोधकं च यद्वस्तु बहुधा संव्यवस्थितम्” इति ॥ ९ ॥

इत्थं योगाङ्गान्युक्त्वा फलमेषामभिधातुमाह ।

येषु व्यस्तसमस्तेषु
कृतयत्नस्य योगिनः ।
विभान्ति शक्तयो विश्वं
व्याप्य भानोरिव त्विषः ॥ १० ॥

न तमीष्टे नरः कश्चित्
न रक्षोदानवामराः ।
रोरुचानमतीत्यैतान्
दृक्क्रियाप्राणरोचिषा ॥ ११ ॥

येषु प्राणायामादिष्वङ्गेषु व्यस्तसमस्तेषु कृताभ्यासस्य योगिनः सर्वाश्शक्तयो विवस्वत इव दीप्तयो विश्वं व्याप्य भान्ति भ्राजन्ते। सर्वकार्येषु अयमव्याहतसामर्थ्यस्स्यादित्यर्थः। नच तं अत्युग्रतेजस्त्वात् देदीप्यमानं संतं राक्षसदानवत्रिदशमनुजेभ्यः कश्चिदप्याक्रामति। प्रकृष्टैर्ज्ञानक्रियावीर्यतेजोभिरेतान् अतीत्यातिक्रम्य स्थितत्वादिति । रोरुचानमिति विशेषणद्वारेण हेतुः ॥ १०–११ ॥

अत्र मुनिः प्रश्नयति—

निवृत्तेर्मनसो हेतुः
संसर्गात्प्राणवेदनम् ।

निवृत्तिर्धारणादीनां
मूलं सर्वस्य तत्त्वतः ॥

विस्तरेण सुरश्रेष्ठ
विप्रकृष्टं च यत्स्थितम् ।
यदन्यत्साधनं किञ्चित्
योगसिद्धेश्च कथ्यताम् ॥१२-१३॥

इन्द्रियार्थसंसर्गान्मनसो या निवृत्तिः तस्याः किल प्राणायामाः कारणत्वेनेष्यन्ते । प्राणादिजयाद्धि मनसो वश्यता भवति । सा च मनस इन्द्रियार्थेभ्यो निवृत्तिः धारणादीनां हेतुः ततश्च हेतोस्तत्प्राणखेदनं सर्वस्य धारणादेर्मूलमिति कृत्वा विस्तरेणोच्यताम् । यच्चान्यद्योगसिद्धेर्विप्रकृष्टं अङ्गाङ्गितया साधनं स्थितं हितमितजीर्णाशननिर्बाधस्थानासनादि शौचादि वा तदपि भगवन्नमरेश्वरास्मभ्यमभिधीयतामिति मुनेः प्रश्नः ॥ १२–१३ ॥

अथात्रोत्तरम् —

न शक्यं विस्तराद्वक्तुं
तत्प्रसंगभयाद्विधेः ।

**प्रश्नस्यावश्यवाच्यत्वात्**
**तथाप्युद्देश उच्यते ॥ १४ ॥**

विधिप्रकाशकत्वेनोपचारात् शास्त्रेऽपि विधिव्यपदेशः । विस्तरेण वक्तव्येऽभिधीयमाने शास्त्रस्यातिविस्तरप्रसङ्गस्स्यात् इति विस्तरेण तावदभिधेयं वक्तुमयुक्तं यथायथं विस्तरभीरवो हि श्रोतारः तथापि अवश्यवक्तव्यत्वात्प्रश्नस्योद्देशस्संक्षिप्तसकलविधिनिरूपणं क्रियते ॥ १४ ॥

तत्रादितस्तदङ्गतया स्थितं शौचं संक्षेपतो वक्तुमाह ।

**मूत्राद्युत्सृज्य विधिव**
**देकार्धदशसप्तभिः ।**
**मृद्भिर्लिंगगुदासव्य**
**हस्तयुग्मानि शौचयेत् ॥ १५ ॥**

**द्विर्व्रती त्रिरपः पीत्वा**
**द्विर्विमृज्याननं स्पृशेत् ।**
**खबाहुनाभिहृत्कानि**
**द्विस्त्रिर्वा शौचिताधरः ॥ १६ ॥**

विण्मूत्रोत्सर्गं विधिवदिति सामान्यशास्त्रविध्यनतिक्रमेण कृत्वा। यथोक्तं वासिष्ठे "अवकुण्ठितशिराः भूमिमयज्ञीयैस्तृणैरन्तारितां कृत्वा मूत्रपुरीषे कुर्यात्। उदङ्मुखोऽहनि नक्तं दक्षिणाभिमुख" इति ततः एकपञ्चदशसप्तसंख्याभिर्मृद्भिः यथासंख्यं शिश्नं पायुं वामहस्तं उभौ च पाणी शौचयेत्। द्विर्व्रतीति। समयिपुत्रकादीनां चतुर्णामपि चर्यापादे व्रतित्वं वक्ष्यति। ततश्चायमव्रातिविषयश्शौचविधिः। व्रतीतु तदेव द्विगुणमाचरेत् **त्रिरपः पीत्वेति** आचम्य द्विश्चास्यं परिमृज्य खानि इन्द्रियच्छिद्राणि बाहुनाभिहृच्छिरांसि च स्पृशेत्। द्वौ वारौ त्रीन् वारान् वाऽधरोष्ठौ क्षालयेत्॥ १५-१६॥

तदनन्तरं च—

**हितजीर्णाशनस्वस्थः**
**त्रिकुड्यावेष्टिते गृहे।**
**बाधाशून्ये वनादौ वा**
**स्वासनस्थ उदङ्मुखः॥ १७॥**

**नमस्कृत्य महेशानं**
**उमास्कन्दगणाधिपान्।**

ऋजुग्रीवशिरोवक्षाः ।
नासाग्राहितदृग्द्वयः ॥ १८ ॥

पार्ष्णिभ्यां वृषणौ रक्षन्
दन्तैर्दन्तानसंस्पृशन् ।
विष्टब्धदेहो दन्ताग्रे
जिह्वामादाय सुस्थितः ॥

रेचयेच्छक्तिपर्यन्तं
नासापुटेन मारुतम् ॥ १९½ ॥

हितं पीडारहितं जीर्णे परिणामप्राप्तौ अशनं यस्य स एवम् । स्वस्थः अत एव धातुसाम्यादिना । त्रिभिः कुड्यैः प्राकारैः आवृते निश्शब्दे गृहे निर्बाधे वा वने गिरिगुहादौ वा सुखावस्थितिहेतुत्वात् सुष्ठु शोभने चेलाजिनाद्युत्तरे आसने पीठपट्टादौ स्थितः यद्वा अभ्यासवशात् सुष्ठु स्थैर्यसुखहेतौ आगमान्तरेषूपदिष्टलक्षणे पद्मस्वस्तिकार्धचन्द्रादिके योगासने तिष्ठतीति स्वासनस्थः। उत्तरदिङ्मुखः । परमेश्वरं देवीं गुहं गणेशं च नत्वा । सुस्पष्टकण्ठशिरोवक्षाः स्वनासिकाप्रान्तनिहितदृष्टिः व्यवहितोत्तराधरदन्तपङ्क्तिः । पार्ष्णिभ्यां मुष्कपीडं उद्घातवशात्

उत्प्लुतौ वारयन् अकुञ्चितशरीरः सुस्थितो दन्तप्रान्त-निहितजिह्वस्सन् यथशक्ति दक्षिणेन नासापुटेन वायुं शरीरान्तस्थनाडीसंशोधनार्थं रेचयेत् बाहिः क्षिपेत् ॥१९½॥

स रेचकस्तदभ्यासात्
वेधविक्षिप्तकर्मसु ।
क्रमशश्शक्ततामेति
विकृष्टविषयेष्वपि ॥ २०½ ॥

उक्तलक्षणस्य रेचकस्याभ्यासात् क्रमेण व्यवहित-विषयेष्वपि वेधकर्मसु विक्षिप्तकर्मसु च विशारुताकारण-रूपेषु योगी शक्ततां प्राप्नोति ॥ २०½ ॥

अथ पूरकलक्षणम्—

बाह्येन वायुना मूर्तेः
यथाशक्तिप्रपूरणम् ।
पूरकस्सतदभ्यासा-
त्सुगुर्वपि विकर्षयेत् ॥ २१½ ॥

बहिष्ठेन मारुतेन यथाशक्ति मूर्तेः प्रकर्षेण पूरणं पूरकः। तस्मिन्नभ्यस्ते सुष्ठु गरिष्ठमपि शिलाद्याकर्षण-शक्तो भवेत् ॥ २१½ ॥

कुम्भकं कथयितुमाह—

**त्यागसंग्रहणे हित्वा**
**निरोधः कुम्भकस्स्मृतः ।**
**रोधशक्तिस्तदभ्यासात्**
**व्यक्तिमेत्यनिवारिता ॥ २२½ ॥**

रेचनात्मकं त्यागं पूरणरूपं सङ्ग्रहणं त्यक्त्वाऽन्तस्थस्य वायोर्निरोधात् कुम्भकः । तदभ्यासात् अव्याहतरोधशक्तिः अभिमतवस्तुस्तम्भनसामर्थ्यं व्यज्यते ॥ २२½ ॥

**तथास्य चरतो विद्वान्**
**सोमसूर्येशवर्त्मसु ।**
**तद्धर्मयोग्यतां बुद्ध्वा**
**योगी संसाधयेन्मतम् ॥ २३½ ॥**

तदभ्यासात् विधेयत्वेनास्य वायोः चरतः प्रचारज्ञो योगी मध्यवामदक्षिणनाडीचारेषु चिकीर्षितवस्त्वानुगुण्यं निश्चित्य यथाऽस्मिन् कर्मणि दक्षिणश्चरन् श्रेष्ठः अमुष्मिन् मध्यमः एतस्मिंस्तु सौम्यः प्रशस्तः इत्येवं मत्वाऽभीष्टं योगी साधयेत् ॥ २३½ ॥

तथाहि—

पूरकं कुम्भकं वाऽपि
भजेच्चन्द्रपथि स्थिते।
पुष्टिं मृत्युंजयाद्यर्थं
स्वात्मनोऽन्यस्य रेचकम् ॥ २४३ ॥

अनग्निज्वलने वृक्ष
शोषणे बीजनाशने।
स्तोभोन्मादविषोद्दीप्ति
मुखेषु....तु रेचकम् ॥ २५३ ॥

ध्यानार्चनजपाद्येषु
देहत्यागे च शांकरे।
कुम्भको रेचकश्चेष्टा
दीक्षा संस्थापनेषु च ॥ २६३ ॥

वामनाड्यवस्थिते मरुति कुम्भकपूरकौ पुष्ट्यर्थं आत्मन आप्यायनार्थं मृत्युञ्जयाद्यर्थमित्यादिग्रहणात् .... ........................च कुर्यात्। (यदुक्तं) परस्य पुष्ट्याद्यर्थं वा वामस्थं रेचकं भजेत्। इति। यदात्वनग्नि-

ज्वलनवृक्षशोषणनिर्बीजीकरणस्तोभोन्मादविषोद्दीपनप्रमु-खकार्याणि कर्तुमिष्टानि तदानीं सौरमार्गस्थेन चारेण रेचकं कुर्यात् । स्तोभः स्वल्पस्य विषज्वालादेर्बहलीकरणं शाङ्कर इति शिवाश्रयसौषुम्नमार्गस्थविषुवति कर्तव्यत-योक्तं यत्तद्ध्यानार्चनजपादिकार्यं उत्क्रान्तिर्वा तद्विषये दीक्षासंस्थापने कुम्भकरेचकाविष्टौ । संस्थापनं प्रतिष्ठा-पनम् ॥ २६$\frac{1}{2}$ ॥

अथैषां रेचकादीनां अभ्यासाय कालपरिमाणं प्रति नियमं वक्तुमाह ।

**यवीयान् मध्यमो ज्येष्ठ**
**स्सतालैर्द्वादशादिभिः ।**
**तालो द्वादशभिर्जानु**
**परिणाहपरिभ्रमैः ॥ २७$\frac{1}{2}$ ॥**

हस्तेन जानुमण्डलपरिभ्रमणं यावत्या कालमात्रया क्रियते तावतीभिर्द्वादशभिः तालाख्यः कालांशो ज्ञेयः । तैश्च तालैर्द्वादशभिः कनिष्ठः प्राणायामः । चतुर्विंशत्या मध्यमः अष्टाचत्वारिंशता श्रेष्ठः । तथोक्तं श्रीसर्वज्ञानो-त्तरे "तालद्वादशको ज्ञेयः प्राणायामस्तु कन्यसः । मध्य-श्चतुर्भिर्विंशत्या श्रेष्ठस्तद्द्विगुणो भवेत् । इति ॥ २७$\frac{1}{2}$ ॥

इत्थं प्रतिनियमप्राणरेचककुम्भकपूरकसमुदायरूपो यः प्राणायामः ।

सोऽपि ध्यानजपोपेत
स्सगर्भोऽन्यस्तदुज्झितः ।
यथा सगर्भस्स्थैर्याय
मनसो न तथेतरः ॥ २८½ ॥

सोऽप्ययं प्राणायामो ध्यानेन जपेन युक्तः । सगर्भाख्यया ज्ञेयः । यस्तु विनैव ध्यानजपाभ्यां क्रियते स निर्गर्भः । यथा च मनसस्स्थैर्यहेतुत्वं सगर्भस्य न तथा निर्गर्भस्येति सगर्भप्राणायामार्थं अभ्यासः कार्य इति तात्पर्यं ॥ २८½ ॥

प्रातर्निशाकृतं पापं
दिनान्ते च दिवाकृतम् ॥ २९ ॥

प्रभाते कृतोऽयं सगर्भप्राणायामः निशाकृतं पापं हन्ति । दिनान्ते तु कृतः स दिवाकृतं हन्ति ग्रहस्थेनेति सम्बन्धः ॥ २९ ॥

एवं च न किञ्चिन्निर्गर्भेण प्राणायामेन प्रयोजनम् । अतः किं तेनेत्याह ।

हन्त्यगर्भोऽपि देवानां
प्रचलत्वं प्रधावताम् ॥२९½॥

देवानां मनस्साहितानामिन्द्रियाणां विषयेषु अनाद्यविद्यावशात् प्रकर्षेण धावतां एष निर्गर्भः प्राणायामः सातत्येन क्रियमाणः प्रचलत्वं प्रकृष्टवेगवत्त्वं हन्ति। इन्द्रियजयकारीत्यर्थः ॥ २९½ ॥

किंच—

स्नातो भवति तीर्थेषु
सर्वक्रतुषु दीक्षितः ।
पोतः पितॄणां यश्शश्वत्
सगर्भमिममाचरेत् ॥३०½॥

यस्तु नियुक्तत्वेन इमं जपध्यानयुक्तं सगर्भमभ्यस्यति स सर्वतीर्थेषु स्नातस्य समस्ताध्वरेषु दीक्षितस्य च फलं लभते। पितॄणां च संसारोत्तरणे पोतः प्लवो भवति। तत्प्रसादात्तेऽपि भवाब्धिं समुत्तरन्तीत्यर्थः ॥ ३०½ ॥

सगर्भतामेव वक्तुमाह—

ध्यायेदध्वान्तकं देवं
जपेत्तद्वाचकं सदा ।

क्षित्यादीन्यथ तत्वानि
तद्रूपाणि कृतानि वा ॥ ३१½ ॥

सर्वाधिष्ठातृत्वेन हेतुनाऽध्वनः पर्यन्तवर्तिनं परमेश्वरं सकलकारणातीतं परमार्थत्वेन ध्यायेत्। तस्य च वाचकमन्त्रं जपेच्छब्दार्थरूपाववियुक्तौ प्राणायामसमये कुर्यादित्यर्थः। यदि वा धारणाफलं लिप्सुः पृथिव्यादीनि परमेश्वरस्वरूपाश्रयत्वेन च ध्यायेत्। सकलचिदचिद्भावाधिष्ठातृत्वेन तथा भगवतस्सर्वदा सर्वत्रावस्थितेः ॥ ३१½ ॥

अथ पृथिव्यादितत्वध्याने किं भगवद्भावनयेत्याह—

यस्मान्नाचेतनं तत्वं
सिद्धमप्युपकारकम्।
शैवं वपुरिति ध्याये
दतो यद्यत्समीहितम् ॥ ३२½ ॥

यतः किल स्वभावजडं पृथिव्यादिवस्तुजातं शिवस्वरूपाधिष्ठानं विना कृतध्यानाभ्यासतास्सिद्धमपि नोपकारकं अतः पारमेश्वरमेवैतत्सर्वं वपुरिति ध्यायेत्। अतः यद्यत्किमप्याभिप्रेतं अचिद्रूपमपि वस्तु ध्यायेत् ॥ ३२½ ॥

यतश्चैवमतः—

**सिद्धये धारणादीनां**
**वृत्तीनामनिलस्य च ।**
**सगर्भं कुम्भकं विद्वान्**
**आतिष्ठेदविखिन्नधीः ॥ ३३½ ॥**

धारणादीनां योगाङ्गानां प्राणादिवृत्तीनां च प्रागुक्तानां प्रणयनाद्यर्थानां सिद्ध्यर्थं सगर्भं कुम्भकाभ्यासं अनुद्विग्नबुद्धिस्सन्नातिष्ठेत् आचरेत् ॥ ३३½ ॥

**अयमर्कगुणं कालं**
**कृतचित्तव्यवस्थितिः ।**
**प्राप्नोति धारणाशब्दं**
**धारणासिद्धिदानतः ॥ ३४½ ॥**

अयं सगर्भः कुम्भकः द्वादशगुणं कालं चित्तवृत्तिनिरोधेन कृतस्सन् धारणाव्यपदेशं लभते । कुत इत्याह धारणासिद्धिदानतः धारणासम्बन्धिनीं सिद्धिं तथाऽभ्यस्यमानो ददाति ॥ ३४½ ॥

**स्थित्यर्थो धारणाशब्दः**
**स्थानार्थोऽप्युपचारतः ॥ ३५ ॥**
**स्थानं प्राथमिकस्येमा-**
**न्यवन्यादीनि नेतरत् ॥ ३५½ ॥**

प्राथमिकस्य प्रथमाभ्यासवृत्तस्याऽऽरुरुक्षोः पृथिव्यादीनि तत्वानि अभ्यासस्य स्थानं नत्वन्यदप्रत्यक्षमहदहङ्कारादितत्वजातमुपलभ्यमानपृथ्व्यादितत्वाभ्यासपूर्वस्तु तत्तदभ्याससुगम एवेति सर्वयोगशास्त्रेषूपदेशक्रमः ॥ ३५ ॥

अथैषामेव रूपाकृतिप्रयोजनलांछनान्यभिधत्ते—

तानि हेमहिमज्योतिः
  कृष्णस्वच्छानि रूपतः ।
वेद्यर्धमण्डलत्र्यश्र
  वृत्तपद्माकृतीनि तु ॥ ३६½ ॥

स्थैर्याप्यायनविप्लोष
  प्रेरणाशून्यताप्तये ।
भवन्ति वज्रकज्वाला
  बिन्दुशून्यान्वितानि तु ॥ ३७½ ॥

तानि पृथिव्यादीनि पञ्चतत्वानि यथासंख्यं रूपतः पीतासितोज्वलकृष्णस्वच्छानि संस्थानाच्चतुरश्रार्धेन्दुत्रिकोणपरिवर्तुळपद्माकाराणि क्रमाच्च वज्रेण वारिजेन ज्वालया बिन्दुना शून्येन च लांछितानि स्थैर्याद्यर्थं भवन्ति । तत्साधकानि सम्पद्यन्त इत्यर्थः ॥ ३७ ॥

तानि च—

बाधकान्यनुवर्तीनि
मध्यस्थान्यवगत्य च ।
योगी व्यस्तसमस्तानि
बिभृयादिष्टसिद्धये ॥ ३८½ ॥

पृथिव्यादीन्येव मित्रामित्रमध्यस्थत्वेन व्यस्तसमस्तानि बुद्ध्वा तेषु कार्येष्विष्टसिद्ध्यर्थं योगी धारयेत् ॥ ३८ ॥

अथ धारणरूपतत्फलजिज्ञासया मुनिः प्रश्नयति ।

क देशे धारणारूपं
चिन्तनीयं विपश्चिता ।
किञ्च व्यस्तसमस्तानां
फलं ब्रूहि सुरेश्वर ॥ ३९½ ॥

धारणासु यदेतद्रूपं हेमहिमज्योतिःकृष्णस्वच्छत्वादिनोपदिष्टं तत् कस्मिंस्थाने तद्विदा चिन्त्यम् । आसां च धारणानां व्यस्तसमस्तानां फलं सुराधिनाथास्मभ्यमादिशेति प्रश्नार्थः ॥ ३९ ॥

अत्र प्रतिवचनम्—

हृदि चेतसि विक्षिप्ते
　　धारयेत्क्षितिमर्थवित् ।
जलं पिपासितः कण्ठे
मन्देऽग्नौ जठरेऽनलम् ॥ ४०½ ॥

प्राणादिवृत्तिसिद्ध्यर्थं
　　हृत्कण्ठादिषु मारुतम् ।
विषाद्यभिभवे व्योम
　　तेषु यत्रोपयोगवत् ॥ ४१½ ॥

चेतसो यदा विक्षिप्तता स्यात् तदा प्रयोजनज्ञो योगी हृत्प्रदेशे पार्थिवीं धारणां स्थैर्यकारणत्वेनोक्तां धारयेत् । दुर्वारया तृषा तु यदा बाधितस्स्यात् तदा वारुणीं धारणां कण्ठे बिभृयात् । आप्यायनार्थं तस्याः प्रोक्तत्वात् । जाठरस्याग्नेर्मान्द्ये सति तत्सन्धुक्षणार्थं जठरे प्रागुक्ताम् आग्नेयीं बध्नीयात् । प्राणादिवृत्तीनां प्रागभिहितानां प्रणयनाद्यानां सिद्ध्यर्थं स्वाधीनत्वे सति तत्तत्फलसम्पादकत्वाय पूर्वोक्तेष्वेव हृत्कण्ठादिषु स्थानेषु वायवीं धारयेत् । विषोन्मादव्याध्याद्यभिभूयमानस्तु तेष्वेव हृदयादिषु मध्यात् अन्यतमे स्थाने व्योमधारणां बध्नीयात् । यत्र वा विषाद्युपघातवत्यङ्गे तथा धारणाद्युपयोगवत् सप्रयोजनं तस्मिन् धारयेत् ॥ ४१ ॥

इदानीं परस्परमेषां पृथिव्यादीनां मध्यस्थारातिमित्रत्वं विवेचयन् सर्वसाधारणत्वमाकाशस्य तावत्प्रथममभिधातुमाह ।

**खं समस्तेषु भूतेषु**
**वायुवारी शिखिक्षिती ।**
**वार्यग्नी भूमिपवनौ**
**वारिक्ष्मे चाऽनलानिलौ ॥ ४२ ॥**

**मध्यस्थारातिमित्राणि**
**चतुष्के युग्मयुग्मशः ।**
**परिज्ञायेति मतिमान्**
**योजयेदिष्टसिद्धये ॥ ४३ ॥**

आकाशस्तावद्व्यापकत्वात् अन्तर्वर्तित्वेन सर्वेषामवकाशदायित्वेन च मित्रमेषां ज्ञेयम् । वायुवारीशिखिक्षितीत्यादेश्चतुष्कत्रयादेकैकस्मिन् चतुष्के यथाक्रमं (**युग्मयुग्मश इति**। द्वयं द्वयं क्रमान्मध्यस्थारातिमित्राणि एतानि बोद्धव्यानि । तथाहि वायुवारी शिखिक्षितीत्याद्ये चतुष्के जलपवनयोः क्षित्यग्न्योश्च परस्परं न मित्रत्वं न शत्रुभावः

इति मध्यस्थत्वमेषां बोद्धव्यम् । वार्यग्नी भूमिपवनाविति अत्राऽपि मध्यमचतुष्के बाध्यबाधकभावेन परस्परमेषाञ्च-तुर्णाम् अवस्थितेः अरातित्वं शत्रुता । **वारिक्ष्मे चान-लानिलावि**त्यत्र तु तृतीयेऽस्मिन् चतुष्के भूजलयोर्वा-य्वग्न्योश्चान्योन्यपोषकत्वान्मित्रत्वमित्येवं परिज्ञाय बुध्वा प्राज्ञो योगी तथातथा साधकत्वेन वा यथावसरमिष्टसिद्ध्यर्थे एतान् प्रयुञ्जीत ॥ ४२–४३ ॥

अथ विद्यापादान्तर्गतप्रत्ययादिविचारप्रकरणे प्रा-णादिवायूनां स्वरूपोक्तौ "स्थानं यद्यस्य धारणे । जयः फलं वाच्यशेषं पत्या स्कन्धे समीरितम्" इति यदुक्तं ततः प्राणादिवृत्तीनां स्थानं साधारणं फलं च ज्ञातुं मुनिः प्रश्नयति ।

**कानि प्राणादिवृत्तीनां**
**स्थानान्यस्मिन् शरीरके ।**
**जितासु तासु किं वा स्यात्**
**इति ब्रूहि सुरोत्तम ॥ ४४ ॥**

प्राणापानादिवृत्तीनां प्रणयनापनयनाद्यानां कानि स्थानानि येषु तज्जयः कार्यः । तासु च प्राणादिवृत्तिषु

जितास्त्वस्मिन् शरीरे किं फलिष्यतीति भगवन्निन्द्राऽस्मा-
कमाचक्ष्वेति प्रश्नार्थः । व्यापकस्याप्यात्मनः तत्कृतम-
व्यापकत्वं कुत्सितत्वं वा द्योतयितुं कप्रत्ययः ॥ ४४ ॥

अत्रोत्तरम् ।

**तस्य हृत्कण्ठनाभ्यङ्ग**
**पृष्ठदेशेषु धारणात् ।**
**जयः प्रणयनादीनां**
**वृत्तीनां योगिनो भवेत् ॥ ४५ ॥**

तस्य प्रागुक्तस्य प्राणादिरूपतया स्थितस्य वायोः
हृदादिपृष्ठान्तेषु पञ्चसु स्थानेषु रोधात्प्रणयनादीनां प्राणा-
दिवृत्तीनां जयो भवति योगिनः ॥ ४५ ॥

**जितप्रणयनो धत्ते**
**स्वेच्छया देहमात्मनः ।**
**जितापनयनोऽश्नाति**
**शकृदादि जहाति न ॥ ४६ ॥**

**विजितोन्नयनोऽभ्येति**
**वाग्वशित्वादिकान् गुणान् ।**

समानवृत्तिविजयात्
भवेत्त्यक्तजरो वशी ॥ ४७ ॥

वपुर्विहारवशिता
भवेद्विनमने जिते ।
पंकाम्बुकण्टकासङ्गो
वीर्यमक्षयमद्भुतम् ॥ ४८ ॥

जिता प्रणयनाख्या प्राणवृत्तिर्येन स एवंविधो योगी यावद्रुचि स्वेच्छया स्वदेहं धारयति । "वृत्तिः प्रणयनं नाम यत्तज्जीवनमुच्यत" इति प्रणयनस्य जीवनरूपत्वेनोक्तत्वात् । जितात्वपनयनाख्यापानवृत्तिर्येन सतादृग्विधो योगी अश्नन्नपि निर्मलदेहो भवति । अपानजयाद्धि विण्मूत्रादिमलभावेन नास्य पानाशनादि परिणमति । अपि तु रसधातुभावेनैव । अन्तश्शकृदादिमलोज्झित एवैष सम्पद्यते । सर्वदेहिनां हि रसमलधातुभावेनान्नपानपरिणतिर्भवति । विजिता चोन्नयनाख्योदानवृत्तिर्येन असौ कवित्ववक्तृत्वरूपवाक्स्वातन्त्र्यप्रभृतीन् गुणान् प्राप्नोति । येन तु समानवृत्तिर्विजिता स सर्वदा जरावर्जितस्सर्वसहः सर्वस्वदेहो भवति । विनमनाख्यव्यान-

